( नान्द्यन्ते )

कविना कटाक्षितामिति वदन्ति । अत एव पत्रावलीरूपा नान्दीयम् । तदुक्तं तत्रैव-वाच्यार्थबीजरचिता शंकरादिपदान्विता । संयुक्ता चन्द्रपद्माभ्यां पत्रावल्यभिधीयते इति ॥ ३ ॥ नान्द्यन्ते इति । नन्विदमसंगतम् । नहि नान्दीपाठानन्तरं सूत्रधारो रङ्गभूमिं प्रविशति । किंतु प्रविश्य पठति । न चान्येनैव नान्दी पठनीया । सूत्रधारपठनीयत्वेन तस्या उक्तत्वात् । सूत्रधारः पठेदेनां मध्यमं स्वरमाश्रितः । इति वचनात् । उच्यते—नान्दी तावद्रङ्गप्रवेशानन्तरं सूत्रधारेणैव पठनीया । नान्द्यन्ते सूत्रधार इति सूत्रधारसाम्यात्स्थापके प्रयोगः । तदुक्तं तत्रैव— नान्दीं प्रयुज्य निष्क्रामेत्सूत्रधारः सहानुगः । स्थापकः प्रविशेत्पश्चात्सूत्रधारगुणाकृतिः । पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते । प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः । इति ॥ अत एव कुत्रचित्पुस्तके नान्द्यन्ते स्थापकः इत्येव पाठः । केचित्तु—नावश्यं नान्दी सूत्रधारेण पठनीया । किंतु मङ्गलार्था येन केनचित्पठ्यते । सूत्रधारश्च रङ्गपूजार्थं प्रविष्ट इति स एव पठति । तदुक्तम्—नाट्यस्य यदनुष्ठानं तत्सूत्रं स्यात्सबीजकम् । रङ्गदैवतपूजाकृत्सूत्रधार उदीरितः । इत्याहुः ॥ तन्न । सूत्रधारः पठेदेनां मध्यमं स्वरमाश्रितः । इति भरतविरोधात् ॥ तत्र सूत्रधारस्योपलक्षणत्वे प्रमाणाभावात् । अन्ये तु—नान्द्यवसाने सूत्रधारः प्रविशति वदति वा । तदन्ते सूत्रधारस्यैव श्रुतत्वात्सापि तेनैव पठनीया । प्रथमं च सूत्रधार इति नोक्तम् । मङ्गलार्थं देवतानमस्कारादेरेव विधानादित्यूचुः । ननु प्रस्तावनायाः पूर्वं बहूनि नाट्याङ्गानि सन्ति तानि किमिति नोक्तानि । तदुक्तं तत्रैव—रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः । ऋतुं कंचिदुपादाय भारतीं वृत्तिमाश्रयेत् । भेदैः प्ररोचनायुक्तैर्वीथी-

१. पाठान्तरे नान्दी—

जयति स नाभिर्जगतां स्वनाभिरन्ध्रोद्भवज्जगद्बीजः ।
दामोदरो निजोदरगह्वरनिक्षिप्त ( विनिविष्ट ) जगद्दण्डः ॥ १ ॥
जयति स भगवान्कृष्णः शेते यः शेषभोगशय्यायाम् ।
मध्ये पयःपयोधरपर इवाम्भोनिधिः कृष्णः ॥ २ ॥

अपि च ।

उत्तिष्ठन्त्या रसान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकबरीभारमंसे ( सं ) वहन्त्या ।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥ ३ ॥

कालिन्दीजलकालकालियकुलक्रीडाविनाशैपिणा
दुष्टारिष्टकठोरकण्ठवलनाविश्लिष्टकण्ठस्रजा ।
रोहत्केशिकिशोरदन्तपदवीक्लिष्टेन पुष्णातु, वो
दोष्णा दुर्धरदैत्यदर्पदलनद्वारेण दामोदरः ॥ एतदधिकमेकस्मिन्पुस्तके ।

**सूत्रधारः**—[1]अलमतिप्रसङ्गेन ।

**श्रवणाञ्जलिपुटपेयं विरचितवान्भारताख्यममृतं यः ।**
**तमहमरागम[2]कृष्णं कृष्णद्वैपायनं वन्दे ॥ ४ ॥**

([3]समन्तादवलोक्य) तत्र भवन्त[4]ः परिषदग्रेसराः । विज्ञाप्यं नः किंचिदस्ति ।

**कुसुमाञ्जलिरपर इव प्रकीर्यते काव्यबन्ध एषोऽत्र ।**
**मधुलिह इव मधुबिन्दून्विरलानपि भजत गुणलेशान् ॥ ५ ॥**

तदिदं कवेर्मृगराजलक्ष्मणो भट्टनारायणस्य कृ[5]तिं वेणीसंहारं नाम नाटकं

---

प्रहसनामुखैः । सूत्रधारो नटीं ब्रूते मार्षं वाथ विदूषकम् । स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम् । अत आह—अलमिति । अयमाशयः--पूर्वोक्तान्यङ्गानि न भवन्ति । किंतु परिषदोऽभिमुखीकरणानि । सा चेत्स्वयमेव कृतावधाना नवनाटकदर्शनोत्सुका च तत्रान्यत्प्रयुज्यमानं रसभङ्गाय भवेदिति कृतं तत्प्रणयनेन । अन्यथा तस्या रसविच्छेदः स्यादिति । इदानीं व्यासप्रशंसामाह—श्रवणेति । **तं कृष्णद्वैपायनं** व्यासम् **अहं वन्दे** नमस्करोमि । यत्तदोर्नित्याभिसंबन्धादाह--**यः भारत**नामकम् **अमृतं विरचितवान्** अकरोत् । आप्यायनादिकर्तृत्वेनामृतत्वं भारतस्य । कीदृशम् । **श्रवण** कर्णः तदेव **अञ्जलिपुटं** तेन **पेयं** श्रव्यमथ च पानीयम् । अन्यदप्यमृतमञ्जलिपुटेन पीयते । तं कीदृशम् । **अरागं** रागशून्यम् । विषयासक्तिहीनमित्यर्थः । अत एव **अकृष्णं** निष्कलुषम् । तदिह प्रतिपाद्यभारतकथाया आदिकर्ता व्यासस्तत्त्वविवेचेति तत्कीर्तनं शुभकृदेव भवतीति तदेव कृतमिति भावः ॥ ४ ॥ तत्रभवतो मान्यान् । परिषदग्रेसरान्सभापुरोगण्यान् । विज्ञाप्यं संबोध्यम् । कुसुमाञ्जलिरिति । **एष काव्यबन्धः अपरः कुसुमाञ्जलिरिव प्रकीर्यते** विस्तार्यते । **अत्र** काव्यबन्धे । **विरलानपि** स्वल्पानपि **गुणलेशान्** गुणकणान् **भजत** गृह्णीत । **हे सभ्याः** इति शेषः । [ **मधुलिह इव** ] यथा मधुकराः कुसुमाञ्जलौ **मधुबिन्दून् विरलानपि** गृह्णन्ति तथेत्यर्थः । अनेन मदीयनाटके स्वल्पा अपि गुणा गुणिभिर्ग्राह्या इत्यौद्धत्यपरिहारोऽपि कृत इति ध्वनितम् ॥ ५ ॥ मृगराजलक्ष्मणः सिंहचिह्नस्य । नारायणभट्टस्य । कृतिनाटकशब्दयोरजहल्लिंगतया सामानाधिकरण्यम् । वेणीसंहारमिति वेण्या द्रौपदीकेशरचनाविशेषेण हेतुना संहारो विनाशो दुःशासनादीनां यत्र तत्तथा । यद्वा । वेण्याः संहारो मोक्षणं यत्र तत्तथा । भारतानन्तरमिह वेणीमोक्षणकथनात् । नाटकमिति । तदुक्तं तत्रैव--प्रकृतित्वादथान्येषां भूयो रसपरिग्रहात् । संपूर्णलक्षणत्वाच्च पूर्वं नाटकमुच्यते ॥ नाटके सूच्यमर्थं तु पञ्चभिः प्रतिपादयेत् । विष्कम्भ-

---

१. अलमतिविस्तरेण. २ अतृष्णम्. ३ एतत् क्वचिन्नास्ति; सविनयं परिषदमुपसृत्य कृताञ्जलिः इत्येकस्मिन् पुस्तके. ४ तद्भवन्तः; तत्रभवन्तः; तत्रभवतः परिषदग्रेसरान् (टी० ); ०सरान् सर्वान् विज्ञापयामि इ. पा. ५ कृतिः; अभिनवकृतिम्.

चूलिकाङ्कास्याङ्कावतारप्रवेशकैः ॥ वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः। संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः॥ तद्वदेवानुदात्तोक्त्या नीचपात्रप्रयोजितः। प्रवेशोऽङ्कद्वयस्यान्तः शेषार्थस्योपसूचकः॥ अङ्कद्वयस्यान्तरिति प्रथमेऽङ्के न कर्तव्य इत्यर्थः। अन्तर्जवनिकासंस्थैश्चूलिकार्थस्य सूचना । अङ्कान्तपात्रैरङ्कास्यं छिन्नाङ्कार्थस्य सूचना॥ अङ्कावतारस्त्वङ्कान्ते पातोऽङ्कस्याविभागतः। एभिः संसूचयेत्सूच्यं दृश्यमङ्कैः प्रदर्शयेत्। दूराध्वानं वधं युद्धं राज्यदेशादिविप्लवम्। संरोधं भोजनं स्नानं सुरतं चानुलेपनम् । अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत्। अङ्गेनैव निवध्नीयान्नैवाङ्केन कदाचन। नाधिकारिवधः क्वापि त्याज्यमावश्यकं न च। एकाहाचरितैकार्थमित्थमासन्ननायकम्। पात्रैस्त्रिचतुरैरङ्कस्तेषामन्ते च निर्गमः। एवमङ्काः प्रकर्तव्याः प्रवेशादिपुरस्कृताः। पञ्चाङ्कमेतदवरं दशाङ्कं नाटकं वरम्। इति नाटकलक्षणं भरतोक्तम् ॥ तत्रैव प्रसङ्गान्नायकनायिकयोर्लक्षणम्—नेता विनीतो मधुरस्त्यागी दक्षः प्रियंवदः। रक्तलोकः शुचिर्वाग्मी रूढवंशः स्थिरो युवा। धृत्युत्साहस्मृतिप्रज्ञाकलामानसमन्वितः। शूरो दृश्यश्च तेजस्वी शास्त्रचक्षुश्च धार्मिकः। विनयः शीलसंपत्तिर्मधुरः प्रियदर्शनः। त्यागः सर्वस्वदानं स्याद्दक्षः क्षिप्र ( प्रिय ) करो मतः। प्रियंवदोऽनुत्कटवाक्सस्नेहो लोकरञ्जनः। मितप्रशस्तवाग्वाग्मी नित्यकर्मरतः शुचिः । ख्यातवंशो रूढवंशः षोडशात्त्रिंशको युवा। वाङ्मनःकर्मभिर्यश्च न चलः स स्थिरो मतः। धृतिः सर्वेषु या प्रीतिरुत्साहोऽग्लानिरेव च। स्मृतिः कालान्तरे ज्ञानं प्रज्ञा तीक्ष्णमतिर्मता । कलाश्चात्र चतुःषष्टिर्मानश्चित्तसमुन्नतिः। शूरः सङ्ग्रामनिपुणो रूपवान्दृश्य उच्यते। अतिप्रतापस्तेजस्वी शास्त्रचक्षुस्त्रयीपरः । आत्मवत्परभूतानि यः पश्यति स धार्मिकः। प्रख्यातवंशो राजर्षिर्दिव्यो वा यत्र नायकः। तत्प्रख्यातं विधातव्यं वृत्तमत्राधिकारिकम्॥ अयमर्थः—नाटके भारतादिप्रसिद्धो राजर्षिर्दिव्यो वा नायकः कर्तव्यः, न तु कविना स्वयमुत्पाद्य कथां कल्पितो नायकः कर्तव्य इति। स्वान्या साधारणस्त्रीति तद्गुणा नायिका त्रिधा। स्वकीया तत्र वक्तव्या मुग्धा मध्या प्रगल्भिता। शीलार्जवादिसंयुक्ताकुटिला च पतिव्रता। लज्जावती चापरुषा निपुणा च प्रियंवदा। साधारणस्त्री गणिका कलाप्रागल्भ्यधौर्त्ययुक् । रूपकेषु च रक्तैव कर्तव्या प्रहसं विना। अन्यस्त्री द्विविधा प्रोक्ता कन्यकोढा तथापरा । रसे प्रधाने कर्तव्या नान्योढा नाट्यवेदिभिः। कन्यानुरागमिच्छातः कुर्यादङ्गाङ्गिसंश्रयम्। इति॥ नाटके वृत्तयः प्रोक्ताश्चतस्रो नाट्यवेदिभिः । भारती कैशिकी चैव सात्वत्यारभटी तथा । तत्र शृङ्गारी कामफलावच्छिन्नो व्यापारः कैशिकी। विशोका सात्वती सत्वशौर्यत्यागार्जवैः पुनः । मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्तादिचेष्टितैः। भवेदारभटी नाम नाट्ये तिस्रस्तु वृत्तयः॥ भारती शब्दवृत्तिःस्याद्रसे रौद्रे च युज्यते। शृङ्गारे कैशिकी वीरे सात्वत्यारभटी पुनः ॥ एवमङ्गानि

प्रयोक्तुमुद्यता वयम्[1] । तदत्र कविपरिश्रमानुरोधाद्वा[2] उदात्तकथावस्तु-गौरवाद्वा नवनाटकदर्शनकुतूहलाद्वा भवद्भिरवधानं दीयमानमभ्यर्थये ।

(नेपथ्ये)

भाव त्वर्यतां त्वर्यताम् । एते खल्वार्यविदुराज्ञया पुरुषाः सकलमेव शैलूषजनं व्याहरन्ति—प्रवर्त्यन्ताम्[3]अपरिहीयमानमातोद्यविन्यासादिका विषयः । प्रवेशकालः किल तत्रभवतः पाराशर्यनारदतुम्बरुजामदग्न्यप्रभृतिभिर्मुनिवृन्दारकैरनुगम्यमानस्य भरतकुलहितकाम्यया[4] स्वयं प्रतिपन्नदौत्यस्य[5] देवकीसूनोः[6] श्रीकृपाणेर्महाराजदुर्योधनशिबिरं[7] प्रति प्रस्थातुकामस्य इति ।

---

कार्याणि प्रधानस्याविरोधतः । आदौ विष्कम्भकं कुर्यादङ्कं वा कार्ययुक्तितः ॥ अपेक्षितं परित्यज्य नीरसं वस्तुविस्तरम् । यदा संदर्शयेच्छेषं कुर्याद्विष्कम्भकं तदा ॥ यदा तु सरसं वस्तु मूलादेव प्रवर्तते । आदावेव तदाङ्कः स्यादामुखाक्षेपसंश्रयः ॥ प्रत्यक्षनेतृचरितो विन्दुव्याप्तिपुरःसरः । अङ्को नानाप्रकारार्थसंविधारसाश्रयः ॥ अनुभावविभावाभ्यां स्थायिना व्यभिचारिभिः । गृहीतमुक्तैः कर्तव्यमङ्गिनः परिपोषणम् ॥ न चातिरसतो वस्तु दूरं विच्छिन्नतां नयेत् । रसं वा न तिरोदध्याद्वस्त्वलंकारलक्षणैः ॥ एको रसोऽङ्गी कर्तव्यो वीरः शृङ्गार एव वा । अङ्गमन्ये रसाः सर्वे कुर्यान्निर्वहणेऽद्भुतम् ॥ शृङ्गारहास्यकरुणरौद्रवीरभयानकाः । बीभत्सोऽद्भुत इत्येवमष्टौ नाट्ये रसाः स्मृताः ॥ यद्यपि अविकारस्थितिः शान्तः 'शान्तस्तु नवमो रसः' इत्यस्ति तथापि न स सर्वसंमतो न नाट्यविषयश्चेति न पृथगुक्तः । स्थायिभावाभावादस्य नाट्यविषयता न संभवतीति । [तदत्रेति] उदात्तं हृद्यम् । कथावस्तु कथाप्रधानं नायकः । तस्य गौरवादाह्लादात् । नेपथ्यं रङ्गभूमिः । नेपथ्यं रङ्गभूमौ स्यान्नेपथ्यं तु प्रसाधने । इति विश्वः ॥ भावो मान्यः । मान्यो भावेति वक्तव्यः इत्यमरः । खलुशब्दो वाक्यभूषायाम् । आर्यश्चासौ विदुरश्चेति विशेषणसमासः । विदुरोऽत्र नायकः तस्याज्ञयादेशेन । शैलूषो नटः । अपरिहीयमानमपरित्यज्यमानं यथा स्यादेवम् । विषयः प्रकाराः प्रवर्त्यन्ताम् । कीदृशाः । आतोद्यविन्यासो वीणादिवादनमादौ येषां ते तथा । चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम् । इत्यमरः ॥ किल निश्चये । तुम्बरुर्मुनिविशेषः । वृन्दारकौ रूपिमुख्यौ इत्यमरः । भरतकुलं युधिष्ठिरादिवंशः । काम्या इच्छा । प्रतिपन्नदौत्यस्याङ्गीकृतदूतकर्मणः । सूनोः पुत्रस्य । सूनुः पुत्रकनिष्ठयोः । इति

---

१ स्मः. २ रोधादुदात्तकथावस्तुगौरवान्नवनाटकदर्शनकुतूहलाच. ३ तामपरिहीणम्; एतन्नास्ति क्वचित्. ४ कांक्षया. ५ दूत्यस्य. ६ देवस्य च० ७ शिबिरसंनिवेशं (टी.)

**सूत्रधारः**—(आकर्ण्य। सानन्दम्) अहो नु खलु भोः भगवता जगत्प्र[1]भवस्थितिनिरोधप्रभविष्णुना विष्णुनाद्यानुगृहीतमिदं भरतकुलं सकलं च [2]राजकमनयोः कुरुपाण्डवराजपुत्रयोराहवकल्पान्तानलप्रश[3]म हेतुना [4]स्वयं सान्धिकारिणा कंसारिणा दूतेन। [5]तत्किमिति पारिपार्श्विक नारम्भयासि कुशीलवैः सह संगीत[6]कम्।

(प्रविश्य)

**पारिपार्श्विकः**—भवतु। आरम्भयामि। कं समयमाश्रित्य गीयताम्[7]।

**सूत्रधारः**—नन्वमुमेव तावच्चन्द्रातपनक्ष[8]त्रक्रौञ्चहंसकुलसप्तच्छद कुमुदपुण्ड[9]रीककाशकुसुमपरागधवलित[10]गगनदिङ्मण्डलं स्वादुजलजलाशयं शरत्समयमाश्रित्य प्रवर्त्यतां संगीतकम्। तथा ह्यस्यां शरदि

**सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः।**
**निपतन्ति धार्तराष्ट्राः कालवशान्मेदिनीपृष्ठे॥ ६॥**

**पारिपार्श्विकः**–(ससंभ्रमम्।) भाव शान्तं पापम्। प्रतिहतममङ्गलम्।

---

विश्वः॥ शिविरसंनिवेशः सैन्यविन्यासः। तं प्रति प्रवेशकालश्चक्रपाणेरित्यन्वयः। अहो नु खलु भोः इत्यव्ययसमुदायोऽत्याश्चर्याविष्कारे। निरोधो विनाशः। प्रभविष्णुना प्रभुणा। राजचक्रं क्षत्रियसंघः। आहवो युद्धम्। कल्पान्तानलः प्रलयाग्निः। स्वयं प्रतिपन्नदौत्येनेत्यन्वयः। कंसारिः कृष्णः **पारिपार्श्विक** इति। सूत्रधारस्य पार्श्वे यः प्रकरोत्यमुना सह। काव्यार्थसूचनालापं स भवेत्पारिपार्श्विकः। इति भरतः॥ कुशीलवो नटः॥ भरतास्तु कुशीलवाः इत्यमरः। संगीतकमेलकम्। ऐक्यमिति यावत्। नक्षत्रमश्विन्यादि। ग्रहाः सूर्यादयः। क्रौञ्चः हंकूह इति प्रसिद्धः पक्षी। सप्तच्छदः तिमन इति प्रसिद्धो वृक्षः। रक्तोत्पलं कोकनदम्। इत्यमरः। तथा हि इत्ययं शब्द उक्तविभावनार्थः। श्लेषच्छायोपशोभैश्च समुद्दिष्टं विसर्पति। यत्फलोदयपर्यन्तं तद्बीजमिति कीर्तितम्॥ इति भरतात्॥ श्लेषेण बीजमाह—**सत्पक्षा इति**। **धार्तराष्ट्राः** हंसविशेषाः। **कालवशात्** शरन्माहात्म्यात् **मेदिनीपृष्ठे निपतन्ति**। मानसं सरः परिहृत्यायान्तीत्यर्थः। अथ च **धार्तराष्ट्राः** धृतराष्ट्रपुत्रा दुर्योधनादयो भूमौ पतन्तीत्यर्थः। कीदृशाः। [सन्तः पक्षा येषां ते] **सत्पक्षाः** श्रेष्ठपक्षयुक्ताः श्रेष्ठसैन्यवन्तश्च।

---

१ जगदुत्पत्तिस्थिति; सकलजगतः प्र०प्र०. २ राजचक्रम्, राजन्यकम्. ३ प्रशमनहेतुना अनेन. ४ स्वयं प्रतिपन्नदौत्येन संधिकारिणा. ५ अस्मात्पूर्वं (नेपथ्ये।) इत्यधिकं पारिपाठ इति नास्ति च क्वचित्. ६ संगीतकमेलकम् (टी.). ७ संगीतकमारम्भयामि. ८ नक्षत्रग्रह (टी.) ९ कोकनद. १० गगनेति नास्ति क्वचित्.

**सूत्रधारः**—( सवैलक्ष्यास्मितम् ) मारिष शरत्समयवर्णनाशंसया हंसा धार्तराष्ट्रा इति व्यपदिश्यन्ते । तत्किं शान्तं पापं प्रतिहतममङ्गलम् ।

**पारिपार्श्विकः**—न खलु न जाने । किंत्वमङ्गलाशंसयास्य वो वचनस्य यत्सत्यं कम्पितमिव मे हृदयम् ।

**सूत्रधारः**—मारिष ननु सर्वमेवेदानीं प्रतिहतममङ्गलं स्वयं प्रतिपन्नदौत्येन सन्धिकारिणा कंसारिणा । तथाहि ।

**निर्वाणवैरदहनाः प्रशमादरीणां**
**नन्दन्तु पांडुतनयाः सह माधवेन ।**
**रक्तप्रसाधितभुवः क्षतविग्रहाश्च**
**स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥ ७ ॥**

( नेपथ्ये । साधिक्षेपम् । )

आः दुरात्मन्वृथा मङ्गलपाठक शैलूषापसद ।

---

**मधुरागिरः** मधुरवाणीकाः । **प्रसाधिता आशा** दिशो यैस्ते तथा । **मदोद्धता आरम्भा** येषां ते । 'मदो हर्षोऽहंकारश्च' 'धार्तराष्ट्राः' सितेतरैः इत्यमरः ॥६॥ इह श्लोके **प्रवर्तकरूपा** प्रस्तावना । यदुक्तं तत्रैव—प्रवृत्तकालमाश्रित्य वर्णना या विधीयते । तदाश्रयस्य पात्रस्य प्रवेशेन प्रवर्तकम् ॥ इति ॥ आर्याच्छन्दः । यत्र पटाक्षेपेण पात्रप्रवेशस्तत्र प्रविश्येति प्रयुज्यते । शान्तं पापमनाकाङ्क्षे इति भरतः तथा च न वक्तव्यमित्यर्थः । सवैलक्ष्यं सलज्जम् । किंचिन्न्यूनस्तु मारिषः इत्यमरः । मारिष एव मर्षणान्मार्ष इति । मार्षो मारिष इत्यपि इति शब्दभेदः । न खलु न जाने किंतु जानाम्येव । खलुशब्दो निषेधे । अलंखल्वोः प्रतिषेध — इति सूत्रम् । वो युष्माकम् । यत्सत्यमसंभाव्येऽर्थे इति भरतः । तथा च यत्सत्यम् । असंभावनीय-मिदमित्यर्थः । **निर्वाणेति** । **निर्वाणः** निस्तेजीकृतः [ शान्तः ] **वैरमेव दहनः** यैः [ येषां ] ते तथा । **अरीणां प्रशमात्** उपशमात् । विनाशादिति यावत् । **रक्तेभ्यः** सानुरागेभ्यः **प्रसाधिता** दत्ता भूः यैः ते तथा । अथ च रक्तेन रुधिरेण प्रसाधितालंकृता भूर्यैस्ते [ क्षतः अन्तं गतः विग्रहः युद्धं येषां ते । पक्षे क्षता जातव्रणा विग्रहा देहा येषां ते ।] विग्रहो युद्धं शरीरं वा । **स्वस्था** सुस्थिताः [पक्षे स्वर्गस्थाः ] मृताश्च । विग्रहः समराङ्गयोः इति धरणिः । सुस्थिते च मृते स्वस्थः इति विश्वः ॥ ७ ॥ लेशगण्डोऽयम् । यदुक्तं—तत्रैव—द्व्यर्थता यत्र वाक्यानां लेशेनापि प्रतीयते । यः शब्दभङ्गिगतो लेशगण्डः स उच्यते ॥ आः शब्द

---

१. हंसान्धार्तराष्ट्रानिति व्यपदिशामि न धृतराष्ट्रसुतान् इ. पा. २. न तु राजपुत्रास्तात्किं प्रलपसि शान्तं पापं प्रतिहतममङ्गलमिति; एतन्नास्त्येव क्वचित्. ३ भाव न खलु । किंत्वमङ्गलत्वादस्य वचसः इत्य० भवतु न जाने । अम० ४ दूत्येन. ५ आः पाप दुरात्मन.

लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।
आकृष्टपाण्डववधूपरिधानकेशाः
स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः ॥ ८ ॥
( सूत्रधारपारिपार्श्विकावाकर्णयतः । )

**पारिपार्श्विकः**—भाव कुत एतत् ।

**सूत्रधारः**—( पृष्ठतो विलोक्य ) अये एष खलु वासुदेवगमनात्कुरुसंधानममृष्यमाणः पृथुललाटतटघटितविकटकीनाशतोरणत्रिशूलायमानभीषणभ्रुकुटिरापिबन्निव नः सर्वान्दृष्टिपातेन सहदेवेनानुगम्यमानः क्रुद्धो भीमसेन इत एवाभिवर्तते । तन्न युक्तमस्य पुरतः स्थातुम् । तदित आवामन्यत्र गच्छावः । ( इति निष्क्रान्तौ । )

## प्रस्तावना ।

---

आक्षेपे । शैलूषो नटः [ चासौ ] अपसदः अधमः [ च ] । **लाक्षागृहेति** । [ **लाक्षागृहे** यः **अनलः** अग्निसमर्पणं स च विषमिश्रितमन्नं **विषान्नं** च **सभाप्रवेशश्च** तैः । ] जतुगृहाग्निविषलड्डुककपटद्यूतादिभिः नः अस्मान् [ **प्राणेषु वित्तनिचयेषु च** ] **प्रहृत्य** इत्यन्वयः । पाण्डववधूर्द्रौपदी । परिधानम् परिधानीयवस्त्रम् । [ **आकृष्टाः पाण्डववध्वाः परिधानं च केशाश्च** यैः । ते **धार्तराष्ट्रा मयि जीवति स्वस्थाः** सुखिनो **भवन्ति** किम् । नैवैतदित्यर्थः । ] ॥ ८ ॥ इहावसाने विद्धकम् । यदुक्तं तत्रैव—नाटकीयफले हेतुभूतस्याध्यक्षकीर्तनम् । आफलोदयमुत्साहावसानाभ्यां हि विद्धकम् । अये इति निपातोऽव्यासङ्गादिनाऽनाकलितस्याकलने संभ्रमाभिधायी । अये चित्रेऽवधारणे इति भरतः । [ पृथु विशालं यत् ललाटतटं तत्र घटिता विकटं यत्कीनाशस्य कालस्य तोरणं तत्र त्रिशूलवदाचरन्ती भीषणा भ्रुकुटिर्यस्य । ] कुटिलभ्रूभागो भ्रुकुटिः । दृष्टिपातेनालोकितेन । पृथुललाटेत्याद्यस्यैव विशेषणम् । इत एवाभिवर्तत इहैव तिष्ठति । निष्क्रान्तौ सूत्रधारपारिपार्श्विकौ । **प्रस्तावनेति** । प्रस्तावना आमुखसंधिपर्यायः । तदुक्तं तत्रैव—सूत्रधारेण सहिताः संलापं यत्र कुर्वते । नटी विदूषको वापि पारिपार्श्विक एव वा । [ चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः । ] आमुखं नाम तस्यैव सैव प्रस्तावना मता ॥ इति । इयं प्रस्तावना वाक्यार्थकथोद्घातरूपा । सूत्रधारस्य वाक्यं वा यत्र वाक्यार्थमेव वा । गृहीत्वा प्रविशेत्पात्रं कथोद्घातः स उच्यते ॥ इति भरतः ।

---

१ निवहेषु. २ आकृष्य—केशान्. ३ भवन्तु. ४ आकर्ण्य. सूत्रधारः—( आकर्ण्य सभयं नेपथ्याभिमुखमवलोक्य । ) ५ पृष्ठतोऽवलोक्य सभयम् ६ कथमयम्. ७ विकटभ्रुकुटिना दृष्टिपातेनापिबन् ( टी. ) ८ कीनाशनगर. ९ माननासास्तम्भभीष० ।

( ततः प्रविशति सहदेवानुगम्यमानः क्रुद्धो भीमसेनः । )

**भीमसेनः**—आः[1] दुरात्मन् वृथामङ्गलपाठक शैलूषापसद । ( लाक्षागृहानल—इत्यादि पुनः पठति । )

**सहदेवः**—( सानुनयम् ) आर्य मर्षय मर्षय । अनुमतमेव नो भरतपुत्रस्यास्य वचनम् । निर्वाणवैरदहना[3] इति यथार्थमेव । सभृत्याः कुरवः क्षतजालंकृतवसुंधराः क्षतशरीराश्च स्वर्गस्था भवन्त्विति ब्रवीति।

**भीमसेनः**—( सोपालम्भम् । ) न खलु न खल्वमङ्गलानि चिन्तयितुमर्हन्ति भवन्तः कौरवाणाम् । सन्धेयास्ते भ्रातरो युष्माकम् ।

**सहदेवः**—( सरोषम् । ) आर्य

> धृतराष्ट्रस्य तनयान्कृतवैरान्पदे पदे ।
> राजा न चेन्निषेद्धा स्यात्कः क्षमेत तवानुजः ॥ ९ ॥

**भीमसेनः**—एवमिदम् । अत एवाहमद्यप्रभृति भिन्नो भवद्भ्यः । पश्य ।

> प्रवृद्धं यद्वैरं मम खलु शिशोरेव कुरुभि-
> र्न तत्रार्यो हेतुर्न भवति किरीटी न च युवाम् ।
> जरासंधस्योरःस्थलमिव विरूढं पुनरपि
> क्रुधा संधिं भीमो विघटयति यूयं घटयत[6] ॥ १० ॥

---

प्रविशतीति । सर्वत्र प्रवेशे पूर्वसूचितस्यान्वयः । नासूचितस्य पात्रस्य प्रवेशः इति भरतवचनात् । मर्षय क्षमस्व । भरतपुत्रस्य नटस्य अन्यथा मरणार्थतया । सोपालम्भं विसंवादसहितम् । वीप्सितो न खलुशब्दोऽत्यन्तानिषेधवचनः । धृतराष्ट्रस्येति । पदे पदे । प्रतिस्थानमित्यर्थः । चेच्छब्दो यद्यर्थे । [राजा धर्मः निषेद्धा न स्यात् चेत् पदे पदे कृतवैरान् धृतराष्ट्रस्य तनयान् कः तवानुजः सहेत इत्यन्वयः । ] निषेद्धा निषेधकः ॥९॥ इह श्लोके यद्यपि वाक्ये गर्भितनामालंकारदोषस्तथापि रसान्तरद्योतनाय तद्वाक्यमिति न दोषकक्षामवगाहत इत्यवधेयम् । इह अहं भिन्नो भवद्भ्यः इत्यनेन भेदसंधिः । यदाह—भेदस्तु भिन्नता इति । प्रभृतिशब्द आरम्भपर्यायः । प्रवृद्धमिति । [ शिशोरेव मम कुरुभिः यद्वैरं प्रवृद्धं खलु तत्र तस्य आर्यः धर्मः हेतुः न भवति ] प्रवृद्धमुपचितम् । खलु निश्चये । कुरुभिरिति सहार्थे तृतीया । आर्यो राजा । किरीटी अर्जुनः नहेतुः भवति । युवां नकुलसहदेवौ न हेतू भवतः । [ यस्मादेवं तस्मात्

---

१ आः पाप दुरात्मन्. २ इति पूर्वोक्तं. ३ ०वैरदहनाः...इति पठित्वा अन्यथाभिनयति. ४ सावेगम्. ५ ( सरोषम् ) एव० ६ च कुरुत.

**सहदेवः**— ( सानुनयम् । ) आर्य एवमतिसंभृतक्रोधेषु युष्मासु कदाचित्खिद्यते गुरुः ।

**भीमसेनः**—किं नाम खिद्यते गुरुः । गुरुः खेदमपि जानाति । पश्य ।

**तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां**
**वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।**
**विराटस्यावासे स्थितमनुचितारम्भनिभृतं**
**गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥ ११ ॥**

तत्सहदेव निवर्तस्व । एवं चातिचिरप्रवृद्धामर्षोद्दीपितस्य भीमस्य वचनाद्विज्ञापय राजानम् ।

**सहदेवः**—आर्य किमिति ।

**भीमसेनः**—एवं विज्ञापय ।

**युष्मच्छासनलङ्घनांहसि मया मग्नेन नाम स्थितं**
**प्राप्ता नाम विगर्हणा स्थितिमतां मध्येऽनुजानामपि ।**
**क्रोधोल्लासितशोणितारुणगदस्योच्छिन्दतः कौरवा-**
**नद्यैकं दिवसं ममासि न गुरुर्नाहं विधेयस्तव ॥ १२ ॥**

---

जरासन्धस्य उरःस्थलमिव पुनः विरूढमपि सन्धिं भीमः क्रुधा विघटयति यूयं घटयत । ] विरूढं [ सुघटितं सुश्लिष्टं च ] जातं स्मृतं च । संधिर्ना संघटनके संधानेऽपि च कथ्यते । इति विश्वः ॥ १० ॥ तथाभूतामिति । नृपसदसि तथाभूतां ऋतुमतीं अपि आकृष्टकेशामाकृष्टाम्बरां च । पाञ्चालतनयां द्रौपदीम् । वन उषितमस्माभिर्वासः कृतः। तद्दृष्ट्वेत्यन्वयः। स्थितमवस्थानं कृतम् । तद्दृष्ट्वेत्यन्वयः। अनुचितारम्भाः कन्यालंकरणादिकास्तैर्निभृतं गुप्तं यथा स्यादेवम् । मयि खिन्ने सति गुरुः [ खेदं भजति ] अद्यापि कुरुषु खेदं न वहतीत्यन्वयः ॥ ११ ॥ [ अतिचिरादतिचिरं वा प्रवृद्धो यः अमर्षः तेनोद्दीपितस्य ]। युष्मदिति । [ युष्मच्छासनलंघनमेव अंहः पापं तस्मिन्मग्नेन स्थितं नाम तदङ्गीकृतमित्यर्थः ] अंहसि पापे । नाम प्राकाश्ये [ अभ्युपगमे ] । नाम प्राकाश्यसंभाव्योपगमे कुत्सने तथा । इति विश्वः । [ स्थितिमतां मर्यादां पालयतामनुजानां मध्ये विगर्हणापि प्राप्ता नाम । ] विगर्हणा निन्दा । स्थितिमतां धैर्यवताम् । क्रोधेनोल्लासिता समुत्तोलिता शोणितेनारुणा रक्ता च गदा यस्य । उच्छिन्दतो नाशयतः । दिवसं व्याप्य । कालाध्वनोरत्यन्तसंयोगे इति द्वितीया । अद्येदानीम् । इदानीमद्य

---

१ ( सहासम् । ) किं नाम मयि खिद्यते गुरुः । ( सामर्षम् ) गुरुः खेदमपि जानाति; भीमसेनः—( सबाष्पक्रोधम् । ) किं नाम कदाचि०; भीमसेनः—( सहासम् ) किं किम्, गुरुः खेदमपि जानाति इति पाठान्तराणि. २ वहति. ३ चापि चिर०. ४ लङ्घनांभसि. ५ क्रोधाच्छ्वासित: हेलोल्लासित.

(इत्युद्धतं परिक्रामति ।)

**सहदेवः**—(तमेवानुगच्छन्नात्मगतम् ।) अये कथमार्यः पाञ्चाल्याश्चतुःशालं प्रविष्टः[3] । भवतु तावदहमत्रैव तिष्ठामि । (इति स्थितः ।)

**भीमसेनः**—(प्रतिनिवृत्त्यावलोक्य च ।) सहदेव गच्छ त्वं गुरुमनुवर्तस्व । अहमप्यायुधागारं प्रविश्यायुधसहायो भवामि ।

**सहदेवः**—आर्य नेदमायुधागारं पाञ्चाल्याश्चतुःशालमिदम् ।

**भीमसेनः**—(सवितर्कम् ।) किं नाम नेदमायुधागारं पाञ्चाल्याश्चतुःशालमिदम् । (किंचिद्विहस्य सहर्षम् ।) आमन्त्रयितव्या[4] मया पाञ्चाली । (सप्रणयं सहदेवं हस्ते गृहीत्वा ।) वत्स आगम्यताम्[5] । यदार्यः कुरुभिः सन्धानमिच्छन्नस्मान्पीडयति तद्भवानपि पश्यतु ।

(उभौ प्रवेशं नाटयतः ।)

**सहदेवः**—आर्य इदमासनमास्तीर्णम् । अत्रोपविश्य[6] प्रतिपालयत्वार्यः कृष्णागमनम् ।

**भीमसेनः**—(उपविश्य[7] ।) वत्स कृष्णागमनमित्यनेनोपोद्घातेन[8] स्मृतम्[9] । अथ भगवान्कृष्णः केन [10]पणेन सन्धिं कर्तुं सुयोधनं प्रति प्रहितः ।

**सहदेवः**—आर्य पञ्चभिर्ग्रामैः ।

---

इति कलापसूत्रम् । अस्मिन्नहनीत्यर्थेऽनन्वयः स्यादित्यवधेयम् ॥ १२ ॥ इह परिकररूपः सन्धिः । यदुक्तं तत्रैव—कार्याकार्यस्य हेतूनामुक्तिः परिकरो मतः । इति । [**आत्मगतं** स्वगतम् । तदुक्तं—सर्वश्राव्यं प्रकाशं स्यादश्राव्यं स्वगतं मतम् ।] चतुःशालकं चउसार इति प्रसिद्धं गृहम् । [चतसृणां शालानां समाहारः चतुःशालम् । आवन्तो वा इति क्लीबत्वम् । ०शालकमिति पाठे स्वार्थे कः ।] आगारो गृहम् । आयुधसहायोऽस्त्रद्वितीयः । आः स्वीकारे । आमन्त्रयितव्या संवदनीया । कृष्णागमनं द्रौपद्यागमनमथ च हरेरागमनम् । उपोद्घात उक्तिः । तदुक्तममरे—उपोद्घात उदाहारः इति । यद्वा प्रकृतानुकूलिनी चिन्ता उपोद्घातः । भगवानैश्वर्यादिमान् । इह श्रीकृष्णो निगूढार्थो दूतः । यदुक्तं तत्रैव—उद्देश्यकार्याबोधेन विपक्षे नायके स्वयम् । वाग्युद्धनिरतो यस्तु स निगूढार्थ उच्यते ॥ इति । पञ्चग्रामदाना-

---

१ साटोपम्. २ प्रति प्रस्थितः; प्राप्तः. ३ विचिन्त्य. ४ ०तव्यैव; अथवा ०तव्ययै. ५ एतदनन्तरं **सहदेवः**—यदादिशत्यार्यः । **भीमसेनः**—वत्स यदार्यः कुरुभिः इत्या. (परिक्रम्य उभौ गृहप्रवेशं नाटयतः । भीमः सक्रोधं भूमावुपविशति ।) **सहदेवः**—(**ससंभ्रमम् ।**) आर्य इ० पा०. ६ अत्रोपविश्य मुहूर्तमार्यः; विशत्वार्यः पाल० इ०. ७ उपविश्य स्मृत्वा. ८ कथोद्घातेन. ९ तत्स्मृतम्. १० प्रकारेण; प्रहितः–प्रेषितः.

**भीमसेनः**—( कर्णौ पिधाय। ) अहह हन्त देवस्याजातशत्रोरप्ययमीदृशस्तेजोपकर्ष इति यत्सत्यं कम्पितमिव मे हृदयम्। ( परिवृत्य स्थित्वा। ) तद्वत्स न³ त्वया कथितं न मया श्रुतम्।

**यत्तदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपतेः।**
**दीव्यताक्षैस्तदानेन नूनं तदपि हारितम्॥ १३॥**

( नेपथ्ये। )

समाश्वसितु समाश्वसितु भट्टिनी। (क)

**सहदेवः**—( नेपथ्याभिमुखमवलोक्यात्मगतम्। ) अये कथं याज्ञसेनी मुहुरुपचीयमानबाष्पपटलस्थगितनयना आर्यसमीपमुपसर्पति। तत्कष्टतरमापतितम्।

**यद्वैद्युतमिव ज्योतिरार्ये क्रुद्धेऽद्य संभृतम्।**
**तत्प्रावृडिव कृष्णेयं नूनं संवर्धयिष्यति॥ १४॥**

( ततः प्रविशति यथानिर्दिष्टा द्रौपदी चेटी च। )

( द्रौपदी सास्रं निश्वासिति। )

**चेटी**—समाश्वसितु समाश्वसितु भट्टिनी। अपनेष्यति ते मन्युं नित्यानुबद्धकुरुवैरः कुमारो भीमसेनः। (ख)

---

(क) समस्ससदु समस्ससदु भट्टिणी। (ख) समस्ससदु समस्ससदु भट्टिणी। अवणइस्सदि दे मण्णुं णिच्चाणुबद्धकुरुवेरो कुमालो भीमसेणो।

---

दानेन तयोस्तेन वैरप्रकाशनात्। अहहेत्यद्भुते खेदे इत्यमरः। यत्सत्यं निश्चये। तदुक्तं तत्रैव—यत्सत्यमिति भावार्थम्। **यत्तदिति**। [ यत् अस्य भूपतेः तत् ऊर्जितम् अत्युग्रं क्षात्रं तेजः तदपि अनेन तदा द्यूतसमये अक्षैः दीव्यता नूनं हारितम् इत्यन्वयः। ] ऊर्जितं बलवत्। क्षात्रं क्षत्रियसंबन्धि। दीव्यताक्षैर्द्यूतेन क्रीडमानेन। दिवः कर्म च इति चकारात्तृतीया। नूनं निश्चये। तदपि तेजः हारितम्। अन्यथा कथमयं तेजोभङ्ग इति भावः॥ १३॥ नेपथ्ये। आत्मगतम्। यत्तु। श्राव्यं न सर्वस्य स्वगतं तदिहोच्यते। इति भरतः। याज्ञसेनी द्रौपदी। [ उपचीयमानः वृद्धिं गच्छन् यः बाष्पस्तस्य पटलं तेन स्थगिते नयने यस्याः सा। ] अश्रुणः पूर्वावस्था बाष्पः। स्थगितं पिहितम्। **यद्वैद्युतमिति** [ क्रुद्धे आर्ये अद्य यत् वैद्युतमिव ज्योतिः संभृतम् तदियं कृष्णा प्रावृडिव नूनं संवर्धयिष्यति इत्य० ] वैद्युतं विद्युत्प्रभवम्। आर्ये भीमे। संभृतं जातम्। प्रावृड् वर्षाकालः। नूनं निश्चये॥ १४॥ अत्र मन्युर्दैन्ये क्रतौ क्रुधि। इत्यमरः। **द्रौपदी**। सास्रं सनयनजलम्। [ नित्यमनुबद्धं कुरुभिर्वैरं येन सः। ]

---

१ कथं तस्य देवस्य. २ न त्वया कथितं न च भीमसेनेन-मया भीमेन—श्रुतम्। इ० पा०. ३ कर्णं दत्वा नेपथ्या०. ४ ०लावृतनयना, पटलनयना; मुहुर्मुहुरुपचितबाष्पपटलस्थगितनयना आर्यस्य समीपं समुपसर्पति। तत्कष्टात्कष्टतरमापतितम्. ५ आर्य क्रोधेन. ६ सबाष्पं. ७ ( अवणइस्सदि इत्याद्यधिकं क्वचित् ). ८ कुमालभि०.

**द्रौपदी**—हञ्जे बुद्धिमतिके भवत्येतद्यदि महाराजस्य प्रतिकूलो भविष्यति । ( क )

**चेटी**—(विलोक्य।) एष कुमारस्तिष्ठति।तदेनमुपसर्पतु भट्टिनी। (ख)

**द्रौपदी**—हञ्जे एवं कुर्वः इति । ( ग ) ( इति परिक्रामतः । )

**चेटी**--( उपसृत्य । ) जयतु जयतु कुमारः । ( घ )

**भीमसेन**--( अशृण्वन् । ) यत्तदूर्जितम् इति पुनः पठति ।

**चेटी**--(परिवृत्य ।) भट्टिनि परिकुपित इव कुमारः लक्ष्यते । (ङ)

**द्रौपदी**—हञ्जे यद्येवं तदवधीरणाप्येषा मामाश्वासयति । तदुपविष्टा भूत्वा शृणोमि तावन्नाथस्य व्यवसितम् । ( च )

( उभे–तथा कुरुतः । )

---

( क ) हञ्जे बुद्धिमदिए होदि एदं जइ महाराअस्स पडिउलो हुविस्सदि ।

( ख ) एसो कुमारो चिट्ठदि । ता णं उवसप्पदु भट्टिणी ।

( ग ) हञ्जे एवं करेह्म ।

( घ ) जअदु जअदु कुमालो ।

( ङ ) भट्टिणि परिकुविदो विअ कुमालो लक्खीअदि ।

( च ) हञ्जे जइ एव्वं ता अवहीरणावि एसा मं आसासअदि ता एत्थ उवविट्ठा भविअ सुणोमि दाव णाहस्स ववसिदं ।

---

अत्र हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति । इत्यमरः । जयतु कुमारः । अत्र जयत्वित्यत्र यद्यपि जयतेरनभिधानादुत्वं न भवतीति रूपावतारे दृश्यते तथापि तस्य प्रायिकत्वम् । प्राकृते जयदु जयत्वित्यस्याभिधानात् । प्राकृतस्य च–तद्भवस्तत्समो देशीत्यनेकः प्राकृतः क्रमः । इति नियमात् । संस्कृतं क्रमवत्त्वात् । अन्यथा क्रमहान्यापत्तेः । किं च । जयतात्.....भवानीपतिः इत्यादिदर्शनाज्जयत्विति साधु । अन्यथा तुह्योस्तातङ् आशिष्यन्यतरस्याम् । इति तातङोऽप्राप्तिः । जयतीत्यत्रोकारस्याकरणादित्यवधेयम् । [ अवधीरणा असंभावनरूपा अवज्ञा । ] अत्र व्यवसितमध्यवसायः ।

---

१ अपश्यन्. २ इति तथा कुरुतः. ३ जह महाराओ पडिउलो ण भवे । ता णाहं पेक्खिदुं तुवरदि मे हिअअं । ता आदेसेहि मे णाहस्स वासभवणं । **चेटी**–एदु एदु भट्टिणी । इति परिक्रामतः । **चेटी**-एदं वासभवणं । एत्थ पविसदु भट्टिणी । **द्रौप०**-हञ्जे कहेहि णाहस्स मह आगमणं । **चेटी**–जं देवी आणवेदि । इति परिक्रम्योपसृत्य च । इ. पा. ४ भट्टिणि पिअं दे णिवेदेमि । परि०. ५ ता एअन्ते (एकान्ते) एत्थ उवट्ठिआ (उपस्थिता).

**भीमसेनः**—(सक्रोधम्। सहदेवमधिकृत्य।) किं नाम पञ्चभिर्ग्रामैः सन्धिः।

मथ्नामि कौरवशतं समरे न कोपा-
दुःशासनस्य रुधिरं न पिबाम्युरस्तः।
संचूर्णयामि गदया न सुयोधनोरू
सन्धिं करोतु भवतां नृपतिः पणेन ॥ १५॥

**द्रौपदी**—(सहर्षम्। जनान्तिकम्) नाथ अश्रुतपूर्वं खलु ते ईदृशं वचनम्। तत्पुनरपि तावद्भण। (क)

**भीम०**—(अशृण्वन्नेव) (मथ्नामि कौरवशतं) इति पुनः पठति।

**सहदेवः**—आर्य किं महाराजस्य सन्देशोऽव्युत्पन्न इव गृहीतः।

**भीमसेनः**—का पुनरत्र व्युत्पत्तिः।

**सहदेवः**—आर्य एवं गुरुणा सन्दिष्टम्।

**भीमसेनः**—कस्य।

**सहदेवः**—सुयोधनस्य।

**भीमसेनः**—किमिति।

---

(क) णाह अस्सुदपूव्वं क्खु दे एदिसं वअणं। ता पुणो विदाव भणाहि।

---

मथ्नामीति। वर्तमानसामीप्ये वर्तमानवद्वा इति भविष्यति लट्। नकारः सर्वत्र शिरश्चालने। मथ्नामि विमर्दयिष्यामि। [अत्र काक्वा न मथ्नामि इति न अपि तु मथ्नाम्येवेत्यर्थो लभ्यते। एवमन्यत्रापि।] उरस्तो वक्षःस्थलात्। [उरो विदार्येत्यर्थः। ल्यब्लोपे पञ्चम्यर्थस्तसिः।] पिबामि। संचूर्णयामीत्यत्रापि भविष्यति लट्। [पणेन पञ्चग्राममूल्येन] ॥ १५॥ इह प्रतिमुखरूपः सन्धिः। यदुक्तं तत्रैव—आनुषङ्गिकार्येण क्रियते यत्प्रकाशनम्। नष्टस्येवेह बीजस्य तद्धि प्रतिमुखं मतम् ॥ व्यवसायनामा वचनसन्धिरयम्। यदाह—प्रतिज्ञाहेतुसंयुक्तं व्यवसायो वचो मतः। इति। जनान्तिकम्—अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम्। इति भरतः। अश्रुतपूर्वः खलु ईदृश आलापो नाथस्य। तन्नाथ पुनःपुनस्तावद्... । अत्र खलु निश्चये वाक्यभूषायां वा। अव्युत्पन्नः [तात्त्विकार्थान्तरा सह इव। तात्त्विकमर्थमविमृश्येत्यर्थः।] पञ्चग्राममात्रम्। इह भाषणरूपो निर्वहणसन्धिः। यदुक्तं तत्रैव—सामवादादिसंपन्नं भाषणं भाषणं मतम्।

---

१ वत्स किं. २ श्रुत्वा; सहर्षम्. ३ सहदेव पश्य। मथ्नामि इ. ४ अयमार्येणाव्यु०. ५ पुणो पुणो दाव.

**सहदेवः**—

> **इन्द्रप्रस्थं वृकप्रस्थं जयन्तं वारणावतम् ।**
> **प्रय[2]च्छ चतुरो ग्रामान्कंचिदेकं तु पञ्चमम् ॥ १६ ॥**

**भीमसेनः**—ततः किम् ।

**सहदेवः**—तदेवमनया प्रतिनामग्रामप्रार्थनया पञ्चमस्य चाकीर्तनाद्विषभोजनजतुगृहदाह[3]द्यूतसभाद्यपकारस्थानोद्घाटनमेवेदं म[4]न्ये ।

**भीमसेनः**—( साटोपम् । ) वत्स एवं कृते किं कृतं भवति ।

**सहदेवः**—आर्य एवं कृते लो[5]के तावत्स्वगोत्रक्षयाशङ्कि हृदयमाविष्कृतं भवति कुरुराजस्यासन्धेयता च दर्शिता भवति ।

**भीमसेनः**—स[6]र्वमप्येतदनर्थकम् । कुरु[7]राजस्य तावदसन्धेयता तदैव निवेदिता[8] यदैवास्माभिरितो वनं गच्छद्भिः सर्वैरेव कुरुकुलस्य निधनं प्रतिज्ञा[9]तम् । लोकेऽपि च धार्तराष्ट्रकुलक्षयः किं लज्जाकरो भवताम् । अपि च रे मूर्ख—

> **युष्मान्हेपयति क्रोधाल्लोके शत्रुकुलक्षयः ।**
> **न लज्जयति दाराणां सभायां केशकर्षणम् ॥ १७ ॥**

**द्रौपदी**—( जनान्तिकम्[10] । ) नाथ न लज्जन्त एते । त्वमपि तावन्मा विस्मार्षीः । ( क )

---

( क ) णाह ण लज्जन्ति एते । तुमं वि दाव मा विसुमरेहि ।

---

[ **इन्द्रप्रस्थमिति**– ] विषभोजनेत्यादौ यथायोगं कुशस्थलेत्यादिसंबन्धः । विषभोजनादेस्तत्तत्स्थाने वृत्तत्वात्तत्तत्स्मरणम् । अन्यथा मन्यन्ते प्रकारान्तरेण जानन्ति । त इति शेषः । [ स्वगोत्रक्षयादाशङ्कते बिभेतीति तथा । ] असन्धेयताऽसन्धानविषयता । [ अनर्थकमुद्दिष्टार्थासाधकम् । ] निधनं विनाशः । **युष्मानिति** । [ क्रोधादस्माभिः करिष्यमाणः शत्रुकुलक्षयः युष्मान् ] हेपयति लज्जायुक्तान्करोति । दाराः पुंभूम्नि इत्यमरः । इह यद्यप्येकैव द्रौपदी बह्वर्थवाचिदारशब्देनायोग्यतया प्रतिपादयितुं न शक्यते तथापि लक्षणया तदपि शक्यत इत्यदोषः । केशकर्षणं कर्तृ ॥ १७ ॥

---

१ कुश-अव-स्थलं वृकस्थलं ( टी. ) २ देहि मे चतुरो ग्रामान्पञ्चमं कंचिदेव तु । इ. पा. ३ दाह इति क्वचिन्नास्ति. ४ मन्यामहे; मन्यन्ते ( टी. ). ५ लोकेप्ययशःस्वगोत्र०; कुरुराजस्य तावदसन्धेयता तदैव प्रतिपादिता भवति. ६ मूढ सर्वम्. ७ कुरुपु. ८ प्रतिपादिता. ९ एतदनन्तरं प्रसिद्धश्च लोकेऽपि धार्तराष्ट्रकुलक्षयः । (सहदेवो लज्जां नाटयति ।). **भीमः**—किं लज्जाकरो भवताम् । अपि च रे मूर्ख इ. पा. १० सबाष्पामित्यधि०.

**भीमसेनः**—( सस्मरणम्[१] । ) वत्स कथं चिरयति पाञ्चाली[२] ।

**सहदेवः**—आर्य का[३] खलु वेलां [४]तत्रभवत्याः प्राप्तायाः । किं तु रोषावेशवशाद्[५] आगताप्यार्येण नोपलक्षिता ।

**भीमसेनः**—( दृष्ट्वा[६] सादरम् । ) देवि समुद्धताम[७]र्षै[८]रस्माभिरागतापि भवती नोपलक्षिता । अतो न मन्युं कर्तुमर्हसि ।

**द्रौपदी**—नाथ उदासीनेषु युष्मासु मन्युर्न पुनः कुपितेषु । (क)

**भीमसेनः**-यद्येवमपगतपरिभवमात्मानं समर्थयस्व । ( हस्ते गृहीत्वा पार्श्वे समुपवेश्य मुखमवलोक्य । ) किं पुनरत्रभवतीमुद्विग्नामिवोपलक्षयामि ।

**द्रौपदी**—नाथ किमुद्वेगकारणं युष्मासु सन्निहितेषु । (ख)

**भीमसेनः**—किमिति नावेदयसि । ( केशानवलोक्य । ) अथवा किमावेदितेन ।

> **जीवत्सु पाण्डुपुत्रेषु दूरमप्रोषितेषु च ।**
> **पाञ्चालराजतनया वहते[९] यदिमां दशाम् ॥ १८ ॥**

**द्रौपदी**—हञ्जे बुद्धिमतिके निवेदय तावन्नाथस्य । कोऽन्यो मम परिभवेन खिद्यते ( ग )

---

( क ) णाह उदासीणेसु तुह्मेसु मे[१०]ण्णुं ण उण कुविदेसु ।
( ख ) णाह [११]किं उव्वेअकालणं तुह्मेसु सण्णिहिदेसु ।
( ग ) हञ्जे बुद्धिमदिए णिवेदेहि दाव णा[१२]हस्स को अण्णो मह परिहवेण खिज्जइ ।

---

चिरयति विलम्बते । का खलु कियती । प्राप्ताया आगतायाः । उदासीनेषु [ ममापकारमुपेक्षमाणेषु । अपगतः वैरनिर्यातनेनेति शेषः । परिभवोऽवमानना केशकर्षणादिरूपा यस्य । ] समर्थयस्व जानीहि । **जीवत्स्विति** । [ यत् यस्मात्कारणात् इमां दशां वहते तस्मात् किमावेदितेन इति सम्बन्धः । ] यस्य च भावेन भावलक्षणम् इति सप्तमी । दूरमिति क्रियाविशेषणमतिशयार्थम् । अप्रोषितेष्वपरदेशवासिषु

---

१ एतन्नास्ति क्वचित्. २ एतदनन्तरम्–त्वरते मे मनः संग्रामावतरणाय इत्याधिकं क्वचित्. ३ कानु. ४ अत्रभवत्याः. ५ आर्यागतापि इति क्वचित्. ६ ( विवृत्यावलोक्य च । ) कथमागता । ( सादरम् । ) इ. पा. ७ वर्धिता–उद्यता. ८ अपि. ९ वहतीयामिमां. १० मह ( मम ) मण्णु. ११ ण किं वि उव्वेअकालणम्. १२ कहेहि णाहस्स.

**चेटी**—यद्देव्याज्ञापयति। (भीममुपसृत्य । अञ्जलिं बद्ध्वा ।) कुमार इतोऽप्यधिकमद्य मन्युकारणमासीद्देव्याः । (क)

**भीमसेनः**—किं नामास्मादप्यधिकतरम् । तत्कथय कथय ।

**कौरव्यवंशदावेऽस्मिन्क एष शलभायते ।**
**मुक्तवेणीं स्पृशन्नेनां कृष्णां धूमशिखामिव ॥ १९ ॥**

**चेटी**—शृणोतु कुमारः । अद्य खलु देवी अम्बासहिता सुभद्राप्रमुखेण सपत्नीवर्गेण परिवृता आर्याया गान्धार्याः पादवन्दनं कर्तुं गतासीत् । (ख)

**भीमसेनः**—युक्तमेतत् । वन्द्याः खलु गुरवः । ततस्ततः ।

**चेटी**—ततः प्रतिनिवर्तमाना भानुमत्या दृष्टा । (ग)

**भीमसेनः**—(सक्रोधम् ।) आः शत्रोर्भार्यया दृष्टा । हन्त स्थानं क्रोधस्य देव्याः । ततस्ततः ।

---

(क) जं देवी आणवेदी । कुमाल । इदोवि अहिअं अज्ज मण्णुकालणं आसी देवीए । (ख) सुणादु कुमालो । अज्ज क्खु देवी अम्बासहिदा सुभद्दाप्पमुहेण सवत्तिवग्गेण परिवुदा अज्जाए गन्धालीए पादवन्दणं कादुं गदा आसी । (ग) तदो पडिणिवुत्तमाणा भाणुमदीए दिट्ठा ।

---

सन्निहितेष्वित्यर्थः] ॥१८॥ कथय नाथस्य सर्वं व्यवसितम् । इतोप्यधिकतरमद्योद्वेगकारणं समासादितं देव्या। कौरव्येति। [क एषः मुक्तवेणीं एनां कृष्णां कृष्णां धूमशिखामिव स्पृशन् अस्मिन् कौरव्यवंशदाहे शलभायते इत्यन्वयः।] अत्र यद्यपि तद्राजस्य बहुषु तेनैवास्त्रियाम् इति ण्यञो लुक्प्रसङ्गस्तथापि दुर्योधन एकस्मिन्नेव कुर्वादिभ्यो ण्यः इति कौरव्यशब्दं व्युत्पाद्य तत्र साधुः इति सूत्रेण तस्माद्यत्प्रत्ययः। एवं कौरव्याः पशवः इत्यादावप्यूह्यम् । वने च वनवह्नौ च दवो दावः प्रकीर्तितः । इति शाश्वतः । बद्धवेणीमित्यत्र भूतार्थक्तप्रत्ययस्यासाधुत्वमग्रे वेणीबन्धनादित्यदेयम् । वेण्यास्तदाबद्धत्वादग्र उन्मोकस्य कथनात् । अत एव वेण्याः संहार उन्मोकोऽत्रेति ग्रन्थनामापि घटते । शलभायते पतङ्गवदाचरति । वेणी केशवेषः प्रवाहश्च । एनाम् इत्यत्रानन्वादेशात् एताम् इति युक्तः पाठः । तयोरनित्यत्वात् । कृष्णां द्रौपदीं श्यामां च ॥ १९ ॥ अत्र खलु वाक्यभूषायाम् । अम्बा माता कुन्ती ।

---

१ बुद्धिमतिके. २ बद्धवेणीम् ( टी. ) ३ युज्यते। एवमेतत् ; युज्यते अभिवन्दनीयाः. ४ आः कथम्. ५ युक्तं क्रोधस्थानम्; क्रोधस्य सांप्रतं देव्याः; स्थानं खेदस्य देव्याः. ६ सुणादु कुमालो...अहिअदरं अज्ज उव्वेअका०; अदोवि अज्ज अत्थि अवरं मण्णुकालणं देवीअे उप्पण्णं इ. पा. ७ 'क्खु' इति क्वचिन्नास्ति; अज्ज क्खु भट्टिणी सहिए सहिदा इत्यादि पाठः. ८ देवी दिट्ठा ( टी. ).

**चेटी**--ततस्तया देवीं प्रेक्ष्य सखीवदनदत्तदृष्ट्या सगर्वमीषद् विहस्य भणितम्। (क)

**भीमसेनः**--न केवलं दृष्टा उक्ता च। अहो किं कुर्मः ततस्ततः।

**चेटी**--अयि याज्ञसेनि पञ्चग्रामाः प्रार्थ्यन्त इति श्रूयते। तत्कस्मादिदानीमपि ते केशा न संयम्यन्ते। (ख)

**भीमसेनः**—सहदेव श्रुतम्।

**सहदेवः**—आर्य किमिहोच्यते। दुर्योधनकलत्रं हि सा। पश्य।

> **स्त्रीणां हि साहचर्याद्भवन्ति चेतांसि भर्तृसदृशानि।**
> **मधुरापि हि मूर्च्छयते विषविटपिसमाश्रिता वल्ली ॥ २० ॥**

**भीमसेनः**--बुद्धिमतिके ततो देव्या किमभिहितम्।

**चेटी**--कुमार यदि परिजनहीना भवेत्तदा देवी भणति। (ग)

**भीमसेनः**--किं पुनरभिहितं भवत्या।

---

(क) तदो ताए देवीं पेक्खिअ सहीवअणदिण्णदिट्ठीए सगव्वं ईसि विहसिअ भणिअं।

(ख) अई जण्णसेणि पञ्च गामा पत्थीअन्ति त्ति सुणीअदि कीस दाणीं वि दे केसा ण संजमीअन्ति।

(ग) कुमाल जई परिजणहीणा भवे तदो देवी भणादि।

---

आ इत्याक्षेपे। न संयम्यन्ते संयमनमिह बन्धनम्। कलत्रशब्दस्याजहल्लिङ्गतया कलत्रं सेति सामानाधिकरण्यम्। कलत्रं श्रोणिभार्ययोः इति विश्वः। **स्त्रीणामिति।** [स्त्रीणां चेतांसि भर्तुः] साहचर्यान्नित्यसमाजात् [सहवासात् भर्तृसदृशानि भवन्ति।] मधुरा कोमला मधुररसा वा। [वल्ली विषविटपिनं समाश्रिता मूर्च्छयते हि।] मूर्च्छयते मूर्च्छां करोति। यद्वा मूर्च्छयते जनमिति शेषः। विषविटपो विषशाखाविस्तारः। विस्तारो विटपोऽस्त्रियाम् इत्यमरः। क्वचित् विषविटपिसमाश्रिता इति पाठः। स तु मनोहरः। वल्ल्या वृक्षसाहचर्यात्। वल्ली लता। आर्याच्छन्दः ॥२०॥ केशहस्ताः संयम्यन्त इति। अत्र केशहस्ताः प्रशस्तकेशाः।

---

१ उचितमेवैतत्तस्याः इ. पा. २ विटप. ३ सहीजण...ईसि विहसिअ (टी.). ४ तुह्मांणं अज्जवि. ५ जई पडिइणिं ( परिहीनं ) मम वअणं ( टी. ). जइ मम बुद्धिपडिहीणत्तणं तदो.

**चेटी**—मया एवं भणितम्। अयि भानुमति युष्माकममुक्तेषु केशेषु कथमस्माकं देव्याः केशाः संयम्यन्त इति। (क)

**भीमसेनः**—(सपरितोषम्।) साधु बुद्धिमतिके साधु। तदभिहितं[1] यदस्मत्परिजनोचितम्। (स्वाभरणानि बुद्धिमतिकायै प्रयच्छति।)[2] अत्रभवति[3] पाञ्चालराजतनये श्रूयताम्। अचिरेणैव कालेन।

> **चञ्चद्भुजभ्रमितचण्डगदाभिघात-**
> **संचूर्णितोरुयुगलस्य सुयोधनस्य।**
> **स्त्यानावनद्धघनशोणितशोणपाणि-**
> **रुत्तंसयिष्यति कचांस्तव देवि भीमः ॥ २१ ॥**

**द्रौपदी**—किं नाथ दुष्करं त्वया परिकुपितेन। अनुगृह्णन्त्वेतद्व्यवसितं ते भ्रातरः। (ख)

**सहदेवः**—अनुगृहीतमेतदस्माभिः।

(नेपथ्ये महान्कलकलः। सर्वे सविस्मयमाकर्णयन्ति।)

---

(क) मए एव्वं भणिअं। अइ भाणुमदि तुह्माणं अमुक्केसु केसेसु कधं अह्माणं देवीए केसा संजमीअन्ति त्ति।

(ख) किं णाह दुक्करं तुए परिकुविदेण। अणुगेह्णन्तु एदं ववसिदं दे भादरो।

---

साधु बुद्धिमतिके साधु इत्यनेन हर्षरूपशिल्पकमुक्तम्। यदुक्तं—तत्रैव चित्तप्रसादो हर्षः स्यात्तन्निमित्तस्य सङ्गमे इति। सावष्टम्भं निर्भयम्। चञ्चदित्यादि। हे देवि तव कचान्केशान्भीम उत्तम्भयिष्यति बन्धयिष्यति। कीदृशः सन्। [चञ्चन्तौ परिस्फुरन्तौ यौ भुजौ ताभ्यां भ्रमिता या चण्डा गदा तस्य अभिघातेन प्रहारेण संचूर्णितं ऊरुयुगलं यस्य तस्य] सुयोधनस्य स्त्यानं स्तिमितमपाविद्धं क्षिप्तं [अवनद्धं संसक्तं] घनं निरन्तरं यच्छोणितं तेन शोणो लोहितः पाणिर्यस्य स तथा। स्त्यानं स्तिमितसङ्घयोः इति विश्वः। आविद्धाक्षिप्तेरिताः समाः इत्यमरः। चण्डः प्रचण्डः ॥ २१ ॥ इह स्त्यानेत्यादिकः प्रतीकाररूपो गण्डः। यदुक्तं तत्रैव—प्रतिक्रियान्वितं वाक्यं प्रतीकार इति स्मृतः। इह परिन्यासरूपो मुखसंधिः। यदुक्तं तत्रैव—परिन्यासस्तु कार्यस्य भाविनो निश्चयाद्वचः। नाथ अतिदुष्करं त्वया परिकुपितेन व्यवसितम्। तदनुमन्यन्तामेतद्व्यवसितं देवताः।

---

१ 'अभिहितं' भवत्या. २ अस्य स्थाने अधीरमासनादुत्तिष्ठन् इ. पा.; प्रयच्छति। अधीरमासनादुत्तिष्ठम्। इत्यपि कचित्पाठः. ३ भवतु, अयि ०तनये अलं विषादेन। ४ किं बहुना श्रू०; यत्करिष्ये तत्श्रूयताम्. ५ अवबद्ध; अपविद्ध. ६ उत्तम्भयिष्यति. (टी.) ७ 'प्रतिगृहीतं मङ्गलवचनमस्माभिः' इति पाठः. ८ कुमाल मए; तदा मए परिकुविअ (मया परिकुप्य) भणिअं...केसहत्थेसु (केशहस्तेषु) (टी.) देव्याः केसहत्था. ९ तुइ परिकुविदे. १० सव्वहा अण० तधावि अणुगेह्णन्तुदे·तुए·एदं व वसिदं देवदाओ.

**भीमसेनः**[1]--

मन्थायस्तार्णवाम्भः[2]प्लुत[3]कुहरवलन्[4]मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसङ्घट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुल[5]निधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो[6] दुन्दुभिस्ताड्यते[7]ऽयम् ॥ २२ ॥

( प्रविश्य संभ्रान्तः । )

**कञ्चुकी**—कुमार एष खलु भगवान्वासुदेवः ।

( सर्वे कृताञ्जलयः समुत्तिष्ठन्ति । )

**भीमसेनः**—( [8]ससंभ्रमम् । ) क्[9]ासौ भगवान् ।

**कञ्चुकी**—पाण्डवपक्षपातामर्षितेन सुयोधनेन संयन्तुं[10]मारब्धः ।

( सर्वे संभ्रमं नाटयन्ति । )

**भीमसेनः**--किं[11] संयतः ।

**कञ्चुकी**—नहि नहि संयन्तुमारब्धः ।

**भीमसेनः**[12]--किं कृतं देवेन ।

---

कलकलोऽकस्मादुत्थितो महाशब्दः । मन्थेत्यादि । [ अयं दुन्दुभिः केन ताड्यते कीदृशः ।] मन्थो मन्थनदण्डस्तेनायस्तः क्षिप्तो योऽर्णवः समुद्रस्तदम्भसा प्लुतं व्याप्तं यत्कुहरं मध्यं तेन चलन् [ मन्थेन मन्थनदण्डेन मन्थनेन वा आयस्तं व्याक्षिप्तं यदर्णवाम्भः तस्य प्लुतेनोत्पतनेन यत्कुहरं तत्र वलन् । अम्भसाप्लुतानि व्याप्तानि कुहराणि यस्य स चासौ वलन् इति वा ] यो मन्दरनामा शैलस्तस्य ध्वान इव धीरः तच्छब्दवद्गम्भीरः अयं दुन्दुभिः केन ताड्यते इत्यन्वयः । कोणाघातेषु [ शब्दविशेषेषु ] सत्सु । ढक्काशतसहस्राणि भेरीशतशतानि च । एकदा यत्र हन्यन्ते कोणाघातः स उच्यते ॥ इति भरतः । [ यद्वा कोणो वादनदण्डस्तदाघातेषु ताडनेषु सत्सु गर्जन्त्यः प्रलयघनानां घटाः पङ्क्तयस्तासामन्योन्यसङ्घट्टस्तद्वच्चण्डः । ] घटा समूहः सङ्घट्टो मिलनम् । [ कृष्णायाः क्रोधस्तस्य । ] अग्रदूतः प्रथमकथकः ।[ कुरुकुलस्य निधनं नाशस्तस्य ] उत्पातनिर्घातवातोऽशुभः प्रचण्डपवनः । [ अस्माकं ] प्रतिरसितं प्रतिरवः [ तस्य सखा तत्सदृशः ।] [अत्र बीजगुणाख्यानात् विलोभनं नाम मुखसन्ध्यङ्गमुक्तम् इति केचित् ।] ॥ २२ ॥ कञ्चुकी महल्लकः । तल्लक्षणम्—अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः । सर्वकार्यार्थकुशलः [ तल्लक्षणाम् कञ्चुकीत्यभिधीयते ॥ वसुदेवस्य अपत्यं पुमान् वासुदेवः । ऋष्यन्धकवृष्णिकुरुभ्यश्च इति अण् ।] संयतो बद्धः । बद्धे कीलितसंयतौ इत्यमरः । इह समयरूपो निर्वहणसन्धिः । यदाह--विरोधस्याख्यानं यद्वा

---

भीमसेनः—( सानन्दम् ।) आर्ये किमेतत् इत्यधिकं क्वचित्. २ वार्णः. ३ प्लुति. ४ चलन्. ५ कुरुपति; शत. ६ समः. ७ ताडितः. ८ ससंभ्रमम् इति क्वचिन्नास्ति. ९ क्वासौ क्वासौ. १० संयमितुम्. ११ ( सावेगम् ) किं. ( टी. ) कथं स भगवान्वासुदेवः संयतः इ. पा. भीम०:—( सपरितोषम् । ) हन्त विघटितः सन्धिर्भग्नावूरू च सुयोधनस्य । अथ किं कृतं देवेन इ. प'

**कञ्चुकी**—ततः स महात्मा दर्शितविश्वरूपतेजःसंपातमूर्छितमवधूय कुरुकुलमस्माच्छिबिरसन्निवेशमनुप्राप्तः । कुमारमविलंबितं द्रष्टुमिच्छति ।

**भीमसेनः**—(सोपहासम् ।) किं नाम दुरात्मा सुयोधनो भगवन्तं संयन्तुमिच्छति । (आकाशे दत्तदृष्टिः ।) आः दुरात्मन्कुरुकुलपांसन एवमतिक्रान्तमर्यादे त्वयि निमित्तमात्रेण पाण्डवक्रोधेन भवितव्यम् ।

**सहदेवः**—आर्य किमसौ दुरात्मा सुयोधनो वासुदेवमपि भगवन्तं स्वेन रूपेण न जानाति ।

**भीमसेनः**—वत्स मूढः खल्वयं दुरात्मा कथं जानातु । पश्य ।

**आत्मारामा विहितमतयो निर्विकल्पे समाधौ**
**ज्ञानोद्रेकाद्विघटिततमोग्रन्थयः सत्त्वनिष्ठाः ।**
**यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्तात्**
**तं मोहान्धः कथमयममुं वेत्तु देवं पुराणम् ॥ २३ ॥**

---

दुःखस्य समयो मतः । सावेगं सस्नेहम् । हन्त हर्षे । [ दर्शितं यद्विश्वरूपं तस्य तेजः तस्य संपातेन मूर्च्छितं ] विश्वरूपं विश्वंभरमूर्तिः । संपातो मेलकम् । हतको निन्द्यः । पांशुल पापकारिन् । मूढो मूर्खः । खलु वाक्यभूषायां निश्चये वा । **आत्मेत्यादि** । **सत्त्वनिष्ठाः** सात्त्विकभावापन्ना मुनयः यं भगवन्तं वीक्षन्ते साक्षात्कुर्वन्ति । कीदृशाः । **आत्मारामाः** आत्मैवारामो वनं येषां ते । तथा चात्मवनयोस्तुल्यत्वेनात्यन्तमौदास्यमाविष्कृतम् । यद्वा । आत्मन्यासमन्ताद्भावेन रमन्त इत्यात्मारामाः । त्यक्तेतरसङ्गा इत्यर्थः । पुनः कीदृशाः । निर्विकल्पे निष्कलुषे निर्णीते त्यक्तभेदे वा [ असंप्रज्ञातलक्षणे ] समाधौ नियमाविशेषे [ विहितमतयः समाहितचित्ताः । ] विहितरतयः कृतानुरागाः । विहितधृतयः इत्यपि पाठः । तत्र विहिता धृतिर्धारणा यैस्ते । इदं त्वत्यन्ताभ्यासवैराग्याभ्यां भवति । तथा च गीता—असंशयं महाबाहो मनो दुर्निग्रहं चलम् । अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ इति । यद्वा आत्मारामे आत्मनीवारामेऽप्यासमान्ताद्विहितरतयः कृतानुरागाः । यद्वा । आत्मैवारामो वनं तत्रासमन्ताद्भावेन विहितरतयः । अस्मिन्नर्थद्वये निर्विकल्पे समाधौ सति यं वीक्षन्त इत्यर्थः । पुनः कीदृशाः । ज्ञानोत्सेकात्तत्त्वज्ञानमाहात्म्याद्विनाशिततामसगुणा विनाशितमिथ्याज्ञाना वा । अनेन धृतेः फलमुक्तम् । ज्ञानोद्रेकात् इत्यपि पाठः । उद्रेकः प्रौढिः । अनेन तत्रासङ्ग उक्तः । अत्र तु प्रथमं

---

१ कुमार त्वाम्. २ विहस्य. ३ सुयोधनहतकः ( टी. ). ४ पांसल. ( टी. ). ५ नहतकः । एतन्नास्ति पुस्तकान्तरे. ६ स्वरूपेण. ७ रतयः. ८ नोत्सेकात् ९ ध्यायन्ते किमपि. १० मोहात्मा. ११ वेत्ति.

आर्य जयन्धर किमिदानीमध्यवस्यति गुरुः।

कञ्चुकी—स्वयमेव गत्वा महाराजस्याध्यवसितं ज्ञास्यति कुमारः। (इति निष्क्रान्तः।)

( नेपथ्ये। कलकलानन्तरम्।)

भो भो द्रुपदविराटवृष्ण्यन्धकसहदेवप्रभृतयोऽस्मदक्षौहिणीपतयः कौरवचमूप्रधानयोधाश्च शृण्वन्तु भवन्तः।

यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता।
तद्द्यूतारणिसंभृतं नृपवधूकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत्कुरुवने यौधिष्ठिरं जृम्भते ॥ २४ ॥

भीमसेनः—( आकर्ण्य। सहर्षम्।) जृम्भतां जृम्भतामप्रतिहतप्रसरमार्यस्य क्रोधज्योतिः।

---

वनवासः ततः समाधिलाभः ततस्तत्त्वज्ञानेन मिथ्याज्ञानविनाशः ततः सत्त्वनिष्ठता ततः साक्षात्कार इति तत्त्वज्ञानोत्पादकः क्रमोपि बोद्धव्यः। यद्वा। अन्यत्र सङ्गत्यागः ततो धृतिः ततः प्रज्ञाप्रौढिः ततोऽविद्यालक्षणतमोग्रन्थिभेदः ततो राजसप्रवृत्त्युच्छेदो मूलोच्छेदात् ततः सात्त्विकी प्रवृत्तिः तस्याः फलमीश्वरप्रसादः तेन भगवान्समस्ततमःप्रकाशयोः परतरो दृश्यते। तमेवं तादृशपुरुषोऽपि न पश्यति। किं पुनर्मूढो दुर्योधन इति भावः। यं कीदृशम्। कमप्यनिर्वचनीयम्। तमसां मिथ्याज्ञानानां ज्योतिषां तत्त्वज्ञानानां वा परस्तात्परम्। ताभ्यामप्यगम्यमित्यर्थः। अत एव कमपीत्युक्तम्। तं देवं कथमयं मोहान्धो जानातीति। पुनः कीदृशम्। पुराणमनादिसिद्धम्। तथा च यमनियमादिसिद्धपुरुषधौरेयगम्यामिति ध्वनितम् ॥ २३ ॥ जयन्धरनामा कञ्चुकी। अध्यवस्यति करोति। **यत्सत्येति।** [यत् सत्यव्रतभङ्गात् भीरु मनो यस्य तेन। युधिष्ठिरेण इति शेषः। यत्नेन मन्दीकृतम्। अवश्यपालनीयः संकल्पो व्रतम्। सत्यमेव व्रतम्। मन्दीकृतं। [मयेत्यत्र युधिष्ठिरेणेत्येव युक्ततरम्] मनसेति विशेषणद्वारा विशेष्यप्रतिपत्तिरिति वा। यत्क्रोधज्योतिः शमवता [प्रशस्तशान्तिशालिना कुलस्य शान्तिं स्वास्थ्यं।विनाशाभावात् इच्छता विस्मर्तुमपीहितामिष्टं शमवशात्क्रोधायावकाशमदत्त्वेत्यर्थः।] तदिदं द्यूतमेवारणिर्यज्ञकाष्ठभेदस्तत्र संभृतं समुपचितम् [जनितं वा] 'निर्मन्थ्यदारुणि त्वरणिर्द्वयोः' इत्यमरः। नृपसुता द्रौपदी [तस्याः केशाश्चांबराणि वस्त्राणि च तेषामाकर्षणैरुद्दीपितमिति शेषः]। तदिदं [युधिष्ठिरस्येदं] यौधिष्ठिरं युधिष्ठिरसम्बन्धि [महत् क्रोधज्योतिः क्रोधदावानल इत्यर्थः] कुरव एव वनं तस्मिन्। जृम्भते प्रकाशते ॥ २४ ॥

---

१. सता ( टी. ). २ कुले. ३ सहर्षामर्षम्. ४ संप्रत्यप्रतिहत० इति दशरूपके पाठः. ५ आर्यक्रो०.

**द्रौपदी**—नाथ किमिदानीमेष प्रलयजलधरस्तनितमांसलः क्षणे क्षणे समरदुन्दुभिस्ताडयते। (क)

**भीमसेनः**—देवि किमन्यत्। यज्ञः प्रवर्तते।

**द्रौपदी**—( सविस्मयम्। ) क एष यज्ञः। (ख)

**भीमसेनः**—रणयज्ञः। तथाहि।

**चत्वारो वयमृत्विजः स भगवान्कर्मोपदेष्टा हरिः**
**संग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता।**
**कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं**
**राजन्योपनिमन्त्रणाय रसति स्फीतं यशोदुन्दुभिः॥ २५॥**

**सहदेवः**—आर्य गच्छामो वयमिदानीं गुरुजनानुज्ञाता विक्रमानुरूपमाचरितुम्।

---

(क) णाह किं दाणीं एसो पलअजलहरत्थणिदमंसलो क्खणे क्खणे समरदुन्दुही ताडीअदि।

(ख) को एसो जण्णो।

---

प्रलयजलधरमन्थरस्तनितमांसलोद्घोषभीषणः क्षणे क्षणे इत्यादि। अत्र मन्थरस्तनितं गम्भीरगर्जितं तद्वन्मांसलोऽधिको य उद्घोष उच्चैःशब्दस्तेन भीषणः। इह विद्रवनामा गर्भसन्धिः यदाह—शङ्काकलङ्कप्रभवः संभ्रमो विद्रवो मतः। इति। ननु भणामीत्यर्थे। बीजप्ररोह उद्भेदो यत्किंचित्प्रभवात्मकः। इति भरतादुद्भेदरूपं मुखसन्धिमाह—**चत्वार इति**। चत्वारो भीमार्जुनसहदेवनकुलाः। [ ऋतुमृतौ वा यजन्ति इति ऋत्विजः। ऋत्विग्दधृग् इति क्विन्तो निपातः। ( पा. ३. २. ५९ ) ब्रह्मोद्गातृहोत्रध्वर्युरूपाः। ] स भगवान् हरिः कर्मोपदेष्टाचार्यः। [ संग्राम एवाध्वरो यज्ञस्तत्र ] दीक्षितो दीक्षां प्रापितः। [ यद्वा दीक्षा जातास्य तारकादित्वादितच्। ] नरपतिर्युधिष्ठिरः। पत्नी द्रौपदी गृहीतव्रता कृतनियमा। [ व्रतमत्र कौरवनिधने केशान्संहरिष्यामीति नियमरूपम्। ] कौरव्याः कुरुकुलजाताः। पशवो यज्ञार्थे घातनीयाः। राजन्योपनिमन्त्रणाय क्षत्रियाह्वानाय। रसति शब्दायते। स्फीतं मनोज्ञं [ सुमहानादं च ] यथा स्यादेवम्। यशोदुन्दुभिर्यशःप्रधानो वाद्यविशेषः। यद्वा यशोदुन्दुभिः पटहः। स्याद्यशःपटहो ढक्का भेर्यामानकदुन्दुभिः। इत्यमरः॥ २५॥ अनुज्ञात इति पञ्चम्यास्तसिः। [ अनुज्ञाताः कृतानुमतयः। ] इह देवि गच्छामः इत्यनेन कारणरूपो मुखसन्धिः। यदाह—उद्यमः प्रस्तुतार्थस्य कारणं

---

१ हतो. २ द्रौपदी–( सविस्मयम् ) णाह; किं॰ कहिं. ३ चण्डघोसो समरदुन्दुही; चण्डघोसो दालुनो इ. पा.

**भीमसेनः**—वत्स एते वयमुद्यता एवार्यस्यानुज्ञामनुष्ठातुम् । ( उत्थाय । ) देवि[1] गच्छामो वयमिदानीं कुरुकुलक्षयाय ।

**द्रौपदी**—( बाष्पं धारयन्ती । ) नाथ असुरसमराभिमुखस्य हरेरिव मङ्गलं युष्माकं भवतु । ( क )

**उभौ**[2]—प्रतिगृहीतं मङ्गलवचनमस्माभिः ।

**द्रौपदी**—अन्यच्च नाथ पुनरपि युष्माभिः समरादागत्याहं समाश्वासयितव्या । ( ख )

**भीमसेनः**—ननु[3] पाञ्चालराजतनये किमद्याप्यलीकाश्वासनया[4] ।

> **भूयः परिभवक्लान्तिलज्जाविधुरिताननम्[5] ।**
> **अनिःशेषितकौरव्यं न पश्यासि[6] वृकोदरम् ॥ २६ ॥**

**द्रौपदी**—नाथ मा खलु मा खलु याज्ञसेनीपरिभवोद्दीपितकोपानला अनपे(वे)क्षितशरीराः संचरिष्यथ । यतोऽप्रमत्तसंचरणीयानि रिपुबलानि श्रूयन्ते । ( ग )

---

( क ) णाह असुरसमराहिमुहस्स हरिणो विअ मङ्गलं तुह्माणं होदु[7] ।

( ख ) अण्णंच णाह पुणोवि तुह्मेहिं समरादो आअच्छिअ अहं समासासइदव्वा[8] ।

( ग ) णाह मा क्खु मा क्खु जण्णसेणीपरिहवुद्दीविदकोवाणला अणपे(वे)क्खिदसरीरा संचरिस्सध[9] । जदो अप्पमत्तसंचरणिज्जाइं रिउबलाइं सुणीअन्ति ।

---

परिकीर्तितम् । हरेर्यन्मङ्गलं वृत्तं तद्युष्माकं भवतु । यच्चाम्बा कुन्ती वदति तद्युष्माकं भवतु । अलीकं मिथ्या । **भूय इति ।** भूयःपरिभवः प्रचुरपराभवः । [ भूय इति पदच्छेदो युक्ततरः । परिभवेन या क्लान्तिर्लज्जा च ताभ्याम् । शान्तीति पाठे परिभवस्य शान्त्या या लज्जा तया विधुरितं क्लिष्टं विच्छायं वा आननं यस्य तम् । अकृतकौरवनिःपातं पुनः न पश्यसि । ] क्षान्तिः क्षमा । विधुरितं व्याप्तम् । वृकोदरं भीमम् । न पश्यसि इति पाठे भविष्यति लट् ॥ २६ ॥ [ अनपेक्षितमाचिन्तितं शरीरं शरीररक्षणमिति यावत् । यैः । अकृतशरीररक्षणचिन्ता इत्यर्थः । अप्रमत्तैः स्वशरीररक्षणविषये सावधानैः । अप्रमत्तं यथा तथा वा संचरणीयानि । ] अनपेक्षितशरीरावरणा रणे मा पुनः संचरत ।

---

१ तत्पाञ्चालि. २ एतद्वचनं क्वचिन्नास्ति. ३ देवि. ४ श्वासनेन; किमिवाली- काश्वासनाभिः. ५ बन्धुरिताननम् इ. पा. ६ द्रक्ष्यसि ७ जं च अम्बा कुन्दी आसासदि तं तुह्माणं होदु. ( यच्चाम्बा कुन्त्याशास्ते तद्युष्माकं भवतु । ) इत्यधिकं क्वचित्. ८ चेटी—अण्णं च देवी भणादि । णाह तुह्मेहिं पुणोवि इत्यादिः बहुपुस्तकानां पाठः. ९ परिक्कमिस्सध ( परिक्रमिष्यथ ) इ. दशरूपके पा.

**भीमसेनः**—अयि[1] सुक्षत्रिये

**अन्योन्यास्फालभिन्नद्विपरुधिरवसा[2]मांसमस्तिष्कपङ्के**
**मग्नानां स्यन्दनानामुपरिकृतपदन्यासविक्रान्तपत्तौ ।**
**स्फीतासृक्पानगोष्ठीरसदशिवशिवातूर्यनृत्यत्कबन्धे**
**सङ्ग्रामैकार्णवान्तःपयसि विचरितुं पण्डिताः पाण्डुपुत्राः ॥ २७ ॥**

( इति निष्क्रान्ताः सर्वे । )

**( इति प्रथमोऽङ्कः[3] । )**

---

यतोऽप्रमत्तसुखसंचाराणि रिपुबलानीति श्रूयते । अत्र खलु निषेधेऽवधारणे वा । संचरतेत्यत्र यूयमिति शेषः । अप्रमत्तः सावधानः । प्रमत्त इत्यत्र रदाभ्यां निष्ठातो नः पूर्वस्य च दः इति सूत्रेण न नत्वम् । न ध्याख्यापॄमूर्छिमदाम् इति प्रतिषेधात् ॥ **अन्योन्येति** । [ पाण्डुपुत्राः संग्राम एव एकः मुख्यः अर्णवः तस्य अन्तःपयसि विचरितुं पण्डिताः सन्ति । अतो न शङ्का कार्या इति भावः । कीदृशे पयसि । अन्योन्यमन्योन्येषां वा य आस्फालस्तेन भिन्ना विघटितदेहा ये द्विपा गजास्तेषां रुधिरं च वसा हृन्मेदश्च मांसं च मस्तिष्कं मस्तकसंभृतस्नेहश्च रुधिर...स्तिष्कं तदेव पङ्कस्तस्मिन् मग्नानां पतितानां स्यन्दनानामुपरि कृताः पदन्यासा यैः तथाभूताः विक्रान्ताः पत्तयः यत्र तस्मिन् । ] आस्फालः संघट्टः । भिन्नो दारितः । मस्तिष्कं गोर्दा गोदी इति लोके प्रसिद्धम् । स्यन्दनो रथः । कृतपदन्यासोऽत एव विक्रान्तः पत्तिः पदातिर्यली तादृशे । स्फीतासृद्दीप्तरक्तं तत्पानगोष्ठीषु रसन्ती अशिवाशिवाऽमङ्गलशृगालिका सैव तूर्यो मर्दलं तेन नृत्यन् कबन्धः अपमूर्द्धकलेवरो यत्र तादृशे ॥ २७ ॥ सर्वे निष्क्रान्ता इति सर्वत्राङ्के कर्तव्यम् । तदुक्तं तत्रैव—पात्रैस्त्रिचतुरैरङ्कस्तेषामन्ते च निर्गमः । इति ॥

अमूत यं रत्नधरो गुणीशस्तत्तद्गुणाढ्या दमयन्तिकापि ।
जगद्धरं तस्य कृतौ व्यरंसीदाद्योऽयमङ्को वरटिप्पणेऽत्र ॥

इति प्रथमोऽङ्कः ।

---

[1] शृणु सुक्षात्रिये समर्था वयं संक्रमितुम्; अयि सुक्षत्रिये समर्था वयमास्मिन्रणे परिक्रमितुम् । इ. पा. [2] वसासान्द्र. [3] भट्टनारायणकृते वेणीसंहारे प्र. [ समाप्तः ].

# द्वितीयोऽङ्कः ।



( ततः प्रविशति कञ्चुकी । )

**कञ्चुकी**—[1]आदिष्टोऽस्मि महाराजदुर्योधनेन— वि[2]नयन्धर सत्वरं गच्छ त्वम् । अन्विष्यतां देवी भानुमती । अपि निवृत्ता अम्बायाः पादवन्दन[3]समयान्न वेति । यत[4]स्तां विलोक्य निहताभिमन्यवो रा[5]धेयजयद्रथप्रभृतयोऽस्म[6]त्सेनापतयः समरभूमिं गत्वा सं[7]भाजयितव्या इति। तन्मया द्रुततरं गन्तव्यम् । अहो प्रभविष्णुता महाराजस्य यन्मम जरसाभिभूतस्य मर्यादामात्रमेवावरोधव्यापा[8]रः।अथवा किमिति जराम[9]उपालभेय यतः सर्वान्तःपुरिका[10]णामयमेव व्यावहारिको वेषश्चेष्टा च । तथाहि ।

**नोच्चैः सत्यपि चक्षुषीक्षित[11]मलं श्रुत्वापि नाक[12]र्णितं**
**शक्तेनाप्यधिकार इत्यधिकृता यष्टिः सम[13]लम्बिता ।**
**सर्वत्र स्खलितेषु दत्तमनसा यातं मय[14]ा नोद्धतं**
**सेवा[15]स्वीकृतजीवितस्य जरसा किं नाम यन्मे कृतम् ॥ १ ॥**

---

आदिष्टोऽस्मीति । संभावयितव्याः इत्यनेनान्वयः । अन्विष्यतामनुसन्धीयताम्। अपिः प्रश्ने संभावनायां वा । अम्बा माताथ जननी इत्यमरः। [समय आचारो नियमो वा । समयः शपथे भाषासंपदोः कालसंविदोः। सिद्धान्ताचारसंकेतनियमावसरेषु च॥ इति हैमः । ] राधेयः कर्णः । संभावयितव्याः सन्निहितीकर्तव्याः । [सभाजयितव्याः सम्मानयितव्याः । ] प्रभविष्णुता प्रभावशालिता । जरसा वार्धकेन । मर्यादामात्रं मर्यादापर्यवसन्नः । अवरोधव्यापारोऽन्तःपुरकर्म । व्यावहारिको व्यवहारजन्यः । उक्तोपन्यासे तथाहि इति शब्दयोगः । **नोच्चैरिति** । चक्षुषि सत्यपि उच्चैरीक्षितुं नालमहं न समर्थः । [ ईक्षितुमिति पाठः प्रक्रमभङ्गादुपेक्ष्यः । चक्षुषि सत्यपि मया उच्चैः नेक्षितमुद्वीक्षितम् । ] नाऽकर्णितं मयेत्यन्वयः । शक्तेनापि मया यष्टिः [समालम्बिता ] समाश्रिता । कीदृशी । अधिकारोऽयं मम कञ्चुकिनो यष्टिसमालम्बनमिति अधिकृता योग्या । स्खलितं व्यापारप्रच्यवः । उद्धतं यथा स्यादेवं मया न यातं

---

१ आज्ञापितोऽस्मि. २ यथा विनयन्धर. सत्वरम् इति क्वचिन्नास्ति. ३ नं कृत्वा न. ४ यतो मया तामवलोक्य. ५ द्रोणराधेय. ६ एतत् क्वचिन्नास्ति. ७ संभावयितव्याः ( टी. ). ८ निवासः. ९ उपालभे; उपालभामहे. १० पुरचारिणां...वैहारिको वेषः. ११ ईक्षितुमलम्. १२ नाकर्णितुम्. १३ समालम्ब्यते. १४ तथा. १५ सेवान्धीकृत.

(परिक्रम्य दृष्ट्वा। आकाशे) विहङ्गिके अपि श्वश्रूजनपादवन्दनं कृत्वा प्रतिनिवृत्ता भानुमती। (कर्णं दत्त्वा।) किं कथयसि—आर्य एषा भानुमती देवी पत्युः समरविजयाशंसया निर्वर्तितगुरुदेवपादवन्दना अद्यप्रभृत्यारब्धनियमा बालोद्याने तिष्ठतीति। तद्भद्रे गच्छ त्वमात्मव्यापाराय यावदहमप्यत्रस्थां देवीं महाराजस्य निवेदयामि। (इति परिक्रम्य।) साधु पतिव्रते साधु स्त्रीभावेऽपि वर्तमाना वरं भवती न पुनर्महाराजः योऽयमुद्यतेषु बलवत्स्वबलवत्सु वा वासुदेवसहायेषु पाण्डुपुत्रेष्वरिष्वद्याप्यन्तःपुरविहारमनुभवति। (विचिन्त्य।) इदमपरमयथार्थं स्वामिनश्चेष्टितम्। कुतः।

**आ शस्त्रग्रहणादकुण्ठपरशोस्तस्यापि जेता मुने-**
**स्तापायास्य न पाण्डुसूनुभिरयं भीष्मः शरैः शायितः।**
**प्रौढानेकधनुर्धरारिविजयश्रान्तस्य चैकाकिनो**
**बालस्यायमरातिलूनधनुषः प्रीतोऽभिमन्योर्वधात्॥ २॥**

---

नोद्धतेन मया भूतमित्यर्थः। नामानवक्लृप्तौ। जरसा मम किं नाम कृतम्। अपि तु न किमपि। कीदृशस्य। सेवान्धीकृतजीवितस्य। सेवार्थमन्धीकृतं निष्फलीकृतं जीवितं येन तस्येत्यर्थः। क्वचित् सेवास्वीकृतजीवितस्य। इति पाठः। तत्र सेवार्थं स्वीकृतं जीवितं जीवनं येन। तथा च सेवानिमित्तमेव ममान्ध्यादिकं न तु जराकृतमिति भावः॥ १॥ आकाश इति। दूरस्थाभाषणं यत्स्यादशरीरं निवेदनम्। परोक्षान्तरितं वाक्यं तदाकाशं निगद्यते॥ इति भरतः। विहङ्गिका पक्षिवधूः। [चिन्त्यमेतत्। तन्नाम्नी दासी इति युक्तोऽर्थः। आरब्धो नियमो व्रतं यया।] देवगृहप्रधानमुद्यानं वनम्। वरं मनागिष्टा। मनागिष्टे वरं यत्तु कश्चिदाह तदव्ययम्। इति विश्वः। विहारः क्रीडा अयथातथमनर्हम्। **आ शस्त्रेति**। यदसौ भीष्मः पाण्डुसूनुभिः शरैः शायितस्तन्नास्य तापाय तापार्थम्। तादर्थ्ये चतुर्थी। कीदृशः। शस्त्रग्रहणादारभ्य [अखण्डोऽप्रतिहतप्रसरः परशुर्यस्य तस्य] सफलपरशोः [तस्य प्रसिद्धस्य] मुनेः परशुरामस्यापि जेता। यदयमभिमन्योर्वधात्प्रीतः। कीदृशस्य। [प्रौढा ये अनेके धनुर्धरास्ते च तेऽरयश्च तेषां विजयः तेन श्रान्तस्य] महारथविजयश्रान्तस्यैकस्य [अरातिभिः लूनं धनुः यस्य तस्य] शत्रुच्छिन्न-

---

१ (कर्णं दत्त्वा आकाशे) इति क्वचित्पाठः. २ गुरुपादवन्दना. ३ देवगृहे बालो०. ४ अहमपि महाराजस्य सन्देशमावेदयामि इति क्वचित्पाठः. ५ स्वभावे. ६ बलवत्स्वथवा किं बलवत्सु वासु० इ. पा. ७ विहारसुखम्. ८ अयथार्थचेष्टितं स्वामिनः.

सर्वथा दैवं नः स्वस्ति करिष्यति[1]। तद्यावदत्रस्थां देवीं महाराज-स्य निवेदयामि। ( इति निष्क्रान्तः। )

विष्कम्भकः।

---

( ततः प्रविशत्यासनस्था देवी भानुमती सखी चेटी च। )

**सखी**—सखि भानुमति कस्मादिदानीं त्वं स्वप्नदर्शनमात्रस्य कृते अभिमानिनो महाराजदुर्योधनस्य महिषी भूत्वैवं विगलितधीरभावाति-मात्रं संतप्यसे।

**चेटी**—भट्टिनि शोभनं भणति सुवदना। स्वपञ्जनः किं न खलु प्रलपति।

**भानुमती**—हञ्जे एवमेतत्। किंत्वयं स्वप्नोऽतिमात्रमकुशलदर्शनो मे प्रतिभाति।

**सखी**—प्रियसखि यद्येवं तत्कथय स्वप्नं येनावामपि प्रतिष्ठाप-यन्त्यौ धर्मप्रशंसया देवतासंकीर्तनेन दूर्वादिपरिग्रहेण च परिहरिष्यावः।

---

( क ) सहि भाणुमदि कीस दाणीं तुमं सिविणअदंसणमेत्तस्स किदे अहिमा-णिणो महाराअदुज्जोहणस्स महिसी भविअ एव्वं विअलिअधीरभावा अदिमेत्तं संतप्पासि। ( ख ) भट्टिणि सोहणं भणादि सुवअणा। सिविणअन्तो जणो किं ण क्खु प्पलवदि। ( ग ) हञ्जे एव्वं ण्णेदम्। किंदु एदं सिविणअं अदिमेत्तं अकुसलदंसणं मे पडिभादि। ( घ ) पिअसहि जइ एव्वं ता कहेहि सिविणअं जेण अह्मे वि पडिट्ठावअन्तीओ धम्मप्पसंसाए देवदासंकित्तणेण दुव्वादिपडि-ग्गहेण अ पडिहडिस्सामो।

---

कोदण्डस्य च। एकाकीति। एकादाकिनिच्चासहाये इत्याकिनिच्प्रत्ययः॥ २॥ दैवं दिष्टं भागधेयम् इत्यमरः। स्वस्ति कल्याणम् नोऽस्माकम्। **विष्कम्भक इति**। कुतोऽपि स्वेच्छया क्लृप्तो द्व्यङ्गस्तेनोभयोरपि। विष्कम्भकः स विज्ञेयः कथार्थस्यापि सूचकः॥ इति भरतः। किमितीदानीं त्वं......भूत्वा विगलितधीरता इ०। अत्र [ अभिमानिनः त्वयि प्रणयवतः। अभिमानस्त्वहं कृता। हिंसायां प्रणयेऽज्ञाने। इति हैमः ] महिषी कृताभिषेकायाम् इत्यमरः। स्वपन्खलु जनो यत्किमपि विप्रलपति। अत्र खलु प्रसिद्धौ। विप्रलपति विसंवादि वचो वदति। किं त्वेष मे स्वप्नो...प्रति-भासते। येन मया प्रतिष्ठापयन्त्या प्रशंसया देवतासंकीर्तनेन च परिहरिष्यते। अत्र

---

१ करिष्यतीति क्वचित् पाठः. २ तद्यावदहमत्रस्थां देवीं भानुमतीं. ३ एत-दनन्तरम् भानुमती—एव्वं ण्णेदं। इति क्वचिदधिकः पाठः। ४ सिविणआ अत्तो-( स्वप्नायत्तः ). ५ किं उण एदं मे–मम उण–अकुसलदंसणं पडिभादि सिविणअं. ६ जइ एव्वं ता कहेदु पिआसही. ७ पडिस्सावअन्तिओ [ प्रतिश्रावयन्त्यौ ].

**चेटी**—शोभनं खलु भणाति सुवदना । अकुशलदर्शनाः स्वप्ना देवतानां प्रशंसया कुशलपरिणामा भवन्तीति श्रूयते । (क)

**भानुमती**—यद्येवं तत्कथयिष्ये । अवहिता तावद्भव । (ख)

**सखी**—अवहितास्मि । कथयतु प्रियसखी । (ग)

**भानुमती**—हला भयेन विस्मृतास्मि । तत्तिष्ठ यावत्सर्वं स्मृत्वा कथयिष्यामि । (घ) (इति चिन्तां नाटयति ।)

(ततः प्रविशति दुर्योधनः कञ्चुकी च ।)

**दुर्योधनः**—सूक्तमिदं केस्यचित्[1] ।

**गुप्त्या[2] साक्षान्महानल्पः स्वयमन्येन वा कृतः ।**
**करोति महतीं प्रीतिमपकारोऽपकारिणाम्[3] ॥ ३ ॥**

येनाद्य द्रोणकर्णजयद्रथादिभिर्हतमभिमन्युमुपश्रुत्य समुच्छ्वसितमिव[4] नश्चेतसा ।

**कञ्चुकी**—देव नेदमतिदुष्करमाचार्यशस्त्रप्रभावाणाम्[5] । कर्णजयद्रथयोर्वा । का नामात्रश्लाघा ।

---

(क) सोहणं खु भणादि सुअअणा । अकुसलदंसणा सिविणआ देवदाणं पसंसाए कुसलपरिणामा होन्ति त्ति सुणीअदि ।

(ख) जइ एव्वं ता कहइस्सम् । अवहिदा दाव होहि[9] ।

(ग) अवहिदह्मि । कहेदु पिअसहि[10] ।

(घ) हलो भएण विसुमरिदह्मि ता चिट्ठ जाव सव्वं सुमरिअ कथइस्सम् ।

---

प्रतिष्ठापयन्त्या स्वप्नं शुभार्थकं कुर्वत्येत्यर्थः । [ प्रतिष्ठापयन्त्यौ शुभफलदत्वेन सम्पादयन्त्यौ देवि एवमेतत् । अकुशलदर्शना अपि स्वप्नाः प्रशंसया... । सूक्तं शोभनोक्तिः । **गुप्त्येति** । अपकारिणां शत्रूणामपकारो गुप्त्या निभृतं साक्षात्सर्ववेद्यो महान्स्वल्पो वा स्वयं वान्येन वा कृतो महतीं प्रीतिं करोतीत्यन्वयः ॥ ३ ॥ [ समुच्छ्वसितमिव विकसितमिवेत्युत्प्रेक्षा । का नाम अपि तु न कापि । नामानवक्लृप्तौ ।

---

१ कस्यापि. २ गुप्तः. ३ अपकारिषु. ४ उच्छ्वासितमिव. ५ आचार्यस्य शस्त्रप्रभावात्- अस्त्रप्रभावेण. ६ अस्त्र. ७ देवि एवं ण्णेदं. ८ हला देण हि इ. पा. ९ होध. १० एतदनन्तरं केषुचित्पुस्तकेषु–**भानुमती**–अज्ज किल मे पमदवणे आसीणाय अग्गदो केण वि अदिसइदद्दिव्वरूपेण णउलेण अहिसदं वावादिदम् । उभे ( अवधार्यात्मगतम् । ) सन्तं पावं सन्तं पावम् । पडिहदममङ्गलम् । ( प्रकाशम् ) देवि तदो तदो । भानुमती–हला भएण इत्या० इति पाठो वर्तते. ११ मुहुत्तअं चिट्ठ...सुमारिस्सम् (टी.)

**राजा**—विनयन्धर किमाह भवान् ऐको[1] बहुभिर्बालो लूनशरासनश्च निहत इत्यत्र का श्लाघा कुरुपुङ्गवानामिति[2]। मूढ पश्य।

**हते जरति गाङ्गेये पुरस्कृत्य शिखण्डिनम्।**
**या श्लाघा पाण्डुपुत्राणां सैवास्माकं भविष्यति॥ ४॥**

**कञ्चुकी**—(सवैलक्ष्यम्।) देव न ममायं सङ्कल्पः[3]। किं तु भवत्पौरुषप्रतीघातोऽस्माभिर्नावलोकितपूर्व[4] इत्यत एवं विज्ञापयामि।

**राजा**—एवमिदम्[5]।

**सहभृत्यगणं सबान्धवं सहमित्रं ससुतं[6] सहानुजम्।**
**स्वबलेन निहन्ति संयुगे न चिरात्पाण्डुसुतः सुयोधनम्॥५॥**

**कञ्चुकी**—(कर्णौ पिधाय सभयं।) शान्तं पापम्। प्रतिहतममङ्गलम्[7]।

**राजा**—विनयन्धर किं मयोक्तम्।

**कञ्चुकी**—सहभृत्यगणं....पाण्डुसुतं सुयोधनः॥ इति पठति। एतद्विपरीतमभिहितं देवेन।

**राजा**—विनयन्धर अद्य खलु भानुमती यथापूर्वं मामनामन्त्र्य वासभवनात्प्रातरेव निष्क्रान्तेति व्याक्षिप्तं[8] मे मनः[9]। तदादेशय तमुद्देशं यत्रस्था भानुमती।

**कञ्चुकी**—इत इतो देवः[10]।

(उभौ परिक्रामतः।)

**कञ्चुकी**—(पुरोऽवलोक्य। समन्ततो गन्धमाघ्राय।) देव पश्य पश्य। एतत्तुहिनकणशिशिरसमीरणोद्वेल्लित[11]बन्धनच्युतशेफालिकाविरचितकुसु-

---

लूनशरासनश्छिन्नधनुः। **हत इति**। जरति वृद्धे। गाङ्गेये गङ्गापुत्रे भीष्मे। शिखण्डी क्लीबरूपो योधभेदः। तं पुरस्कृत्याग्रे कृत्वा गाङ्गेये हते सतीत्यन्वयः॥ ४॥ सङ्कल्प इच्छा। वो युष्माकम्। **सहभृत्येति**। सहभृत्यगणमित्यादौ सभावो वैकल्पिकः। न चिरादित्यत्राचिरादित्यर्थः। नशब्द एवायं न तु नञ्समासः॥ ५॥ पठति। न चिरात्पाण्डुसुतं सुयोधनः इत्याकारेण व्याक्षिप्तं [व्याकुलं] चपलम्। इत इतः गम्यतामिति शेषः। तुहिनं हिमम्। शिशिरं शीतलम्। उद्वेल्लितं चपलीकृतम्।

---

१ एकाकी. २ अस्मात्परं तदत्र न खलु काश्चिद्दोषः। इत्यधिकं क्वचित्. ३ विकल्पः, देव नैवेदं कल्पयितुमर्हसि यतः. ४ वः; तव...अनालोचि०, नावलोचितपूर्वः. ५ एवमेवैतत्; एवमेतत्. ६ सबलम्. ७ शान्तं पापम्. ८ आक्षिप्तमिव. ९ चेतः १० एतु देवः, इत एतु देवः. ११ द्वेल्लितवृन्तबन्धुरशेफालिका (टी.).

मप्रकरम्[1] ईषदालोहितमुग्धवधूकपोलपाटललोध्रप्रसूनविजितश्यामलता-[2][3] सौभाग्यम् उन्मीलितबकुलकुन्दकुसुमसुरभिशीतलं प्रभातकालरमणीय-[4][5] मग्रतस्ते बालोद्यानम् । तदवलोकयतु देवः । तथाहि ।

प्रालेयमिश्रमकरन्दकरालकोशैः
पुष्पैः समं निपतिता रजनीप्रबुद्धैः ।[6]
अर्कांशुभिन्नमुकुलोदरसान्द्रगन्ध-
संसूचितानि कमलान्यलयः पतन्ति ॥ ६ ॥[7]

**राजा**—( समन्तादवलोक्य । ) विनयन्धर इदमपरममुष्मिन्नुषसि रमणीयतरम् । पश्य ।[8]

जृम्भारम्भप्रविततदलोपान्तजालप्रविष्टै-
र्हस्तैर्भानोर्नृपतय इव स्पृश्यमाना विबुद्धाः ।[9]
स्त्रीभिः सार्धं घनपरिमलस्तोकलक्ष्याङ्गरागा
मुञ्चन्त्येते विकचनलिनीगर्भशय्यां द्विरेफाः ॥ ७ ॥

---

वृन्तं प्रसवबन्धनम् । बन्धुरं निम्नोन्नतम् । शेफालिका पुष्पभेदः । शेफालिका तु सुवहा निर्गुण्डी नीलिकापि सा । इत्यमरः । प्रियङ्गुः फलिनी फली इत्यमरः । श्यामलता सर्तुल इति प्रसिद्धा । [ तुहिनकणैः शिशिरो यः समीरणस्तेनोद्वेल्लितानि यानि बन्धनानि तेभ्यः च्युता या शेफालिकाः ताभिः विरचितः कुसुमप्रकरो यस्मिन् । ईषदालोहिता ये मुग्धवधूनां कपोलाः ते इव पाटलानि यानि लोध्रकुसुमानि तैर्विजितं श्यामलतायाः सौभाग्यं शोभा यस्मिन् । उन्मीलितैर्विकसितैः कुसुमैः सुरभि च तत् शीतलं च ] प्रालेयेति । प्रालेयं हिमम् । ( तेन मिश्रः ) यः मकरन्दपुष्परसः । [ तेन करालाः कोशा येषां तैः । ] करालो दन्तुरे तुङ्गे इत्यमरः । कोशो मध्यम् । मुकुलं कलिका । अलयो भ्रमराः । [ पुष्पैः समं निपतिता अलयः । अर्कस्य भानोः अंशुभिः भिन्ना ये मुकुलास्तेषां उदराणि तत्सम्बन्धिना सान्द्रगन्धेन संसूचितानि ] कमलानि पतन्ति गच्छन्ति । [ पततेः गत्यर्थत्वात्सकर्मकत्वम् ] ॥ ६ ॥ [ अमुष्मिन्नुद्याने ] उषसि प्रभाते । जृम्भेति । जृम्भारम्भो विकाशोपक्रम इत्यर्थः । [ जृम्भारम्भेण प्रवितता ये दलानामुपान्ताः ते एव जालानि पक्षे दलानामुपान्ते यानि जालानि गवाक्षास्तैः प्रविष्टैः भानोः किरणैः स्पृश्यमाना नृपतय इव विबुद्धाः । घनपरिमलश्चासौ स्तोकं लक्ष्यश्चाङ्गरागो येषाम् पक्षे घनपरिमलस्य चन्दनगन्धस्य स्तोकेनांशेन लक्ष्यः यद्वा स्तोकं लक्ष्यः अङ्गरागो येषाम् । एते द्विरेफाः विकचनलिनीगर्भ एव शय्या ताम् । पक्षे विकचनलिन्यो गर्भे यस्यास्तादृशीं शय्याम् । स्त्रीभिः सार्धं

---

१ प्राकारम्. २ कपोलपाण्डुफलिनीवि०. ३. बितत्. ४ बहुल. ५ कन्दलसमशीतलपरिमलम्. ६ विबुद्धैः. ७ प्रयान्ति. ८ मवलोकय; मवलोक्यते. ९ °भाभिर्भानो; भानोरुस्रैः.

**कञ्चुकी**—देवं नन्वेषा देवी भानुमती सुवदनया तरलिकया च पर्युपास्यमाना[2] तिष्ठति । तदुपसर्पतु देवः ।

**राजा**—( दृष्ट्वा । ) आर्य विनयन्धर गच्छ त्वं साङ्ग्रामिकं मे रथमुपकल्पयितुम् । अहमप्येष देवीं दृष्ट्वानुपदमागत एव ।

**कञ्चुकी**—एष[3] कृतो देवादेशः । ( इति निष्क्रान्तः । )

**सखी**—प्रियसखि अपि स्मृतं त्वया । ( क )

**भानुमती**—सखि स्मृतम् । अद्य किल प्रमदवन आसीनाया ममाग्रतः केनाप्यतिशयितदिव्यरूपिणा नकुलेनाहिशतं व्यापादितम् । ( ख )

**उभे**—( अपवार्य । आत्मगतम् ) शान्तं पापम् । प्रतिहतममङ्गलम् । ( प्रकाशम् । ) ततस्ततः । ( ग )

**भानुमती**—अतिसंतापोपग्रहीतहृदयया विस्मृतं मया । तत्पुनरपि स्मृत्वा कथयिष्ये । ( घ )

---

( क ) पिअसहि अवि सुमरिदं तुए ।

( ख ) सहि सुमरिदम्[4] । अज्ज किल पमदवणे आसीणाए मम अग्गदो[5] केणावि अतिसइदादिव्वरूविणा णउलेण अहिसदं वावादिदम् ।

( ग ) सन्तं पावम् । पडिहदं[6] अमङ्गलम् तदो तदो ।

( घ ) अदिसंदावोवग्गहिअआए मए विसुमरिदं महीद । तापुणोवि सुमरिअ कहइस्सम् ।

---

मुञ्चन्ति ।] दलोपान्तः पत्रसमीपम् । तदेव जालमानायो गवाक्षं वा । भातीति भाः । अन्येभ्योऽपि दृश्यते इति क्विप् । पुंलिङ्गोऽप्ययम् इत्यमरटीकायां श्रीकरः । यद्वा । भाभिरिति पक्षे पुंलिङ्गोऽप्ययं भाःशब्दः । प्रभायामपि भाःशब्दः सान्तिः पुंलिङ्ग एव च । शब्दभेदादित्यवधेयमिह सहृदयेन । भानोर्भाभिस्तेजोभिः स्पृश्यमाना इति संबन्धः । गन्धमात्रे परिमलो विमर्दोत्थेऽपि दृश्यते । इति धरणिः । स्तोकमल्पम् । द्विरेफो भ्रमरः । नृपतिपक्षेऽपि सर्वं योज्यम् ॥ ७ ॥ साङ्ग्रामिकं युद्धे साधु ॥ ममाग्रत एव दिव्यरूपिणा । अत्र किल निश्चये । दिव्यरूपिणा सुन्दरेण । नकुलो नेउर इति प्रसिद्धो जन्तुः पाण्डवश्च । अहिशतं सर्पशतम् । अथ च शत्रुशतम् ॥ अत्रापवार्य निभृतम् । प्रकाशमिति । यत्तु सर्वजनश्राव्यं प्रकाशं तन्निगद्यते । इति भरतः । ततस्ततः ।

---

१ महाराज एषा देवी सुवदनातरलिकाभ्यां सह सुखोपविष्टा तिष्ठति. २ सहोपविष्टा. ३ यथाज्ञापयति देवः. ४ अस्मात्परं—सखी—कहेदु पिअसही । भानुमती—अज्ज किल इ. पा. ५ अग्गदो एव दिव्वरूवेण. ६ सन्तं पावम्.

**राजा**—अहो[1] देवी भानुमती सुवदनातरलिकाभ्यां सह किमपि मन्त्रयमाणा तिष्ठति। भवतु । अनेन लताजालेनान्तरितः शृणोमि तावदासां विश्रब्धालापम् । ( इति तथा[2] स्थितः। )

**सखी**—सखि अलं सन्तापेन। कथयतु प्रियसखी । ( क )

**राजा**—किं नु खल्वस्याः सन्तापकारणम्। अथवानामन्त्र्य मामियमद्य वासभवनान्निष्क्रान्तेति समर्थित एवास्या मया[3] कोपः । अयि भानुमति अविषयः खलु दुर्योधनो भवत्याः कोपस्य[4] ।

**किं कण्ठे शिथिलीकृतो भुजलतापाशः प्रमादान्मया**
**निद्राच्छेदविवर्तनेष्वभिमुखं[5] नाद्यासि संभाविता ।**
**अन्यस्त्रीजनसंकथालघुरहं स्वप्ने त्वया लक्षितो**
**दोषं पश्यसि कं प्रिये परिजनोपालम्भयोग्ये मयि ॥ ८ ॥**

( विचिन्त्य। ) अथवा ।

**इयमस्मदुपाश्रयैकचित्ता मनसा प्रेमनिबद्धमत्सरेण ।**
**नियतं कुपितातिवल्लभत्वात्स्वयमुत्प्रेक्ष्य ममापराधलेशम् ॥ ९ ॥**

तथापि शृणुमस्तावत्किं वक्ष्यतीति ।

**भानुमती**—हला अहं ततस्तस्यातिशयितदिव्यरूपिणो नकुलस्य दर्शनोत्सुका जाता। ( ख )

---

**( क )** सहि अलं संदावेण । कहेदु पिअसही ।

**( ख )** हला अहं तदो तस्स अदिसइदादिव्वरूविणो णउलस्स दंसेणेण उच्छुआ जादा ।

---

मन्त्रयमाणा मन्त्रं कुर्वती । किं कण्ठ इति । [ अद्य मया प्रमादात् तव कण्ठे भुज० शिथिलीकृतः किम् ] निद्रायाश्छेदोऽवसानं तत्र विवर्तनं पार्श्वपरिवर्तनम् । [ अद्य गतायां रात्राविवर्थः । निद्राच्छेदविवर्तनेषु अभिमुखं अभिमुखो भूत्वा इत्यर्थः । मया त्वं न संभाविता संमानिता किम् । ] संभाविता संमुखीकृता । [ अन्यस्त्रीजनेन सह या ] संकथा आलापः [ तया लघुः क्षुद्रवृत्तिः अहं त्वया लक्षितः किम् । ] उपालम्भो विसंवादः । [ परिजन इवोपालम्भयोग्ये मयि यद्वा परिजनस्योपालंभस्तद्योग्ये । कृतापराधोऽहं परिजनवन्निर्भर्त्स्यो न त्वन्यथा मयि कोपः

---

१ ( अवलोक्य ) अहो. २ इति तथा कृत्वा स्थितः. ३ मयि. ४ कोपस्य । पश्य. ५ अभिमुखी.

**राजा**—( सवैलक्ष्यम्। ) किं नामातिशयितदिव्यरूपिणो नकुलस्य दर्शनेनोत्सुका जाता। तत्किमनया पापया माद्रीसुतानुरक्तया वयमेवं विप्रलब्धाः। ( सोत्प्रेक्षम् इयमस्मद्–इति पठित्वा। ) मूढ दुर्योधन कुलटाविप्रलभ्यमानमात्मानं बहुमन्यमानोऽधुना किं वक्ष्यसि[२]। ( किं कण्ठ इत्यादि पठित्वा। दिशोऽवलोक्य। ) अहो एतदर्थमेवास्याः प्रातरेव विविक्तस्थानाभिलाषः सखीजनसंकथासु[४] च पक्षपातः। दुर्योधनस्तु मोहादविज्ञातबन्धकीहृदयसारः क्वापि परिभ्रान्तः। आः पापे मत्परिग्रहपांसुले[५]

> **तद्भीरुत्वं तव मम पुरः साहसानीदृशानि**
> **श्लाघा सास्मद्वपुषि विनयव्युत्क्रमेऽप्येष रागः।**
> **तच्चौदार्यं मयि जडमतौ चापले कोऽपि पन्थाः**
> **ख्याते तस्मिन्वितमसि कुले जन्म कौलीनमेतत्[६]॥ १०॥**

---

कार्य इत्यर्थः। ] ॥ ८ ॥ **इयमिति** । [ अस्माकमुपाश्रयः सान्निध्यं अस्मदु० स एव एकः प्रधानः तत्र चित्तं यस्या सा तथोक्ता इयं प्रेमनिबद्धमत्सरेण मनसा मम अपराधलेशं स्वयमुत्प्रेक्ष्य अतिवल्लभत्वात् नियतं कुपिता इत्यन्वयः ] उपाश्रयः संश्रयः । तद्गतेति यावत् । [ मम सान्निध्यमेव वांछन्तीत्यर्थः । ] मनसा कारणभूतेनास्मदुपाश्रयैकचित्तेत्यन्वयः। निबद्धं निरस्तम्। [ प्रेम्णा निबद्धो मत्सरोऽन्यस्त्रीविषयको यस्मिन्। मत्सरोऽन्यशुभद्वेषः ] इत्यमरः । [ स्वयमुत्प्रेक्ष्य असन्तमपि तर्कयित्वा ] ॥ ९ ॥ कुलटया वेश्ययानया वृथा प्रेमदर्शनेन प्रतार्यमाणम्। ] माद्रीसुतो नकुलः॥ [ विप्रलब्धा वञ्चिताः। ] विप्रलम्भो विसंवादः इत्यमरः। कुलटा बन्धकीत्वरी इत्यमरः। [ विविक्तं विजनम् । ] विविक्तौ पूतविजनौ इत्यमरः। [ पक्षपात आदरः। मोहाद्यथार्थाज्ञानात्। ] बन्धकी वेश्या। सारः स्थैर्यम्। परिग्रहोऽत्र कलत्रम्। तत्र पांशुला असती । **तद्भीरुत्वमिति**। [ मम पुरतः तव तत् तथा दर्शितं भीरुत्वम्। परोक्षे तु ] ईदृशानि परपुरुषगमनरूपाणि। [ साहसानि। ] [ विनयस्य पातिव्रत्यरूपस्य ] व्युत्क्रमोऽतिक्रमः । [ तत्र एष ] रागोऽनुरागः। [ मयि जडमतौ तत् तथा प्रदर्शितम् औदार्यं दाक्षिण्यम्। ] चापले चाञ्चल्ये। तव कोऽपि पन्थाः किमपि वर्त्म। [ प्रवृत्तिरित्यर्थः। ] सर्वत्र तवेत्यन्वयः। [ तस्मिन् ख्याते वितमसि निष्कलंके कुले तव जन्म। एतत् कौलीनं कुकर्म ] कौलीनमपवादः। कौलीनं पशुभिर्युद्धे कुलीनत्वापवादयोः ।

---

१ एतन्नास्ति क्वचित्. २ किं न वक्ष्यसि. ३ एतत् केषुचित्पुस्तकेषु नास्ति. ४ कथासु. ५ अस्मत् ; पांसुले–पांसनि. ६ लोकापवादः.

**सखी**—ततस्ततः । ( क )

**भानुमती**—तत उज्झित्वा तदासनस्थानं लतामण्डपं प्रविष्टा । ततः सोऽपि मामनुसरन्नेव लतामण्डपं प्रविष्टः । ( ख )

**राजा**—अहो कुलटोचितमस्याः पापाया अशालीनत्वम् ।

> **यस्मिंश्चिरप्रणयनिर्भरबद्धभाव-**
> **मावेदितो रहसि मत्सुरतोपभोगः ।**
> **तत्रैव दुश्चरितमद्य निवेदयन्ती**
> **ह्राणासि पापहृदये न सखीजनेऽस्मिन् ॥ ११ ॥**

**उभे**—ततस्ततः । ( ग )

**भानुमती**—ततस्तेन सगर्वं प्रसारितकरेणापहृतं मे स्तनांशुकम् ।(घ)

**राजा**—( विचिन्त्य । ) सगर्वं प्रसारितकरेणापहृतं मे स्तनांशुकम् । ( सक्रोधम् । ) अलमतः परं श्रुत्वा । भवतु तावत्तस्य परवनितास्कन्दन-प्रगल्भस्य माद्रीसुतहतकस्य जीवितमपहरामि । (किंचिद्गत्वा । विचिन्त्य । ) अथवा इयमेव तावत्पापशीला प्रथममनुशासनीया ( इति निवर्तते । )

**उभे**—ततस्ततः । ( ङ )

---

( क ) तदो तदो । ( ख ) तदो उज्झिअ तं आसणट्ठाणं लदामण्डवं पविट्ठा । तदो सोवि मं अणुसरन्तो एव्व लदामण्डवं पविट्ठो ।

( ग ) तदो तदो । ( घ ) तदो तेण सगव्वं पसारिअकरेण अवहरीअं मे त्थणंसुअम् । ( ङ ) तदो तदो ।

---

इति विश्वः ॥ १० ॥ ततः सोऽपि मामनुरुध्यमानस्तमेव लतामण्डपं प्रविष्टः । अशालीनत्वं निर्लज्जता । यस्मिन्निति ॥ [ हे पापहृदये यस्मिन्सखीजने चिरं प्रणयेन चिरप्रणयेन वा निर्भरं अतिमात्रं यथा तथा बद्धो भावो यस्मिन्कर्मणि तद्यथा तथा मत्सुरतोपभोगः रहसि आवेदितः तत्रैव अस्मिन् सखीजने अद्य दुश्चरितं निवेदयन्ती न ह्रीणा असि । ] प्रणयः प्रेम्णि विस्रम्भे इति विश्वः । भावोऽभिप्रायः । रहस्येकान्ते । ह्रीणा लज्जावती ॥ ११ ॥ ततस्तेन सप्रगल्भप्रसारितकरेण सर्पगर्भप्रसारितकरेण वापहृतं मे स्तनांशुकम् । अवस्कन्द अवस्कन्दः । जीवितं

---

१ एतस्याः. २ पापशीलायाः. ३ पापशीलत्वम्; दुःशीलत्वम्. ४ बालभावम्. ५ ह्रीतासि. ६ सप्रगल्भं. ७ अलमिदानीमतःपरमाकर्णनेन. ८ तदो अहं तुवरिदं आसणट्ठाणं एदं लदामण्डवं पविट्ठा. ९ अणुबद्धन्तो १० सप्पगब्भं.

**भानुमती**—ततोहमार्यपुत्रस्य प्रभातमङ्गलतूर्यरवमिश्रेण वारविलासिनीसङ्गीतशब्देन प्रतिबोधितास्मि। (क)

**राजा**—(सवितर्कम्।) किं[2] नु प्रतिबोधितास्मीति स्वप्नदर्शनमनया वर्णितं भवेत्। (विचिन्त्य।) भवतु[3] सखीवचनाद्व्यक्तिर्भविष्यति।

(उभे सविषादमन्योन्यं पश्यतः।)

**सुवदना**—यत्किमप्यत्रात्याहितं तद्भागीरथीप्रमुखाणां नदीनां सलिलेनापह्नियताम्। भगवतां ब्राह्मणानामप्याशिषा आहुतिहुतेन प्रज्वलितेन भगवता हुताशनेन च नश्यतु। (ख)

**राजा**—अलं विकल्पेन। स्वप्नदर्शनमेवैतदनया वर्णितम्। मया पुनर्मन्दधियाऽन्यथैव संभावितम्।

**दिष्ट्यार्धश्रुतविप्रलम्भजनितक्रोधादहं नो गतो**
**दिष्ट्या नो परुषं रुषार्धकथने किंचिन्मया व्याहृतम्।**
**मां प्रत्याययितुं विमूढहृदयं दिष्ट्या कथान्तं गता**
**मिथ्यादूषितयानया विरहितं दिष्ट्या न जातं जगत्॥ १२॥**

---

(क) तदो अहं अज्जउत्तस्स पभादमङ्गलतूररवमिस्सेण वारविलासिणीसङ्गीदसद्देण पडिबोधिदह्मि। (ख) जं किं वि एत्थ अच्चाहिदं तं भाईरहीप्पमुहाणं णईणं सलिलेण अवहारीअदु। भअवदाणं बह्मणाणं वि आसीसाए आहुदिहुदेण पज्जलिदेण भअवदा हुदासणेण अ णस्सदु।

---

जीवनम्। अत्र—आर्यपुत्रेति संबोध्यः पतिः पत्नीजनेन तु। इति भरतः। [प्रभातकालिकानि मङ्गलानि तूर्याणि तेषां रवेण मिश्रः तेन।] वारविलासिनी वेश्या। [अत्याहितं महाभीतिदं। अत्याहितं महाभीतिः इत्यमरः। आहुतिभिर्हुतस्तेन। हुता आहुतयो यस्मिन् तथा तेन इति वा।] हुताहुतिसुरभिगान्धिना ज्वलनेनापह्रियताम्। अत्र अत्याहितमप्रशस्तम्। **दिष्ट्येति**। [अर्धश्रुतेन यो विप्रलम्भो वञ्चना तेन जनितः यः क्रोधस्तस्मात्। अहं न गत इति दिष्ट्या भाग्येनेति हर्षहेतुः। दिष्ट्या समुपजोषं चेत्यानन्दे इत्यमरः।] दिष्ट्या हर्षेण। नो निषेधे। अमानोना निषेधवचनाः इति कोशात्। [दिष्ट्या अर्धकथने कथामध्ये मया रुषा क्रोधेन किंचित् परुषं कठिनं नो व्याहृतमुक्तम्। दिष्ट्या विमूढं यथार्थग्रहणा-

---

१ एतत्क्वचिन्नास्ति. २ किं नाम, किं नाम खलु. ३ अथवा सखीवचनादेव. ४ एतदनन्तरं (सवैलक्ष्यहर्षम्।) इत्यधिकं क्वचित्. ५ वचनक्रोधात्. ६ प्रत्यापयितुम्. ७ हला तदो. ८ विलासिणीजणसङ्गीदरवेण (टी.). ९ बह्मणाणं हुदाहुदिसुअन्धिणा ज्जलणेण अवहारीअदु।

**भानुमती**—हला कथय किमत्र शुभसूचकम्। ( क )

**सखी चेटी च**—(अन्योन्यमवलोक्य अपवार्य।)अत्र नास्ति स्तोकमपि शुभसूचकम्। यद्यत्रालीकं कथयिष्ये तत्प्रियसख्या अपराधिनी भविष्यामि। स एव स्निग्धो जनो यः पृष्टः परुषमपि हितं भणाति। (प्रकाशम्।) सखि सर्वमेवैतदशुभनिवेदनम्। तद्देवतानां प्रणामेन द्विजातिजनप्रतिग्रहेण चान्तर्यताम्। न खलु दंष्ट्रिणो नकुलस्य वा दर्शनमहिशतवधं च स्वप्ने प्रशंसन्ति विचक्षणाः। ( ख )

**राजा**—अवितथमाह सुवदना। नकुलेन पन्नगशतवधः स्तनांशुकापहरणं च नियतमरिष्टोदर्कं तर्कयामि।

**पर्यायेण हि दृश्यन्ते स्वप्नाः कामं शुभाशुभाः।**
**शतसंख्या पुनरियं सानुजं स्पृशतीव माम्॥ १२॥**

---

**( क )** हला कहेहि किं ऍत्थ सुहसूअअम्।

**( ख )** एत्थ णत्थि त्थोअं वि सुहसूअअम्। जइ एत्थ अलीअं कहइस्सं ता पिअसहीए अवराहिणी भविस्सम्। सो ऍव्व सिणिद्धो जणो जो पुच्छिदो परुसं वि हिदं भणादि। सही सव्वं एव्व एदं असुहणिवेदणम्। ता देवदाणं पणामेन दुजादिजनपडिग्गहेण अ अन्तरीअदु। णहु दाढिणो णउलस्स वा दंसणं अहिसदवहं अ सिविणए पसंसन्ति विअक्खणा।

---

समर्थ हृदयं यस्य तं मां ] प्रत्याययितुं बोधयितुम्। कथा अन्तं गता समाप्ता। [ दिष्ट्या जगत् मिथ्या दूषितया अनया विरहितं न जातम् ] ॥ १२॥ सखि कथय किमत्र प्रशस्तं किं चाशुभसूचकमिति। [ अत्र सखी चेटी च अन्योन्यमवलोकयतः। **सखी**–( अपवार्य ) इति पाठः युक्तः।] तथाप्युपदिशन्त्यो वयं प्रतिष्ठामहे। ततोऽलीकं मन्त्रयन्त्यः प्रियसख्या अपराधिन्यो भविष्यामः। सर्वमेवैतदत्यद्भुतानिवेदनम्। तथाप्यत्र यत्किमप्यत्याहितं तद्देवतानां प्रणामेन द्विजातिजनप्रतिग्रहेण चान्तरीक्रियताम्। न पुनर्दंष्ट्रिणो नकुलस्य वा दर्शनमहिशतव्यापादनं च स्वप्ने प्रशंसन्ति विचक्षणाः। अत्र परुषं निष्ठुरम्। अन्तरीक्रियतां शाम्यताम्। इहाशीरलंकारः। यदुक्तम् तत्रैव—आशीरिष्टार्थशासनम् इति। विचक्षणाः पण्डिताः। अवितथं सत्यम्। पन्नगः सर्पः। [ अरिष्टमशुभमुदर्के उत्तरकाले यस्य।] उदर्क उत्तरविशुद्धिः। **पर्यायेणेति**। [ स्वप्नाः पर्यायेण शुभाशुभाः दृश्यन्ते। कदाचित् शुभफलोत्पादकाः कदाचिदशुभपरिणामा इत्यर्थः।] अकामानुमतौ कामम् इत्यमरः। इयं शतसंख्या पुनर्मां स्पृशतीत्यन्वयः॥ १२॥

---

१ हरणमिति. २ आनिष्टो. अरिष्टोदर्कमस्माकं. ३ प्रायेणैव. ४ एत्थ पसत्थं किं च असुहसूअअं त्ति ( टी. ). ५ तदो अलीअं कहन्ती. ६ दाणिं. ७ दुव्वादिपडि०. ८ वि.

(वामाक्षिस्पन्दनं सूचयित्वा ।) आः[1] ममापि नाम दुर्योधनस्यानिमित्तानि हृदयक्षोभमावेदयन्ति[2]। (सावष्टम्भम् ।) अथवा भीरुजनहृदयप्रकम्पनेषु का गणना दुर्योधनस्यैवंविधेषु[3]। गीतश्चायमर्थोऽङ्गिरसा ।

ग्रहाणां चरितं स्वप्नोऽनिमित्तान्युपयाचितम्[4]।
फलन्ति काकतालीयं तेभ्यः प्राज्ञा न बिभ्यति ॥ १४ ॥

तद्भानुमत्याः स्त्रीस्वभावसुलभामलीकाशङ्कामपनयामि ।

**भानु०**—हला सुवदने पश्य तावदुदयगिरिशिखरान्तरितविमुक्तरथवरो विगलितसन्ध्यारागप्रसन्नदुरालोकमण्डलो जातो भगवान्दिवसनाथः । (क)

**सखी**—सखि रोषाणितकनकपत्रसदृशेन लताजालान्तरोपहितकिरणनिवहेन पिञ्जरितोद्यानभूमिभागो दुःप्रेक्षणीयो भगवान्सहस्ररश्मिः संवृत्तः । तत्समयस्ते लोहितचन्दनकुसुमगर्भेणार्घेण पर्युपस्थातुम् । (ख)

---

(क) हला सुवअणे पेक्ख[5] दाव उदअगिरिसिहरन्तरिदविमुक्करहवरो विअलिअसंझाराअप्पसण्णदुरालोअमण्डलो जादो भववं दिवणाहो ।

(ख) सहि रोसाणिदकणअपत्तसरिसेण लदाजालन्तरोपहिदकिरणानिवहेण पिञ्जरिदोज्जाणभूमिभाणो दुप्पेक्खणिज्जो भअवं सहस्सरस्सी संवुत्तो । तां समओ दे लोहिदचन्दणकुसुमगब्भेण अग्घेण पज्जुवट्ठादुम् ।

---

आवहन्तीत्यत्र रूढिच्युतकदोषो नास्ति । विशेषगुणेषूद्धृतत्वादित्यवधेयम् । [प्रकम्पनेषु कम्पकारिषु । का गणना तुच्छान्येतानीत्यर्थः ।] ग्रहाणामिति । सूर्यादिदशाः स्वप्नोऽनिमित्तमकस्मादौत्पातिकमुत्पातवातादिकमेते काकतालीयमतर्कितोपनतं यथा स्यादेवं फलन्ति । अतस्तेभ्यः प्राज्ञाः पण्डिता न बिभ्यति । न भयं कुर्वन्तीत्यर्थः । तेभ्य इति भीत्रार्थानां भयहेतुः इति पञ्चमी ॥ १४ ॥ [अलीका चासौ आशंका च ताम् । सुवदने पश्य तावदुदयशैल......विगलत्सन्ध्यारागः... [विगलितो यः सन्ध्यारागस्तेन प्रसन्नमत एव दुरालोकं मण्डलं यस्य ।] सखि रोसानितकनकपत्रसदृशेन लताजालान्तरवलितकिरणनिवहेन पिञ्जरितोद्यान-

---

१ आः कथं. २ आवहन्ति. एवंविधेषु कश्मलेषु इति क्वचित्पाठः. ४ अनिमित्तौत्पातिकं तथा; निमित्तान्यौपपातिकाः; अनिमित्तोत्पादकं तथा. ५ वाचिकम्. ६ इदं नास्ति क्वचित्. ७ सिहरन्तर. ८ विअलन्त (टी.) विलैअन्तसंझाराओ आसण्णदुरालोअमण्डलो. ९ चेटी–भट्टिणि. १० रोसाणिदकण्णकन्तिसस्सिरीएण (रोषान्वितकर्णकान्तिसश्रीकेण); कण्णरअण (रत्न) कान्तिः; साणिदकणअरओसरिसेण; रोसरुणिदकणअरआसरिसेण; उज्जलीकिअकणअबिन्दुप्पअरसस्सिरीएण (उज्ज्वलीकृतकनकबिन्दुप्रकरसश्रीकेण). ११ लदाजालन्तरापडिदकिरणजालेन. १२ पिसङ्गिकिदा. १३ पूरिदपडिण्णो विअ रिउदुप्पेक्खणिज्जो जादो...सहस्साकिरणो. १४ कुसुमचन्दणगब्भेण.

**भानुमती**—हञ्जे तरलिके उपनय मेऽर्घ्यभाजनं यावद्भगवतः सहस्ररश्मेः सपर्यां निर्वर्तयामि। (क)

**चेटी**—यद्देव्याज्ञापयति। (इति निष्क्रान्ता) (ख)

**राजा**—अयमेव साधुतरोवसरः प्रियासमीपमुपगन्तुम्।

(इत्युपसर्पति।)

(प्रविश्य।)

**चेटी**—भट्टिनि इदमर्घ्यभाजनम्। तन्निवर्त्यतां भगवतः सहस्ररश्मेःसपर्या। (ग)

**सखी**—(विलोक्यात्मगतम्) कथं महाराज आगतः। हन्त जातोस्या नियमभङ्गः। (घ)

(राजा उपसृत्य संज्ञया परिजनमुत्सार्य स्वयमेवार्घ्यपात्रं गृहीत्वा ददाति।)

**भानुमती**—(दिनकराभिमुखी भूत्वा) भगवन् अम्बरमहासरएक-सहस्रपत्र पूर्वदिशावधूमुखमण्डलकुङ्कुमाविशेषक सकलभुवनैकरत्नप्रदीप यदत्र स्वप्नदर्शने किमप्यत्याहितं तद्भगवतः प्रणामेन सभ्रातृकस्यार्य-पुत्रस्य कुशलपरिणामि भवतु। (अर्घ्यं दत्वा) हञ्जे तरलिके उपनय मे कुसुमानि अपरासामपि देवतानां सपर्यां निर्वर्तयामि। (हस्तौ प्रसारयति।) (ङ)

---

(क) हञ्जे तरलिए उवणेहि मे अग्घभाअणं जाव भअवदो सहस्सरस्सिणो सवरिअं णिव्वट्टेमि। (ख) जं देवी आणवेदि। (ग) भट्टिणि एदं अग्घ-भाअणम्। ता णिव्वट्टीअदु भअवदो सहस्सरस्सिणो सवरिआ। (घ) कहं महाराओ आअदो। हन्त जादो से णिअमभङ्गो।

(ङ) भअवं अम्बरमहासरेक्कसहस्सपत्त पुव्वदिसावहूमुहमण्डलकुङ्कुमविसेसअ सअलभुवणेक्करअणप्पदीव जं एत्थ सिविणअदंसणे किं वि अच्चाहिदं तं भअवदो

---

भूमिभागः पूरितप्रतिज्ञ इव रिपुदुःप्रेक्षणीयो जातो भगवान्सहस्रकिरणः। तत्समयस्ते कुसुमचन्दनगर्भेणार्घेण पर्युपस्थातुम्। अत्र रोसानितं निर्मली-कृतम्। पिञ्जरितः कपिशीकृतः। पर्युपस्थातुं पूजयितुम्। अत्र सपर्या पूजा। देवि एतदर्घभाजनम्। भगवन्नम्बरसरोवरैकसहस्रपत्र पूर्वदिग्वधूमुखमण्डलकुङ्कुमविशेषक सकलभुवनाङ्गनदीपक इह स्वप्रदर्शने यत्किमप्यत्याहितं तद्भगवतः प्रणामेन

---

१ समीपमुपगन्तुं देव्याः. २ आदाय देव्याः समर्पयति. ३ मुखीभूय। ४ सहस्सकिरणस्स. ५ णिवट्टेदु भअवदो सहस्सरस्सिणो सवरिअम्। ६ (स्वगतम्) ...समाअदो। हन्त किदो से पिअसहीए णिअमभङ्गो रण्णा. ७ भुवणाङ्गणदीअ.

(राजा पुष्पाण्युपनयति । स्पर्शसुखमभिनीय च कुसुमानि भूमौ पातयति।)

**भानुमती**—(सरोषम्।) अहो प्रमादः परिजनस्य। (परिवृत्य दृष्ट्वा ससंभ्रमम्।) कथमार्यपुत्रः। (क)

**राजा**—देवि अनिपुणः परिजनोऽयमेवंविधे सेवावकाशे। तत्प्रभवत्यत्रानुशासने देवी।

**भानुमती**—(लज्जां नाटयति।)

**राजा**—अयि प्रिये

> **विकिर धवलदीर्घापाङ्गसंसर्पि चक्षुः**
> **परिजनपथवर्तिन्यत्र किं संभ्रमेण।**
> **स्मितमधुरमुदारं देवि मामालपोच्चैः**
> **प्रभवति मम पाण्योरञ्जलिः सेवितुं त्वाम्॥ १५॥**

**भानुमती**—आर्यपुत्र अभ्यनुज्ञातायास्त्वया अस्ति मे कस्मिन्नपि नियमेऽभिलाषः। (ख)

---

पणामेण सभादुअस्स अज्जउत्तस्स कुसलपरिणामि होदु। हञ्जे तरलिके उवणेहि मे कुसुमाइं अवराणं वि देवदाणं सवरिअं णिव्वट्टेमि।

(क) अहो पमादो परिअणस्स। कधं अज्जउत्तो।

(ख) अज्जउत्त अब्भणुण्णादाए तुए अत्थि मे कस्सिं वि णिअमे अहिलासो।

---

कुशलपरिणामं मम सशतभ्रातृकस्यार्यपुत्रस्य भवतु। अत्र सहस्रपत्रं कमलम्। विशेषकस्तिलकः। अङ्गनं चत्वराजिरे इत्यमरः। अत्र णत्वविधायकसूत्राभावान्नकारान्तत्वमेवेत्यवधेयम्। अनिपुणोऽकुशलः। **विकिरेति**। [हे देवि संभ्रमेण अलम्। परिजनस्य पन्थाः परिजनपथः। तत्र वर्तितुं शीलमस्य तस्मिन्परिजनपथवर्तिनि अत्र मयि। धवलश्चासौ दीर्घश्च यः अपाङ्गस्तेन संसर्पतीति तच्छीलं चक्षुः] विकिर विक्षिप। अपाङ्गं नेत्रप्रान्तः। तत्र संसर्पि गमनशीलम्। परिजनपथवर्तिनि सेवकमार्गस्थिते मयि। किं संभ्रमेणोद्वेगेन। स्मितमधुरमुदारं मनोहरं च यथा स्यादेवं हे देवि मामालप ब्रूहि। मम पाण्योरञ्जलिः [त्वां सेवितुं प्रभवति।] उच्चैः प्रभवतु। अयमञ्जलिर्बद्ध इत्यर्थः। अतोऽस्मांस्त्वं स्पृश। स्पर्शमपि मम विधेहीत्यर्थः। पाण्योरञ्जलिरित्यत्रार्थपौनरुक्त्यं न देश्यम्। उक्तपोषालंकारेण तदुद्धारात्॥ १५॥

---

१ राज्ञः पुष्पाण्युपनयतः स्पर्शाद्धस्तादर्घ्यपात्रं भूमौ पतति; दुर्योधनः पुष्पाण्युपनयति; भानुमत्यास्तत्स्पर्शजातकम्पाया हस्तात्पुष्पाणि पतन्ति। इ. पा. २ परिवृत्य, राजानमवलोक्य ससाध्वसं लज्जां नाटयति. ३ तथा. ४ एतत्काचिन्नास्ति. ५ भीरु. ६ प्रभवतु (टी.);... लिस्त्वं स्पृशास्मान (टी.). ७ ससदब्भादु. ८ अब्भणुजाणादु मं महाराओ।

**राजा**—श्रुतविस्तार एवास्मि भवत्याः स्वप्नवृत्तान्तं प्रति। तदलमेवं प्रकृतिसुकुमारमात्मानं खेदयितुम्[1]।

**भानुमती**—आर्यपुत्र अतिमात्रं मां शङ्का बाधते। तदनुमन्यतां मामार्यपुत्रः। (क)

**राजा**—(सगर्वम्।) देवि अलमनया शङ्कया। पश्य।

**किं नो व्याप्तदिशां प्रकम्पितभुवामक्षौहिणीनां फलं**
**किं द्रोणेन किमङ्गराजविशिखैरेवं यदि क्लाम्यसि।**
**भीरु भ्रातृशतस्य मे भुजवनच्छायां सुखोपस्थिता[2]**
**त्वं दुर्योधनकेसरीन्द्रगृहिणी शङ्कास्पदं किं तव॥ १६॥**

**भानुमती**—आर्यपुत्र न खलु किमपि मे शङ्काकारणं युष्मासु सन्निहितेषु। किं त्वार्यपुत्रस्यैव मनोरथसंपत्तिमभिनन्दामि। (ख)

**राजा**—अयि सुन्दरि एतावन्त एव मनोरथा यदहं दयितया[3] सङ्गतः स्वेच्छया विहरामीति। पश्य।

**प्रेमाबद्धास्तिमितनयनापीयमानाब्जशोभं[4]**
**लज्जायोगादविशदकथं मन्दमन्दस्मितं वा।**

---

(क) अज्जउत्त अदिमेत्तं मे सङ्का बाहेइ। ता अणुमण्णदु मं अज्जउत्तो।

(ख) अज्जउत्त ण हु किं वि मे सङ्काकालणं तुम्हेसु सण्णिहिदेसु। किं तु अज्जउत्तस्स एव्व[6] मणोरहसंपत्तिं अहिणन्दामि।

---

**किं नो व्याप्तेति**। [यदि त्वमेवं क्लाम्यसि ग्लायसि तर्हि व्याप्ता दिशो याभिस्तासां नः प्रकम्पिता भूर्याभिस्तासां अक्षौहिणीनां किं फलम्। तथा च द्रोणेन। तत्पराक्रमेणेत्यर्थः। किं फलम्। अङ्गानां राजा अङ्गराजः कर्णः तस्य विशिखैः बाणैः किं फलम्।] अक्षौहिणी संख्याभेदः।[अक्षौहिण्याः प्रसंख्याता रथानां द्विजसत्तमाः।संख्या गणिततत्त्वज्ञैः सहस्राण्येकविंशतिः॥ शतान्युपरि चैवाष्टौ तथा भूयश्च सप्ततिः (२१८७०) गजानां च परीमाणमेतदेव विनिर्दिशेत्॥ ज्ञेयं शतसहस्रं तु सहस्राणि नवैव तु। नराणामपि पञ्चाशच्छतानि त्रीणि चानघाः॥ पञ्चषष्टिसहस्राणि तथाश्वानां शतानि च। दशोत्तराणि षट् प्राहुर्यथावदिह संख्यया॥ इति महाभारते आदिपर्वणि अ० २ श्लो० २३-२६] किं द्रोणेनेत्यादौ फलमित्यनुषज्यते। अङ्गराजः कर्णः। क्लाम्यसि परिश्राम्यसि। हे भीरु। [मे भ्रातृशतस्य भुजा एव वनं तस्य छायां सुखेनोपस्थिता। किं च दुर्योधनः केसरीन्द्रः तस्य गृहिणी एव]॥१६॥ न खलु शब्दो निषेधे। दयिता कान्ता। **प्रेमेति**। एतादृशं वा तव वक्त्रेन्दुं पातुं दुर्योधनस्य किं वाञ्छा न। अपि तु

---

१ अलमव. २ या...०च्छायासुखो०. ३ वनितया, समागतस्त्वया. ४ वस्थ०-बन्ध. ५ नं पीयमानान्य०. ६ एवं; जेव.

वक्त्रेन्दुं ते नियममुषितालक्तकाग्राधरं वा
पातुं वाञ्छा परमसुलभं किं नु दुर्योधनस्य ॥ १७॥

( नेपथ्ये महान्कलकलः । सर्वे आकर्णयन्ति । )

भानुमती—( ससंभयं राजानं परिष्वज्य । ) परित्रायतां परित्रायतामार्यपुत्रः । ( क )

राजा—( समन्तादवलोक्य । ) प्रिये अलं संभ्रमेण । पश्य ।

दिक्षु व्यूढाङ्घ्रिपाङ्गस्तृणजटिलचलत्पांशुदण्डोऽन्तरिक्षे
झाङ्कारी शर्करालः पथिषु विटपिनां स्कन्धकाषैः सधूमः ।
प्रासादानां निकुञ्जेष्वभिनवजलदोद्गारगम्भीरधीर-
श्चण्डारम्भः समीरो वहति परिदिशं भीरु किं संभ्रमेण ॥ १८॥

सखी—महाराजः प्रविशत्विमं दारुपर्वतप्रासादम् ।उद्वेगकारी खल्वयमुत्थितपरुषरजःकलुषीकृतनयन उन्मूलिततरुवरशब्दवित्रस्तमन्दुरापरिभ्रष्टवल्लभतुरङ्गमपर्याकुलीकृतजनपद्धतिर्भीषणः समीरणासारः । (ख)

---

( क ) परित्ताअदु परित्ताअदु अज्जउत्तो ।

( ख ) महाराओ पविसदु एदं दारुपव्वअप्पासादम् । उव्वेअकारी क्खु अअं उत्थिदपरुसरअकलुसीकिदणअणो उम्मूलिअतरुवरसद्दवित्तत्थमन्दुरापरिब्भट्ठवल्लहतुलङ्गमपज्जाउलीकिदजणपद्धई भीसणो समीरणासारो ।

---

वाञ्छैव । कीदृशम् । प्रेम्णाबद्धं संबद्धमत एव स्तिमितं निश्चलं यन्नयनं तेनापीयमानं यदब्जं तद्वच्छोभा यस्य [ तेन करणभूतेन आपीयमाना तिरस्क्रियमाणा अब्जशोभा कमलसौन्दर्यं येन कर्त्रा स तथोक्तः ] तम् । लज्जासंबन्धादस्वच्छकथमत्यल्पहासं च । नियमान्मुषितः परवासीभूतः अलक्तको यत्र । तादृशोऽग्राधरो यत्र । परमातिशयेनासुलभं दुर्लभम् । अन्यतरुणानामिति शेषः ।। १७॥ दिक्ष्विति । हे भीरु किं संभ्रमेण भयेन । एतादृशः समीरो वायुः परिदिशं प्रतिदिशं वहति यतः । कीदृशः । दिक्षु व्यूढं संबद्धमङ्घ्रिपस्य पादपस्याङ्गं [शाखादि] येन स तथा ।अन्तरिक्षे व्योम्नि तृणेन जटिलो व्याप्तश्चलन्पांशुदण्डो दण्डाकारकधूलिर्यस्मात्स तथा। झाङ्कारः अव्यक्तशब्दस्तद्युक्तः। पथिषु शर्करालः शर्करायुक्तः। सिध्मादित्वात् मत्वर्थीयो लच्प्रत्ययः । विटपिनां वृक्षाणां स्कन्धकषणैर्धूमसहितः। प्रासादानां धवलगृहाणां मध्येषु नवजलधरोद्गमगम्भीररवः प्रचण्डोपक्रमः। अङ्घ्रिश्चरणस्तेन पिबति जलादिकमित्यङ्घ्रिपः। पदङ्घ्रिश्चरणोऽस्त्रियाम् इत्यमरः। कषणं काषः। भावे घञ्॥ १८॥ महाराज

---

१ नियत०, क्तकाङ्काधरम्. २ तु; न. ३ एतत् क्वचिन्नास्ति. ४ व्याक्षिप्तपर्णः; व्यूढाङ्घ्रिपाभः. ५ महाराअ आरोहिअदु. ( आरुह्यतां ). ६ उच्छेअकारी. ७ उत्थिदो; उद्धुदपांसुप्पसरो. ८ विअलिद ( विदलित ). ९ तुलङ्गमो पज्जा०. १० समीरणो.

**राजा**—( सहर्षम् । ) उपकारि खल्विदं वात्याचक्रं सुयोधनस्य । यस्य प्रसादादयत्नपरित्यक्तनियमया देव्या संपादितोऽस्मन्मनोरथः । कथमिति ।

**न्यस्ता न भ्रुकुटिर्न बाष्पसलिलैराच्छादिते लोचने**
**नीतं नाननमन्यतः सशपथं नाहं स्पृशन्वारितः ।**
**तन्व्या मग्नपयोधरं भयवशादाबद्धमालिङ्गितं**
**भङ्क्तास्या नियमस्य भीषणमरुन्नायं वयस्यो मम ॥ १९ ॥**

तत्संपूर्णमनोरथस्य मे कामचारः संप्रति विहारेषु । तदितो दारुपर्वत-प्रासादमेव गच्छामः ।

( सर्वे वात्याबाधां रूपयन्तो यत्नतः परिक्रामन्ति । )

**राजा**—

**कुरु घनोरु पदानि शनैः शनैरयि विमुञ्च गतिं परिवेपिनीम् ।**
**पतसि बाहुलतोपरिबन्धनं मम निपीडय गाढमुरःस्थलम् ॥ २० ॥**

---

आरुह्यतामेतद्दारुपर्वतप्रासादम् । उद्वेगकारी खलूद्भूतपरुषरजःकलुषीकृतनयन उन्मूलितस्खलिततरु... तुरङ्गमपर्याकुलीकृत... । [ आसारः समूहः । ] अत्र दारुपर्वतः काष्ठरचनाभेदः पर्वताकारः । यद्वा दारुपर्वत इति क्रीडापर्वतनाम । स्खलित इतस्ततो भ्रष्टः । वाजिशाला तु मन्दुरा इत्यमरः । पद्धतिर्वर्त्म । चक्रं समूहः । न्यस्तेति । अयं भीषणमरुन्मम वयस्यो मित्रं न । अपि तु मित्रमेव । यतोऽस्या नियमस्य भङ्क्ता भञ्जकः । नियमभङ्गानेवाह—भ्रुकुटिर्न न्यस्ता न कृता न वा नेत्रजलेन नेत्रं छन्नम् । अन्यत्र मुखं न कृतम् । स्पृशन्नहं न सशपथं वारितः । यदि मां स्पृशसि तदैव ते शपथ इति न कृतमित्यर्थः । तन्व्येति सर्वत्रान्वीयते । मग्नपयोधरं संबद्धस्तनं यथा स्यादेवं भयवशादालिङ्गितमालिङ्गनमाबद्धं कृतम् । एतानि भयात्तया कृतानीति मरुत उपकारकतेति भावः । यद्वा । अयं भीषणमरुन्न । किं तु मम वयस्य इति योजना । मैत्रं च तत्तत्क्रियाभिरुन्नेयम् ॥ १९ ॥ [ कामेन चारः ] कामचारः स्वेच्छाचरणम् ॥ कुर्विति । हे घनोरु निबिडोरुप्रदेशे । परिवेपिनीं कम्पवतीम् । हे सुतनु शोभनशरीरे । [ पतसीति पाठे वायुवशात्पतसि । अतः बाहुलतयोः उपरिबन्धनं यथा स्यात्तथा । ] ममोरःस्थलं गाढं दृढं निपीडय । बाहुलतयोपरिबन्धनं यथा स्यादेवम् ॥ २० ॥

---

१ एतत् क्वचिन्नास्ति. २ भुग्नपयोधरं; लग्नपयोधरं. ३ आलिङ्गितः आरब्धमालिङ्गितुम्. ४ नु मे. ५ पर्वतमेव. ६ अयि. ७ सुतनु. ८ तोपनिबन्धनम्.

( प्रवेशं रूपयित्वा । ) प्रिये अलब्धावकाशः समीरणैः संवृतत्वाद्गर्भ-गृहस्य । विस्रब्धमुन्मीलय चक्षुरुन्मृष्टरेणुनिकरम् ।

**भानुमती**—( सहर्षम् । ) दिष्ट्येह तावदुत्पातसमीरणो न बाधते । ( क )

**सखी**—महाराज आरोहणसंभ्रमनिःसहं प्रियसख्या ऊरुयुगलम् । तत्कस्मादिदानीं महाराज आसनवेदीं न भूषयति । (ख)

**राजा**—( देवीमवलोक्य । ) भवति अनल्पमेवापकृतं वात्यासंभ्रमेण । तथाहि ।

**रेणुर्बाधां विधत्ते तनुरपि महतीं नेत्रयोरायतत्वा-**
**दुत्कम्पोऽल्पोऽपि पीनस्तनभरितमुरः क्षिप्तहारं दुनोति ।**
**ऊर्वोर्मन्देऽपि याते पृथुजघनभराद्वेपथुर्वर्धतेऽस्या**
**वात्या खेदं कृशाङ्ग्याः सुचिरमवयवैर्दत्तहस्ता करोति ॥२१॥**

( सर्वे उपविशन्ति । )

**राजा**—तत्किमित्यनास्तीर्णं कठिनं शिलातलमध्यास्ते देवी ।

**लोलांशुकस्य पवनाकुलितांशुकान्तं**
**त्वद्दृष्टिहारि मम लोचनबान्धवस्य ।**

---

( क ) दिट्ठिआ इह दाव उप्पादसमीरणो ण बाधेई ।

( ख ) महाराअ आरोहणसंभमणिस्सहं पिअसहीए ऊरुजुअलम् । ता कीस दाणीं महाराओ आसणवेदीं ण भूसेदि ।

---

स्तिमितत्वं निविडत्वम् । [ संवृतत्वाच्छन्नत्वात् । ] गर्भगृहं गर्भहर इति प्रसिद्धम् । विस्रब्धं कृतविश्वासमिति क्रियाविशेषणम् । [उन्मृष्टः अपसारितः रेणुनिकरो यस्मात् तच्चक्षुः । ] दिष्ट्येह तावदुत्पातमारुतो न बाधते । तत्किंनिमित्तं...न भूषयति । [ संभ्रमेण त्वरया निःसहमसमर्थम् ।] रेणुरिति । नेत्रयोरायतत्वाद्दैर्घ्यात्तनुरप्यल्पोऽपि रेणुर्बाधां पीडां विधत्ते । अल्पोऽप्येष कम्पः । [ क्षिप्तो हारो यस्मात्तद् । उरो वक्षःस्थलं दुनोति पीडयति । भरितमिति तारकादित्वादितच् इति साधनीयम् । अन्यथा भृतमिति स्यादित्यवधेयम् । ऊर्वोराधारभूतयोर्वेपथुः कम्पः मन्देऽप्यल्पेऽपि याते गमने सति वर्धत इत्यन्वयः । अतो हेतोर्वायुः मृगाक्ष्याः [ कृशाङ्ग्याः ] खेदं करोति । कीदृशः । अवयवैः शरीरावयवैर्नयनादिभिर्दत्तहस्तः कृतसाहित्य इत्यर्थः । उभाभ्यामेव पीडा देव्या इति भावः ॥ २१ ॥ अनास्तीर्णं वस्त्रादिना अनाच्छादितम् । लोलेति । हे करभोरु तव जघनस्थलस्याध्यासितुं

---

१ लब्धान्तरः. २ समीरणासारः स्तिमितत्वात् ( टी. ). ३ उत्सृष्टरेणुव्यतिकरम्. ४ तनोति. ५ मृगाक्ष्याः ( टी. ). ६ अवयवैरित्थमाविष्करोति. ७ समीरणासारो.

**अध्यासितुं तव चिरं जघनस्थलस्य**
**पर्याप्तमेव करभोरु ममोरुयुग्मम् ॥ २२ ॥**

( प्रविश्य पटाक्षेपेण संभ्रान्तः )

**कञ्चुकी**—देव भग्नं भग्नम् ।

( सर्वे सोतङ्कं पश्यन्ति । )

**राजा**—किं नाम[2] ।

**कञ्चुकी**—भग्नं भीमेन ।

**राजा**—आः किं प्रलपसि ।

**भानुमती**—आर्य किमनर्थं मन्त्रयसे । (क)

**कञ्चुकी**—( सभयम् । ) ननु भग्नं भीमेन भवतः ।

**राजा**—धिक् प्रलापिन् वृद्धापसद कोयमद्य ते व्यामोहः ।

**कञ्चुकी**—देव[3] न खलु कश्चिद् व्यामोहः । सत्यमेव ब्रवीमि ।

**भग्नं भीमेन भवतो मरुता रथकेतनम् ।**
**पतित किङ्किणीक्वाणबद्धाक्रन्द्रमिव क्षितौ ॥ २३ ॥**

**राजा**—बलवत्समीरणवेगात्कम्पिते भुवने भग्नः स्यन्दनकेतुः । तत्किमित्युद्धतं प्रलपसि भग्नं भग्नमिति ।

---

**( क )** अज्ज किं अणॅत्थं मन्तेसि ।

---

जघनस्थलस्याश्रयणाय ममोरुयुग्मं पर्याप्तमेव शक्तमेव । कीदृशस्य । चपलवस्त्रस्य । मदीयनेत्रमित्रस्य । कीदृशम् । वाताकुलितांशुकान्तम् । त्वदीयदृष्टिहरणशीलं च । जघनस्थलस्येत्यत्र शेषे षष्ठी इति सूत्रेण षष्ठी । करस्य करभो बहिः । इत्यमरः ॥ २२ ॥ इह लोलेत्यादिभग्नमित्यन्तेन छलसन्धिरुक्तः । इष्टार्थयुक्तं यद्वाक्यं भाषतेऽर्थमभीप्सितम् । वाक्यान्तरेण संयोगाच्छलोऽयमभिधीयते ॥ इति भरतः । साकूतं साभिप्रायम् । किं नामेति । नाम प्राकाश्ये । किं तदिति प्रकाशयेत्यर्थः । आर्य किमनार्यं कथयसि ॥ **भग्नमिति** । भीमेन मरुता वायुना अथ च भीमसेनेन । मरुता वायुपुत्रेण । मरुतेत्यत्र आत्मा वै जायते पुत्रः इत्यभेदोपचाराद्वा तद्धितलोपाद्वा साधुतेत्यवधेयम् । केतनं चिह्नम् । किङ्किणीक्वाणः क्षुद्रघण्टिकाशब्दः [ तेन आबद्धः आक्रन्दो येन ] ॥२३॥ स्यन्दनो

---

१ साकूतम्; सभयम्. २ केन । **कञ्चु०**—भीमेन । **राजा**—कस्य । **कञ्चु०**—भवतः । इ. पा. ३ देव कथयामि सर्वम्—भग्नं भीमेन. । ४ अनिटं ( आनिटं ); अणअं ( अनयं ).

**कञ्चुकी**——देव न किंचित् । किंतु शमनार्थमस्यानिमित्तस्य विज्ञापयितव्यो देव इति स्वामिभक्तिर्मां मुखरयाति ।

**भानुमती**——आर्यपुत्र परिहार्यतामेतदनिमित्तं प्रसन्नब्राह्मणवेदानुघोषेण होमेन च । ( क )

**राजा**——( सावज्ञम् । ) ननु गच्छ । पुरोहि[1]तसुमित्राथ निवेदय ।

**कञ्चुकी**——यदाज्ञापयति देवः । ( इति निष्क्रान्तः । )

( प्रविश्य । )

**प्रतीहारी**——( सोद्वेगमुपसृत्य । ) जयतु जयतु महाराजः । महाराज एषा खलु जामातुः सिन्धुराजस्य माता दुःशला च प्रतीहारभूमौ तिष्ठति । ( ख )

**राजा**——( किंचिद्विचिन्त्या[2]त्मगतम् । ) किं जयद्रथमाता दुःशला चेति । क[3]च्चिदभिमन्युवधामर्षितैः पाण्डुपुत्रैर्न किंचि[4]दत्याहितमाचेष्टितं भवेत् । ( प्रकाशम् । ) गच्छ । प्रवेशय शीघ्रम् ।

**प्रतीहारी**——यन्महाराज आज्ञापयति । ( इति निष्क्रान्ता । ) ( ग )

( ततः प्रविशति संभ्रान्ता जयद्रथमाता दुःशला च । )

( उभे सास्रं दुर्योधनस्य पादयोः पततः । )

**माता**——परित्रायतां परित्रायतां कुमारः ।( घ )

( दुःशला रोदिति । )

**राजा**——( ससंभ्रममु[5]त्थाप्य । ) अम्ब समाश्वसिहि समाश्वसिहि किमत्याहितम् । अपि कुशलं समराङ्गणेष्वप्रतिरथस्य जयद्रथस्य ।

---

( क ) अज्जउत्त पडिह[6]रीअदुएद अणिमित्तं पसण्णबह्मणवेआणुघोसेण होमेण अ ।

( ख ) ज[7]अदु जअदु महाराओ । महाराअ एसा क्खु जामादुणो सिन्धुराअस्स मादा दुस्सला अ पडिहारभूमीए चिट्ठदि ।

( ग ) जं [8]महाराओ आणवेदि । ( घ ) परित्ताअदु परित्ताअदु [9]कुमालो ।

---

रथस्तस्य केतुः चिह्नम् । [ अनिमित्तमपशकुनः तस्य । ] आर्यपुत्र अन्तरीयतामेतत्प्रसन्नब्राह्मणवेदघोषेण । [ पुरोहितेति–अत्र चाणक्यः–वेदवेदाङ्गतत्वज्ञो जपहोमपरायणः । आशीर्वादवचोयुक्त एष राजपुरोहितः ॥ इति । अयं च वेदाविहितं कुर्याच्छान्तिकपौष्टिकम् । इत्यग्निपुराणम् । सिन्धुराजमाता । अत्र सिन्धुराजो जयद्रथः ।

---

१ सूतपुरोहिताय. २ स्वगतम्. ३ कचित्. ४ कचित्. ५ उत्थाय. ६ अन्तरीअदु एदं पसण्णबह्मणवेअघोसेण ( टी. ); वअणमङ्गलवअणसमुग्घोसेण. ७ जअदि जअदि महाराओ । महाराअ महादेवी क्खु एसा सिन्धुराअमाता ( टी. ) ८ देवो. ९ कुरुणाहो.

**माता**—जात कुतः कुशलम् । ( क )

**राजा**—[१]कथमिव ।

**माता**—( साशङ्कम्[२] । ) अद्य खलु पुत्रवधामर्षोद्दीपितेन गाण्डीविना अनस्तमिते दिवसनाथे तस्य वधः प्रतिज्ञातः । ( ख )

**राजा**—( सस्मितम् । ) इदं तद[३]श्रुकारणमम्बाया दुःशलायाश्च । पुत्रशोका[४]दुन्मत्तस्य किरीटिनः प्रलापैःएवमवस्था । अहो मुग्धत्वमबला[५]नाम् । अम्ब कृतं विषादेन । वत्से दुःशले अलमश्रुपातेन । कुतश्चायं [६]तस्य धनञ्जयस्य प्रभावो दुर्योधनबाहुपरिघरक्षितस्य महारथजयद्रथस्य विपत्तिमुत्पादयितुम् ।

**माता**—जात ते हि पुत्रबन्धुवधामर्षोद्दीपितकोपानला अनपेक्षित-शरीरा वीराः परिक्रामन्ति । ( ग )

**राजा**—( सोपहासम् । ) एवमेतत् । सर्वजन[७]प्रसिद्धैवामर्षिता पाण्ड-वानाम् । पश्य ।

**हस्ताकृष्टविलोलकेशवसना दुःशासनेनाज्ञया**
**पाञ्चाली मम राजचक्र[८]पुरतो गौर्गौरिति व्याहृता ।**
**तस्मिन्नेव [९]स किं नु गाण्डिवधरो नासीत्पृथानन्दनो**
**यूनः क्षत्रियवंशजस्य कृतिनः क्रोधास्पदं किं न तत् ॥ २४ ॥**

---

( क ) जाद कुदो[१०] कुसलम् । ( ख ) अज्ज क्खु पुत्तवहामे[११]रिसुद्दीविदेण गण्डी-विणा अणत्थमिथे दिवहणाहे तस्स वहो पडिण्णादो । ( ग ) जा[१२]द दे हि पुत्त-बन्धुवहामरिसुद्दीविदकोवाणला अ[१३]णपेक्खिदसरीरा वीरा परिक्कमन्ति ।

---

[ प्रतीहारभूमिर्द्वारम् । अमर्ष एषां संजातः इति अमर्षिताः तैः । ] अत्याहितमनर्थः । **अप्रतिरथस्य**–अविद्यमानः प्रतिरथः यस्य । उन्मत्तस्य जातचित्तविभ्रमस्य । मुग्धत्वं विचारवैक्लव्यम् । दुर्योधनस्य बाहू परिघौ अर्गले इव ताभ्यां रक्षितस्य । **महारथः**–लक्षणमग्रे उक्तम् । ] अमर्षिता क्रोधशालिता । **हस्ताकृष्टेति** । [ मम आज्ञया दुःशासनेन हस्तेन आकृष्टमत एव विलोलं केशाश्च वसनं च केशवसनं यस्याः सा हस्ताकृष्टविलोलकेशवसना पाञ्चाली राजचक्रपुरतः गौः गौः इति व्याहृताः । ] व्याहृतेति णिज्गर्भम् । तेन व्याहारितेत्यर्थः । राजवधूनां गौर्गौरित्य-

---

१ अम्ब किं जातम् इ. पा. २ सशोकम्. ३ अस्र. ४ उत्तप्तस्य. ५ ०लानां नाम. ६ अस्य. ७ प्रसिद्धमेवामर्षित्वम्. ८ राजचक्रमभितः; राजचक्रसमितौ. ९ तस्मिन्नम्ब, ततज्यगाण्डिव-कार्मुक-धरः. १० कुदो एत्थ कुसलम्. ११ अमरिसिदेण ( अम-र्षितेन ) ( टी. ). १२ जाद जदो अबन्धु०. १३ अणवेक्खिदसरीरा; सरीरावरणा.

**माता**—असमाप्तप्रतिज्ञाभरस्यात्मवधोऽस्य प्रतिज्ञातः । (क)

**राजा**—यद्येवमलमानन्दस्थानेऽपि ते विषादेन । ननु वक्तव्यमुत्सन्नः सानुजो युधिष्ठिर इति । अन्यच्च मातः का शक्तिरस्ति धनञ्जयस्यान्यस्य वा कुरुशतपरिवारवर्धितमहिम्नः कृपकर्णद्रोणाश्वत्थामादिमहारथै[३]द्विगुणीकृतनिरावरणविक्रमस्य नामापि ग्रहीतुं ते तनयस्य । अयि सुतपराक्रमानभिज्ञे ।

> **धर्मात्मजं प्रति यमौ च कथैव नास्ति**
> **मध्ये वृकोदरकिरीटभृतोर्बलेन ।**
> **एकोऽपि विस्फुरितमण्डलचापचक्रं**
> **कः सिन्धुराजमभिषेणयितुं समर्थः ॥ २५ ॥**

**भानुमती**—आर्यपुत्र यद्यप्येवं तथापि गुरुकृतप्रतिज्ञाभरो धनञ्जयः स्थानं खलु शङ्कायाः । (ख)

**माता**—जाते साधु कालोचितं त्वया मन्त्रितम् । (ग)

**राजा**—आः ममापि नाम दुर्योधनस्य शङ्कास्थानं पाण्डवाः । पश्य ।

---

(क) असमत्तपडिण्णाभर[१]स्स आप्पवहो से पडिण्णादो ।

(ख) अज्जउत्त जइवि एव्वं तहवि गुरुकिदपडिण्णाभ[३]रो घणंजओ [४]ठाणं क्खु संकाए ।

(ग) जादे [५]सोहु कालोइदं तुए मन्तिदं ।

---

भिधानमतिहानिकरमिति समाचारः । तस्मिन्काले तता विस्तृता ज्या पतञ्चिका यत्र तादृशं गाण्डिवं धनुर्यस्य सः । गाण्डीवमपि गाण्डिवम् इति शब्दभेदः । पृथानन्दनोऽर्जुनः । [ नासीत्किंनु । अपि त्वासीदेव । क्षत्रियवंशोत्पन्नस्य तत्रापि यूनो यौवनशालिनः । न तु वार्धक्याद्गलितोत्साहस्य वीतशक्तेर्वा । तत्रापि कृतिनः कृतहस्तस्य युद्धकलाप्रवीणस्येत्यर्थः । पार्थस्य । ] आस्पदं स्थानम् ॥ २४ ॥ असमाप्तप्रतिज्ञाभारस्यात्मवधस्तेन व्यवसितः । [ कुरूणां शतमेव परिवारः तेन वार्धितो महिमा यस्य । महारथैः—एको दशसहस्राणि योधयेद्यस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणश्च विज्ञेयः स महारथः ॥ इत्युक्तलक्षणैः । द्विगुणीकृतः निरावरणः अप्रतिबन्धः विक्रमो यस्य । ] परिवारोऽनुचरः । निरावरणोऽन्तरायशून्यः । **धर्मात्मजमिति** । धर्मात्मजो युधिष्ठिरः । यमौ नकुलसहदेवौ प्रति इत्यन्वयः । भीमार्जुनयोर्मध्ये एकोऽपि कः सिन्धुराजम् [ अभिषेणायितुं सेनयाभिगन्तुम् ] अभियोद्धुं समर्थः । अपि तु न कोऽपि । [ सेनयाभिगन्तुमित्यर्थे 'सत्यापपाश' इत्यादिना णिच् । उपसर्गात्सुनोति इत्यादिना षत्वम् । ] विस्फुरितं मण्डलाकारं चापचक्रं यस्य तम् ॥ २५ ॥

---

१ न. २ ०रथपराक्रम. ३ भारस्स; भरेण; जाद असम्पत्तीए पडिण्णाभारस्स. ४ भारो ट्ठाणं–णिदाणं; धणंजओ त्ति णं ट्ठाणं. ५ साहु कालोइदं भणिअं भाणुमदीए ( टी. ).

**कोदण्डज्या[1]किणाङ्कैरगणितरिपुभिः कङ्कटोन्मुक्त[2]देहैः**
**श्लिष्टान्योन्यातपत्रैः सितकमलवनभ्रान्तिमुत्पादयद्भिः ।**
**रेणुग्र[3]स्तार्कभासां प्रचलदसिलतादन्तुराणां बलाना-[4]**
**माक्रान्ता भ्रातृभिर्मे दिशि दिशि समरे कोटयःसंपतन्ति ॥२६॥**

अपि[5] च भानुमति विज्ञात[6]पाण्डवप्रभावे किं त्वमप्येवमाशङ्कसे[7]। पश्य ।

**दुःशासनस्य हृदयक्षतजाम्बुपाने**
**दुर्योधनस्य च यथा गदयोरुभङ्गे ।**
**तेजस्विनां समरमूर्धनि पाण्डवानां**
**ज्ञेया जयद्रथवधेऽपि तथा प्रतिज्ञा ॥ २७ ॥**

कः कोत्र भोः। जैत्रं मे रथमुपकल्पय[8] तावत् । यावदहमपि तस्य[9], प्रगल्भपाण्डवस्य जयद्रथपरिरक्षणेनैव मिथ्याप्रतिज्ञावैलक्ष्यसंपादितम-शस्त्रपूतं मरणमुपदिशामि ।

( प्रविश्य । )

**कञ्चुकी**--देव

---

**कोदण्डेति**। कोदण्डो धनुः। [ तस्य ज्यायाः किणो घर्षणजन्यं चिह्नं तस्य अङ्को येषां तैः। अगणिता अचिन्तिता रिपवः यैः। कङ्कटेन संनाहेन उन्मुक्तोऽनाश्लिष्टो देहो येषां तैः। ] तथा चात्मगौरवात्संनाहमकुर्वाणैरित्यर्थः। [कङ्कटामुक्तदेहैरिति पाठे कंकटा आमुक्ताः पिनद्धा येषु तथा देहा येषाम्। श्लिष्टं अन्योन्यस्य] आतपत्रं छत्रं। तैः करणभूतैः श्वेतकमलवनभ्रमं कुर्वद्भिः। [ मे भ्रातृभिः आक्रान्ताः। रेणुना ग्रस्ताऽर्कस्य भा यैः तासां। प्रचलन्त्यो या असिलतास्ताभिः ] दन्तुराणां निम्नो-न्नतानां बलानां कोटयः संख्याभेदाः प्रदेशा वा। संपतन्ति गच्छन्ति। कोटिरग्रे प्रकर्षे च संख्यापार्श्वप्रदेशयोः। इति विश्वः॥ उरश्छदः कङ्कटको जगरः कवचोऽ-स्त्रियाम्। इत्यमरः ॥२६ ॥ **दुःशासनेति**। [ यथा दुःशासनस्य हृदयरक्तमेवाम्बु-जलं तस्य पाने। यथा च दुर्योधनस्य ऊरुभङ्गे ऊर्वोः भङ्गविषये। तथा समरमूर्धनि रणशिरसि जयद्रथवधेऽपि तेजस्विनां पराक्रमिणां पाण्डवानां प्रतिज्ञा ज्ञेया।] रक्तं क्षतजशोणितम् इत्यमरः ॥२७॥ [ जैत्रं जयनशीलम्। जेतृ शब्दात् प्रज्ञादित्वादण्। उपकल्पय सज्जं कृत्वा आनय। प्रगल्भस्य धृष्टस्य पाण्डवस्यार्जुनस्य। मिथ्या-प्रतिज्ञा मिथ्याप्रतिज्ञा तया यद् वैलक्ष्यं लज्जा तेन संपादितं विहितम्। शस्त्रेण शस्त्रव्यापारेण पूतं शस्त्रपूतम्। युद्धे शस्त्रप्रहारेण मृतस्य वीरस्य स्वर्गप्राप्तिहेतुत्वा-त्तन्मरणस्य पूतत्वम्। तथा न भवतीति अशस्त्रपूतम्। ] जैत्रं जयशालिनम्। अशस्त्र-

---

१ व्याततज्यैः. २ कङ्कटामुक्त–टाबद्धदेहैः; पाभिन्न ( टी. ). ३ ध्वस्ता. ४ चमूनाम्. ५ अयि भानुमति. ६ अविज्ञात० ७ आशंससे. ८ उपपादय. ९ तस्य मिथ्या-प्रतिज्ञाप्रगल्भस्य पाण्डवस्य वैलक्ष्यं संपादयन्; तस्याप्रगल्भस्य पाण्डवमध्यमस्य मिथ्याप्रतिज्ञा०.

उद्धातक्वणितविलोलहेमघण्टः
प्रालम्बद्विगुणितचामरप्रहासः ।
सज्जोऽयं नियमितवेल्गिताकुलाश्वः
शत्रूणां क्षपितमनोरथो रथस्ते ॥ २८ ॥

**राजा**——देवि प्रविश त्वमभ्यन्तरमेव । (यावदहमपि तस्य प्रगल्भपाण्डवस्य इत्यादि पठन् परिक्रामति ।)

(इति निष्क्रान्ताः सर्वे ।)

## इति द्वितीयोऽङ्कः ।

---

पूतमशस्त्रकृतम् ॥ उद्धातेति । उद्धात आघातः तेन क्वणितं शब्दः । [तेन क्वणिताः शब्दिता विलोलाः प्रचला हेमघंटा यस्य । ] यद्वा स्यादभ्यादानमुद्धात आरम्भः इत्यमरः । तेनोद्धात उपक्रम इत्यर्थः । प्रालम्बो लम्बितो हारः । [ तेन द्विगुणितः चामरस्य प्रहासः धवलिमा यत्र । प्रालम्बं द्विगुणितं द्विपार्श्वे द्विधाबद्धं यच्चामरं तस्य प्रहासो यत्र इति केचित् । ] प्रहासः प्रकाशः । [ नियमिता अतएव वल्गितेनाकुला अश्वा यस्य । नियमितं वल्गितं येषां तथाभूता अतएव आकुला अश्वा यस्येति वा । 'नियमितवल्गुवल्गिताश्वः' इति पाठे नियमितं वल्गु चारु वल्गितं येषां तथाभूता अश्वा यस्य । ] नियमितो वेल्लितेन गतिविशेषेणाकुलितोऽश्वो यत्र स तथा । [ शत्रूणां क्षपिता नाशिता मनोरथा येन स तथोक्तः । अत्र शत्रूणामिति षष्ठ्या मनोरथेन सम्बन्धः । सापेक्षत्वात्समासः । तदुक्तम्—सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते । वाक्यवत्सा व्यपेक्षापि वृत्तावपि न हीयते ॥ इति । ] ॥ २८ ॥ अत्राङ्के नायिकाचेट्योर्भाषा शौरसेनी । तदुक्तं तत्रैव—नायिकायां च चेट्यां च तथा चैव विदूषके । 'शौरसेनीं समाश्रित्य भाषा योज्या तु नाटके । इति । एवमन्यत्रापि ॥

अमृत यं रत्नधरो गुणीशो नानागुणाढ्या दमयन्तिकापि ।
जगद्धरं तस्य कृतौ गतोयमङ्को द्वितीयो वरटिप्पनेऽत्र ॥

द्वितीयोऽङ्कः ।

---

१ वल्गुवल्गिताश्वः वेल्लिताकु. ( टी. ).

# तृतीयोऽङ्कः ।



( ततः प्रविशति विकृतवेषा राक्षसी । )

**राक्षसी**—( विकृतं विहस्य । स परितोषम् । )

**हतमानुषमांसभारके कुम्भसहस्रवसाभिः संचिते ।**
**अनिशं च पिबामि शोणितं वर्षशतं समरो भवतु ॥ १ ॥**

( नृत्यन्ती सपरितोषम् । ) यदि सिन्धुराजवधदिवस इव दिवसे दिवसे समरकर्म प्रतिपद्यतेऽर्जुनस्तदा पर्याप्तभृतकोष्ठागारं मांसशोणितैर्मे गृहं भविष्यति । ( परिक्रम्य दिशोऽवलोक्य । ) अथ क नु खलु रुधिरप्रियो भविष्यति । तद्यावदेतास्मिन्समरे प्रियभर्तारं रुधिरप्रियमन्वेषयामि । ( परिक्रम्य ) भवतु । शब्दायिष्ये तावत् । अरे रुधिरप्रिय रुधिरप्रिय इत एहि इत एहि । ( क )

( ततः प्रविशति तथाविधो राक्षसः । )

**राक्षसः**—( श्रमं नाटयन् । )

**प्रत्यग्रहतानां मांसं यद्युष्णं रुधिरं च लभ्येत ।**
**तदेप मम परिश्रमः क्षणमात्रमेव लघु नश्येत् ॥ २ ॥ ( ख )**

---

( क ) हदमाणुशमंशभालए कुम्भशहश्शवशाहिं शंचिए ।
अणिशं अ पिवामि शोणिअं वलिशशदं शमले हुवीअदु ॥ १ ॥
जइ शिन्दुलाअवहदिअहे विअ दिअहे दिअहे शमलकम्म पडिवज्जइ अज्जुणे तदो पज्जत्तभलिदकोट्ठागाले मंशशोणिएहिं मे गेहे हुवीअदि । अह कहिं णु क्खु लुहिलप्पिए हुवीअदि । ता जाव इमश्श शमले पिअभत्तालं लुहिलप्पिअं अण्णेशामि । होदु । शद्दाइश्शं दाव । अले लुहिलप्पिआ लुहिलप्पिआ इदो एहि इदो एहि ।

( ख ) पच्चग्गहदाणं मंशए जइ उण्हे लुहिले अ लब्भइ ॥
ता एशे मह पलिश्शमे क्खणमेत्तं एव्व लहु णश्शइ ॥ २ ॥

---

[ विकृतः बभित्सः वेषो यस्याः । विकृतं विकटम् । भार एव भारकहतमानुषाणां मांसस्य भारके ०वसाभिः संचिते सति । ] समरकर्मातिप्रवर्तयः त्यर्जुनस्तदा पर्यन्तं भृतकोष्ठागारं मम मांसशोणितैर्गृहं भविष्यति । भवतु । वादयिष्ये । अरे रुधिरप्रिय रुधिरप्रिय एहि तावत् । अत्र भारके संचिते सतीत्यन्वयः । अन्तं

---

१ इति नृत्यन्ती. २ श्रमणं. ३ शोणिदेहिं; भोअणं, भक्खणे. ४ कुम्भशहश्शं वशाहिं शचिदम; इभशहश्शवशारशशंचिए ( इभसहस्रवसारससंचित ). ५ दिअहे दिअहे इति क्वचिन्नास्ति. ६ शमलं. ७ क्खु गदे मे. ८ मह ता पलिश्शमो सो क्खणमत्तं एव्व णश्शइ मेहत्तो ( मम तत्परिश्रमोऽसौ क्षणमात्रमेव नश्यति महान् । )

( राक्षसी पुनर्व्याहरति । )

**राक्षसः**—( आकर्ण्य । ) अरे कैषा मां शब्दायते । ( विलोक्य ) कथं प्रिया मे वसागन्धा । ( उपसृत्य । ) वसागन्धे कस्मान्मां शब्दायसे । (क)

**रुधिरासवपानमत्तिके रणहिण्डनस्खलद्गात्रिके ।**
**शब्दायसे कस्मान्मां प्रिये पुरुषसहस्रं हतं श्रूयते ॥ ३ ॥**

**राक्षसी**—अरे रुधिरप्रिय इदं खलु मया तव कारणात्प्रत्यग्र-हतस्य कस्यापि राजर्षेः प्रभूतवसास्नेहाचिक्कणं कोष्णं नवरुधिरमग्रमांसं चानीतम् । तत्पिबैतत् । ( ख )

**राक्षसः**—( सपरितोषम् ) साधु वसागन्धे साधु । शोभनं त्वया कृतम् । बलवदस्मि पिपासितः । तदुपनय । ( ग )

---

( क ) अले के एशे मं शद्दावेदि । कहं पिआ मे वशागन्धा । वशागन्धे कीश मं शद्दावेशि ।

लुहिलाशवपाणमत्तिए लणहिण्डन्तखलन्तगत्तिए ।
शद्दाआशि कीश मं पिए पुलिशशहरशं हदं शुणीअदि ॥ ३ ॥

( ख ) अले लुहिलप्पिआ एदं क्खु मए तुह कालणादो पच्चग्गहदरश करशवि लाएँशिणो प्पहूदवशाशिणेहाचिक्कणं कोण्हं णवलुहिलं अग्गमंशं अ आणीदम् । ता पिवाहि णम् ।

( ग ) शाहु वशागन्धे शाहु । शोहणं तुए किदम् । वालिआह्मि पिवाशिएँ । ता उवणेहि ।

---

समाप्तिम् । कोष्ठागारं कोठाखण्डम् । अरे को मां वादयते । कथं प्रिया मे वसागन्धा । यावदेनामुपसर्पामि । वसागन्धे किंनिमित्तं त्वं मां वादयसे । रुधिरासवपानमत्ते रणभ्रमणस्खलद्गात्रि । वादयसे किमिति सुन्दरि मां पुरुषशतं हतमिति श्रूयते ॥ ३ ॥ प्रभुतवसाशोणितं मस्तिष्काचिक्कण-मग्रमांसं चानीतम् । तत्खादाय । पिव शोणितासवम् । अत्र प्रत्यग्रं नवम् । प्रभुतमुपाचितम् । मस्तिष्कं गोदीति प्रसिद्धम् । अग्रं प्रथमभागमुत्तमं वा । [ बलवत् अत्यन्तं ] पिपासितः [ पिपासा अस्य संजाता स तथा । ] अत्र सुष्टु मनोहरम् ।

---

१ श्रुत्वा. २ अले कहं वशागन्धा. ३ एतत् केपुचित्पुस्तकेपु न वर्तते. ४ लाए-शिणो शलीलावअवप्पहुदं रिउवग्गाहदरश विलाशिणो प्पहूदवशाशिणेहमत्थिकाचिक्कणं. ५ वशागन्धे शुट्ठु । ६ भहिणि शो०. ७ पिवाशिए । जं कोशिणं कोशिणं लुहिलं आणीदं तं (यत्कोष्णं कोष्णं रुधिरमानीतं तदु०) **राक्षसः**—वसागन्धे शुट्ठु तुए किदम् । **राक्षसी**—अले गण्ह एतं हत्थिकवालम् । पिवाहि शोणिआशवम् । **राक्षसः**—बालिअह्मि इ०

**राक्षसी**—अरे रुधिरप्रिय ईदृशे हतनरगजतुरङ्गमशोणितवसा-समुद्रदुःसंचरे समराङ्गणे परिभ्रमंस्त्वं पिपासितोऽसीत्याश्चर्य-माश्चर्यम् । ( क )

**राक्षसः**—अयि सुस्थिते ननु पुत्रशोकसंतप्तहृदयां स्वामिनीं हिडिम्बादेवीं प्रेक्षितुं गतोऽस्मि । ( ख )

**राक्षसी**—रुधिरप्रिय अद्यापि स्वामिन्या हिडिम्बादेव्या घटोत्कच-शोको नोपशाम्यति । ( ग )

**राक्षसः**—वसागन्धे कुतोऽस्या उपशमः । केवलमभिमन्युवधशोक-समानदुःखया सुभद्रादेव्या याज्ञसेन्या च कथं कथमपि समाश्वास्यते (घ)

**राक्षसी**—रुधिरप्रिय गृहाणैतद्धस्तिशिरःकपालसंचितमग्रमांसोप-दंशम् । पिब शोणितासवम् । ( ङ )

**राक्षसः**—( तथा कृत्वा । ) वसागन्धे अथ कियत्प्रभूतं त्वया संचितं रुधिरमग्रमांसं च । ( च )

---

( क ) अले लुहिलप्पिआ ऐदिशे हदणलगअतुलङ्गमशोणिअवशाशमुद्ददुश्शंचले शमलेङ्गणे पडिब्भमन्ते तुमं पिवाशिएशि त्ति अचलिअं अचलिअम् ।

( ख ) अइ शुत्थिदे णं पुत्तशोअशन्तत्तहिअअं शामिणीं हिडिम्बादेवीं पेक्खिदुं गदह्मि ।

( ग ) लुहिलप्पिआ अज्जवि शामिणीए हिडिम्बादेवीए घडुक्कअशोए ण उपशमइ ।

( घ ) वशागन्धे कुदो शे उवशमे । केवलं अहिमण्णुवहशोअशमाणदुक्खाए शुभद्दादेवीए जण्णशेणीए अ कधं कधं वि शमाश्शाशीअदि ।

( ङ ) लुहिलप्पिआ गेण्ह एदं हत्थिशिलक्कवालशंचिअं अग्गमंशोवदंशम् । पिवाहि णवशोणिआशवम् ।

( च ) वशागन्धे अह किअप्पेहूदं तुए शंचिअं लुहिलं अग्गमंशं अ ।

---

बलितोऽतिशायितः । ननु पुत्रशोकसंतप्तां देवीमन्वेष्टुं गतोऽस्मि । सुस्थिते हे । ननु भणामि । अरे रुधिरप्रिय तत्किमद्याप्यस्याः स्वामिन्या हिडिम्बादेव्याः पुत्रस्य घटोत्कचस्य शोको हृदयान्नोपशाम्यति । वसागन्धे कुतोऽस्या उपशाम्यति । कपाटमग्रमांसं चानीतम् तत्खादय । वसागन्धे अथ किंप्रभूतं त्वया रुधिरं वसा मांसं च संचितम् । अत्र किं कियत् । प्रभुतमुपचितम् ।

---

१ एदिशेविणाम. २ शम्मद्द ( संमर्द ). ३ राक्षसः—( सक्रोधम् । ) अले वशागन्धे—अइ शुत्थिदे, पुत्तघडुक्कअशोअशन्तत्तहिअअं. ४ शमश्शाशइदुं. ५ अइ. ६ किंतु. ७ शुभद्दादेवीए शमं जण्णशेणीए. ८ गेण्ह तुमं. ९ किअधडप्पहूदे.

**राक्षसी**—अरे रुधिरप्रिय पूर्वसंचितं जानास्येव त्वम् । नवसंचितं शृणु तावत् । भगदत्तशोणितकुम्भः सिन्धुराजवसाकुम्भौ द्वौ द्रुपद-मत्स्याधिपभूरिश्रवःसोमदत्तबाल्हीकप्रमुखाणां नरेंद्राणामन्येषामपि प्राकृत पुरुषाणां रुधिरवसामांसस्य घटा अपिनद्धमुखाः सहस्रसंख्याः सन्ति मे गेहे । ( क )

**राक्षसः**—( सपरितोषमालिङ्ग्य । ) साधु सुगृहिणि साधु । अनेन ते सुगृहिणीत्वेनाद्य पुनः स्वामिन्या हिडिम्बादेव्याः संविधानेन च प्रनष्टं मे जन्मदारिद्र्यम् । ( ख )

**राक्षसी**—रुधिरप्रिय कीदृशं स्वामिन्या संविधानं कृतम् । ( ग )

**राक्षसः**—वसागन्धे अद्य खल्वहं स्वामिन्या हिडिम्बादेव्या सबहुमानं शब्दाय्य आज्ञप्तः यथा रुधिराप्रिय अद्यप्रभृति त्वया आर्य-पुत्रस्य भीमसेनस्य पृष्ठतोऽनुपृष्ठं समर आहिण्डितव्यमिति । तत्त-स्यानुमार्गगामिनो हतमानुषशोणितनदीदर्शनप्रनष्टबुभुक्षापिपासस्येहैव

---

( क ) अले लुहिलप्पिआ पूव्वशंचिअं जाणाशि जेव्व तुमं । णवशंचिअं शिणु दाव । भअदत्तशोणिअकुम्भे शिन्धुलाअवशाकुम्भे दुवे दुवदमच्छाहिवभूलिश्शव-शोमदत्तवल्हीअप्पमुहाणं णलिन्दाणं अण्णाणं वि प्पाकिदपुलिशाणं लुहिलवशामं-शरशघडा अपिणद्धमुहा शहश्शशङ्खा शन्ति मे गेहे ।

( ख ) शाहु शुग्घलिणीए शाहु । इमिणा दे शुग्घालिणित्तणेण अंज्ज उण शामिणीए हिडिम्बादेवीए शंविहाणेण अ प्पणट्टं मे जम्मदालिद्दम् ।

( ग ) लुहिलप्पिआ केलिशे शामिणीए शंविहाणए किदे ।

---

भगदत्तशोणितैः कुम्भः सिन्धुराजवसाभिः कण्डमन्येषां च द्रुपदसुतमत्स्याधिप-भूरिश्रवःसोमदत्तवाल्हीकप्रमुखाणां नरेन्द्राणामन्येषामपि प्राकृतपुरुषाणां रुधिरमां-सैर्घटशतानि असंख्यातानि सन्ति मे गृहे । अत्र प्राकृत इतरजनः । अत्र संविभागो नियोगः । अज्जुणकेण इति पाठे अद्यतनकेन । एतत्कालीनेनेत्यर्थः । अरे रुधिरप्रिय कीदृशः स्वामिन्या हिडिम्बादेव्या संविभागः कृतः । पुत्र रुधिरप्रिय अद्यप्रभृति त्वया

---

१ तुमं वि. २ पच्चग्गशंचिअं. ३ एतत्क्वचिन्नास्ति. ४ शोणिएहिं; शोणिदेहिं शदकुम्भे. ५ वशाहिं, वशाकुण्डए ( कुण्डिका ). ६ भूलिश्शवअङ्गाहिवशोमदत्त—. ७ लुहिलमंशेहि पुलिदाइं घडशदाइं अशंक्खाइं; णलिन्दानं घडशदं अण्णाणं वि पाइद-पुलिशाणं वशामंशशोणिदेहिं पुलिदा घडआ अण्णाइं बहुआइं अशक्खाइं शन्ति मे गेह. ८ कडारआअ. ९ शाहु शाहु शुग्घहिणीए शाहु शाहु. १० अज्ज उण इति कचिन्नास्ति.

मे स्वर्गलोकोभविष्यति । त्वमपि विस्रब्धा भूत्वा रुधिरवसाभिः कुम्भसहस्रं संचिनु । (क)

**राक्षसी**—रुधिरप्रिय किंनिमित्तं कुमारभीमसेनस्य पृष्ठतोऽनुपृष्ठमाहिण्ड्यते । (ख)

**राक्षसः**—वसागन्धे तेन हि स्वामिना वृकोदरेण दुःशासनस्य रुधिरं पातुं प्रतिज्ञातम् । तच्चास्माभी राक्षसैरनुप्रविश्य पातव्यमिति ।(ग)

**राक्षसी**—( सहर्षम् ) साधु स्वामिनी साधु । सुसंविधानो मे भर्ता त्वया कृतः । (घ)

( नेपथ्ये महान्कलकलः । उभावाकर्णयतः । )

**राक्षसी**—( आकर्ण्य । ससंभ्रमम् । ) अरे रुधिरप्रिय किं नु खल्वेष महान्कलकलः श्रूयते । (ङ)

**राक्षसः**—( दृष्ट्वा । ) वसागन्धे एष खलु धृष्टद्युम्नेन द्रोणः केशेष्वाकृष्यासिपत्रेण व्यापाद्यते । (च)

---

(क) वशागन्धे अज्ज क्खु हगे शामिणीए हिडिम्बादेवीए शवहुमाणं शद्दाविअ आणत्ते जह लुहिलप्पिआ अज्जप्पहुदि तुए अज्जउत्तस्स भीमशेणश्श पिट्ठदोणुपिट्ठं शमले आहिण्डिदव्वं त्ति । ता तश्श अनुमग्गगामिणो हअमाणुशशोणिअणईदंशणप्प-णट्ठबुभुक्खापिवाशश्श इह एव्व मे शग्गलोओ हुवीअदि । तुमं वि वीशद्धा भविअ लुहिलवशाहिं कुम्भशहश्शं शंचेहि ।

(ख) लुहिलप्पिआ किंणिमित्तं कुमालभीमशेणश्श पिट्ठदोणुपिट्ठं आहिण्डीअदि ।

(ग) वशागन्धे तेण हि शामिणा विओदलेण दुश्शाशणश्श लुहिलं पादुं पडिण्णादम् । तं च अह्मेहिं लक्खशेहिं अणुप्पविशिअ पादव्वं त्ति ।

(घ) शाहु शामिणीए शाहु । शुशंविहाणे मे भत्ता तुए किदे ।

(ङ) अले लुहिलप्पिआ किं णु क्खु एशे महन्ते कलअले शुणीअदि ।

(च) वशागन्धे एशे क्खु धिट्ठज्जुण्णेण दोणे केशेशु आकड्ढिअ अशिवत्तेण वावादीअदि ।

---

नाथभीमसेनस्य पश्चात्समर आहिण्डितव्यमिति । ततस्तस्य मार्गानुगामिनो हतमानुषशोणितनदीदर्शनेन प्रणष्टा मे बुभुक्षा पिपासा च । त्वमपि विश्वस्ता भूत्वा रुधिरं वसां मांसं च संचेष्यसीतीहैव सुरलोको भविष्यतीति अत्र बुभुक्षा भोक्तुमिच्छा । विश्वस्ता विश्वासवती । सुसंविभागो मम भर्ता कृतः । अरे रुधिरप्रिय रुधिरप्रिय उत्तिष्ठोत्तिष्ठ । कुतः खल्वेष महान्कलकलः श्रूयते ।

---

१ सभयम्. २ आणत्ते क्खु हग्गे शामिणीए हिडिम्बादेवीए. ३ अज्जउत्तभीमशेणश्श ४ एतन्नास्ति क्वचित्. ५ वच्छत्थलदो दुश्शाशणश्श. ६ समुट्ठीअदि. ७ हला वशागन्धे.

**राक्षसी**—( सहर्षम् । ) रुधिरप्रिय एहि । गत्वा द्रोणस्य रुधिरं पिबावः । ( क )

**राक्षसः**—( सभयम् । ) वसागन्धे ब्राह्मणशोणितं खल्वेतद्गलं दहद्दहत्प्रविशति । तत्किमेतेन । ( ख )

( नेपथ्ये पुनः कलकलः । )

**राक्षसी**—रुधिरप्रिय पुनरप्येष महान्कलकलः श्रूयते । ( ग )

**राक्षसः**—( नेपथ्याभिमुखमवलोक्य । ) वसागन्धे एष खल्वश्वत्थामा आकृष्टासिपत्र इत एवागच्छति । कदाचिद् द्रुपदसुतरोषेणावामपि व्यापादयिष्यति । तदेहि । अतिक्रमावः । ( घ )

( इति निष्क्रान्तौ । )

प्रवेशकः ।

---

( ततः प्रविशत्युत्खातखड्गः कलकलमाकर्णयन्नश्वत्थामा । )

**अश्वत्थामा**—

**महाप्रलयमारुतक्षुभितपुष्करावर्तक—**
**प्रचण्डघनगर्जितप्रतिरवानुकारी मुहुः ।**

---

( क ) लुहिलप्पिआ एहि । गच्छिअ दोणश्श लुहिलं पिबह्म ।

( ख ) वशागन्धे बह्मणशोणिअं क्खु एदं गलअं दहन्ते दहन्ते पाविशादि । ता किं एदिणा । ( ग ) लुहिलप्पिआ पुणोवि एशे महन्ते कलअले शुणीअदि ।

( घ ) वशागन्धे एशे क्खु अश्शत्थामे आकड्ढिदाशिवत्ते इदो एव्व आअच्छदि। कदावि दुवदशुदलोशेण अह्मेवि वावादइश्शइ । ता एहि । अतिक्कमह्म ।

---

तदलं ममैतेन । अरे रुधिरप्रिय रुधिरप्रिय उत्तिष्ठोत्तिष्ठ। पुनरप्येष महान्कलकलः श्रूयते । वसागन्धे एष खल्वश्वत्थामाकृष्टासिपत्र इतः समरभूमिमवतरति । कदाचिद् द्रुपदसुतरोषेणास्मान्राक्षसान्प्रेक्ष्य व्यापादयिष्यति । तदेहि । पलायावहे । अत्रासिपत्रः खड्गः । द्रुपदसुतो धृष्टद्युम्नः । एवं करवाव । **प्रवेशक इति** । हीनाभ्यामेव पात्राभ्यामङ्कादौ यत्प्रवर्तते । प्रवेशकः स विज्ञेयः शौरसेन्यादिभाषया ॥ इति भरतः । **महाप्रलयेति**। [ अद्य पुरः अग्रे वर्तमानः समरमेवोदधिस्तस्यायं रवः कुतः । कीदृशः । महान् यः प्रलयमारुतः तेन । यद्वा महाप्रलये यः मारुतस्तेन । क्षुभिता ये पुष्करावर्तकास्तेषां प्रचण्डं घनं च यद्गर्जितं तस्य प्रतिरवः प्रतिशब्दस्तस्यानुकरोतीति तत्सदृश इत्यर्थः । ] पुष्करावर्तको मेघविशेषः । घनं निबिडम्

---

१ आकृष्ट. २ रुता. ३ लुहिलप्पिआ अह्मे वि गच्छिअ दोणश्श लुहिलं पिबह्म. ४ एतदनन्तरं ( उभौ तथा कुरुतः ।) **राक्षसः** ( किंचित्पीत्वा ।)—वशागन्धे बह्मणशोणिअं क्खु एदं इ. पा. ५ एतन्नास्ति क्वचित. ६ शामिणीए हिडिम्बादेवीए आणत्तिं कह्मले.

रवः श्रवणभैरवः स्थगितरोदसीकन्दरः
कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः ॥ ४ ॥

( विचिन्त्य । ) ध्रुवं गाण्डीविना सात्यकिना वृकोदरेण वा यावनदर्पो-दतिक्रान्तमर्यादेन परिकोपितस्तातः समुलङ्घ्य शिष्यप्रियतामात्म-प्रभावसदृशमाचेष्टते । तथाहि ।

यद् दुर्योधनपक्षपातसदृशं युक्तं यदस्त्रग्रहे
रामाल्लब्धसमस्तहेतिगुरुणो वीर्यस्य यत्सांप्रतम् ।
लोके सर्वधनुष्मतामधिपतेर्यच्चानुरूपं रुषः
प्रारब्धं रिपुघस्मरेण नियतं तत्कर्म तातेन मे ॥ ५ ॥

( पृष्ठतो विलोक्य । ) तदलमिदानीं मम रथप्रतीक्षयानया । सशस्त्र एवास्मि सजल जलधरप्रभाभासुरेण सुप्रग्रहविमलकलधौतत्सरुणामुना खड्गेन । यावत्समरभुवमवतरामि । ( परिक्रम्य । वामाक्षिस्पन्दनं सूचयित्वा । ) आः कथं ममापि नामाश्वत्थाम्नः समरमहोत्सवप्रमोदनिर्भरस्य तात-विक्रमदर्शनलालसस्य अनिमित्तानि समरगमनविघ्नमुत्पादयन्ति । भवतु

---

अनुकारी सदृशः । [ श्रवणयोः भैरवः ] श्रवणभैरवः कर्णकटुः । स्थगितं पिहितम् । द्यावापृथिव्योरन्तरं रोदः । तदेव कन्दरं तस्य वा कन्दरं मध्यम् । रोदश्च रोदसी चैव दिवि भूमौ पृथक्पृथक् । इत्यमरः [ स्थगितं रोदस्योः कन्दरं येन । ] अभूतपूर्वः न पूर्वं भूत इत्यर्थः । सुप्सुपेति समासः ॥ ४ ॥ आचेष्टते करोति । यद्दुर्योधनेति । यदिति सर्वत्र यच्छब्देनाग्रे वक्ष्यमाणं कर्माभिधीयते । पक्षपातो गौरवम् । [ अस्त्रग्रहे अस्त्रे गृहीते यत्कर्तुमुचितम् । रामाल्लब्धाः समस्ता हेतयः समन्त्रकाण्यस्त्राणि ताभिर्गुरु दुर्भरम् । ] रामात्परशुरामात् । हेतिरस्त्रम् । गुरुणोऽधिकस्य । सांप्रतं युक्तम् । धनुष्मतां प्रशस्तधनुर्धराणाम् । अधिपतेस्तस्य रोषस्य यदनुरूपमित्यन्वयः । [ रिपूणां ] घस्मरो भक्षकः [ तेन ] । भक्षको घस्मरोऽद्मरः इत्यमरः ॥ ५ ॥ [ सजलः यः जलधरस्तस्येव प्रभा तया ] भासुरेण दीप्तेन । भञ्जभासमिदो घुरच् इति घुरच्प्रत्ययः । सुप्रग्रहः सुष्ठु ग्रहणं रश्मिर्वा [ यस्य ] । हयादिरश्मौ च प्रग्रहः संग्रहेऽपि च इति विश्वः । [ तादृशः विमलं निर्मलं यत्कलधौतं तस्य त्सरुर्यस्य तेन । ] कलधौतं सुवर्णम् । त्सरुः खड्गादिमुष्टौ स्यात् इत्यमरः । नाम संभावनायाम् । अनिमित्तानीति

---

१ प्लवः; श्रुतः, भूतपूर्वोदयः. २ दर्पातिक्रान्त०. ३ आत्मदृशभावम्. ४ धैर्यस्य. ५ क्रुधः. ६ तत्कोऽत्र रथमुपनयतु । अथवा. ७ चास्मि; चाहम्. ८ भास्वरेण. ९ प्रत्यग्रवि०; सुप्रभविमलकलधौतसंपादितत्सरुणा खड्गेन इति पाठः. १० तावत्. ११ अये कथम्.

गच्छामि । (सावष्टम्भं परिक्रम्याग्रतो विलोक्य ।) कथमवधीरितक्षात्रधर्माणामुज्झितसत्पुरुषोचितलज्जावगुण्ठनानां विस्मृतस्वामिसत्कारलघुचेतसां द्विरदतुरङ्गमचरणचारिणामगणितकुलयशःसदृशपराक्रमव्रतानां रणभूमेः समन्तादपक्रामतामयं महान्नादो बलानाम् । (निरूप्य ।) हा धिक्कष्टम् । कथमेते महारथाः कर्णादयोऽपि समरात्पराङ्मुखा भवन्ति । कथं नु ताताधिष्ठितानामपि बलानामियमवस्था भवेत् । भवतु संस्तम्भयामि । भो भोः कौरवसेनासमुद्रवेलापरिपालनमहामहीधरा नरपतयः कृतं कृतममुना समरपरित्यागसाहसेन ।

**यदि समरमपास्य नास्ति मृत्यो-**
**र्भयमिति युक्तमितोऽन्यतः प्रयातुम् ।**
**अथ मरणमवश्यमेव जन्तोः**
**किमिति मुधा मलिनं यशः कुरुध्वे ॥ ६ ॥**

अपि च ।

**अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे**
**सेनानाथे स्थितेऽस्मिन्मम पितरि गुरौ सर्वधन्वीश्वराणाम् ।**

---

कर्तृपदम् । [ समरमेव महोत्सवः तेन प्रमोदस्य निर्भरः यस्य । तातविक्रमदर्शने लालसा यस्य । अवधीरितस्तिरस्कृतः क्षत्रस्यायं क्षात्रो धर्मो युधि स्थैर्येणावस्थानं तद्रूपो यैः ।] उज्झितं त्यक्तं लज्जैवावगुण्ठनमुपरिवस्त्रं यैस्तेषाम् ।] विस्मृतः स्वामिसत्कारस्तेन लघु चेतो येषाम् । द्विरदैः तुरंगमैश्चरणैश्च चरन्तीति तच्छीलानाम् । अगणितं कुलस्य यशः तस्य सदृशं पराक्रम एव व्रतं यैः तेषाम् । ] चारीति ताच्छीलिको णिनिः । अपक्रामतां पलायमानानाम् । अपक्रमोऽपयानं स्यात् इत्यमरः । हा हा शोकेऽपि निन्दायाम् इति । [ कौरवसेना एव समुद्रस्तस्य वेला मर्यादास्थितिस्तस्याः परिपालने महामहीधराः ।] वेला तत्तीरनीरयोः इत्यमरः । महीधरो गिरिः । कृतं निष्फलम् । कृतं क्लीबं तु निष्फले इति विश्वः [ कृतमलं मा कुरुतेत्यर्थः । ] यदीति । अपास्य त्यक्त्वा । मृत्योर्मरणाद्यमाद्वा । इतः समरात् अन्यतोऽन्यत्र । अथ पक्षान्तरे । मुधा विफलम् ॥ ६ ॥ **अस्त्रेति** । अस्त्रमेव ज्वाला तेनावलीढ आक्रान्तः प्रतिबलजलधिस्तस्य मध्ये और्वायमाणे वडवानल

---

१ अवगच्छामि. २ क्षत्र; सकलक्षात्र—. ३ उत्सृष्ट. ४ भक्ति. ५ वयः; बलसदृशप्रतापानां. ६ ०दपक्रामतामस्मत्सेनाभटानामयं महान्निनादः, रणभूमेः पराक्रमतामयं. ७ पुनरवलोक्य; अन्यतोऽवलोक्य. ८ अहह हा, हाहा. ९ संग्रामात्पराङ्मुखीभवन्ति. १० अस्मात्पूर्वं (साशङ्कम् ।) इत्यधिकं क्वचित्. ११ एवं तावत्. १२ अधुना, अमुना इति क्वचिन्नास्ति. १३ कुरुध्वम्; क्रियेत.

**कर्णालं संभ्रमेण व्रज कृप समरं मुञ्च हार्दिक्य शङ्कां**
**ताते चापद्वितीये वहति रणधुरां[1] को भयस्यावकाशः ॥ ७॥**

( नेपथ्ये )

कुतोऽद्यापि ते तातः ।

**अश्वत्थामा**—( श्रुत्वा । ) किं ब्रूथ—कुतोऽद्यापि ते तात इति । ( सरोषम्[2] । ) आः क्षुद्राः समर[3]भीरवः कथमेवं प्रलपतां वः सहस्रधा न दीर्ण[4]मनया जिह्वया ।

**दग्धुं विश्वं दहनकिरणैर्नोदिता द्वादशार्का**
**वाता वाता दिशि दिशि न वा सप्तधा सप्त भिन्नाः ।**
**छन्नं मेघैर्न गगनतलं पुष्करावर्तकाद्यैः**
**पापं पापाः कथयत कथं शौर्यराशेः पितुर्मे ॥ ८ ॥**

( प्रविश्य संभ्रान्तः सप्रहारः[5] । )

**सूतः**—परित्रायतां परित्रायतां कुमारः । ( इति पादयोः पतति । )

**अश्वत्थामा**—( विलोक्य । ) अये कथं तात[6]स्य सारथिरश्वसेनः । आर्य ननु त्रैलोक्यत्राणक्षमस्य [ तातस्य ] सारथिरसि । किं मत्त[7]ः परित्राणमिच्छसि ।

**सूतः**—( उत्थाय सकरुणम्[8] । ) कुतोऽद्यापि ते तातः ।

**अश्वत्थामा**—( सावेगम् । ) किं तात[9] एव नास्ति ।

**सूतः**—अथ किम् ।

**अश्वत्थामा**—हा तात[10] । ( इति मोहमुपगतः । )

**सूतः**—कुमार समाश्वसिहि समाश्वसिहि ।

---

इवाचरति सति । संभ्रमेण भयेन । हार्दिक्यो योधविशेषः । शङ्कां भयं मुञ्च ॥ ७ ॥ इह श्लोके युक्तिरलंकारः । अर्थावधारणं यत्तु प्रमाणाद्युक्तिरुच्यते । इति भरतः । अन्यदीयप्रौढ्यतिशयरूपो गर्भसंधिरयम् । यदाह—स्वीयान्यदीयभेदेन प्रौढिवाक्यमुदाहृतिः । वो युष्माकम् । **दग्धुमिति** । [ दहनात्मकाः किरणा दहनकिरणाः तैः ] दहनकिरणैरग्निकरैः । न वाता न गतिमन्तः । वाता इति वा गतिगन्धनयोः । क्तः । सप्तधा सप्तप्रकारेण भिन्नाः सप्त । तथा चोनपञ्चाशत् । [ वाताः वा दिशि दिशि न वाताः । ] पापं मरणरूपम् । हे पापाः पापिष्ठाः ॥ ८ ॥

---

१ रणधुरम्. २ एतत् क्वचिन्नास्ति. ३ क्षुद्रा भीरवः. ४ विदीर्णम्. ५ सप्रहारः **इति** क्वचिन्नास्ति. ६ तातसारथिः. ७ मत्तः शिशुजनात्. ८ सास्रम्. ९ तातो नामास्त**मुपगतः**. १० हा तात हा तात ( इति मोहमुपगम्य पतितः । ).

**अश्वत्थामा**—( लब्धसंज्ञः सास्रम् । ) हा तात हा सुतवत्सल हा लोकत्रयैकधनुर्धर हा जामदग्न्यास्त्रसर्वस्वप्रतिग्रहप्रणयिन् क्वासि । प्रयच्छ मे प्रतिवचनम् ।

**सूतः**—कुमार अलमत्यन्तशोकावेगेन । वीरपुरुषोचितां विपत्तिमुपगते पितरि त्वमपि तदनुरूपेणैव वीर्येण शोकसागरमुत्तीर्य सुखी भव ।

**अश्वत्थामा**—( अश्रूणि विमुच्य । ) आर्य कथय कथय कथं तादृग्भुजवीर्यसागरस्तातोऽपि नामास्तमुपगतः ।

किं भीमाद्गुरुदक्षिणां गुरुगदाद्भीमप्रियः प्राप्तवान्

**सूतः**—शान्तं पापम् । शान्तं पापम् ।

**अश्वत्थामा**—

अन्तेवासिदयालुरुज्झितनयेनासादितो जिष्णुना ।

**सूतः**—कथमेवं भविष्यति ।

**अश्वत्थामा**—

गोविन्देन सुदर्शनस्य नियतं धारापथं प्रापितः

**सूतः**—एतदपि नास्ति ।

**अश्वत्थामा**—

शङ्के नापदमन्यतः खलु गुरोरेभ्यश्चतुर्थादहम् ॥ ९ ॥

**सूतः**—कुमार ।

---

[ जमदग्नेरपत्यं पुमान् जामदग्न्यः परशुरामस्तस्यास्त्राण्येव सर्वस्वं तस्य प्रतिग्रहे स्वीकारे प्रणयो विद्यते अस्य तत्संबुद्धिः । विपत्तिं मरणम् । तस्य पितुरनुरूपेण सदृशेन । ] प्रतिग्रहो ग्रहणम् ॥ किं भीमादिति । शिष्याद्भीमात् । गुरुगदामेव गुरुदक्षिणाम् । [ गुरुगदादिति पाठे गुर्वी भीषणा महती वा गदा यस्य तस्मात् । ] भीमः प्रियो मित्रं यस्य स तातः । अन्तेवासी शिष्यः । तद्विषये दयालुर्दयायुक्तः । [ उज्झितस्त्यक्तः नयो नीतिमार्गो गुरौ भक्तिरेवोचिता न तु नृशंसत्वमित्येतद्रूपः येन । ] जिष्णुना अर्जुनेन । आसादितः मारित इत्यर्थः । नियतं निश्चितम् । सुदर्शनो हरिचक्रम् । चक्रं सुदर्शनः इत्यमरः ।

---

१ लब्धसंज्ञ उत्थाय । सास्रम् । २ क्वासीत्यादि क्वचिन्नास्ति. ३ आयुष्मन्. ४ रस्य पारमु०. ५ प्रमृज्य. ६ वीर्यास्त्रप्रभावसा०. ७ शिष्यात्. ८ गुरुगदां ( टी. ). ९ दयेन १० निशितं.

एतेऽपि तस्य कुपितस्य महास्त्रपाणेः
किं धूर्जटेरिव तुलामुपयान्ति संख्ये ।
शोकोपरुद्धहृदयेन यदा तु शस्त्रं
त्यक्तं तदास्य विहितं रिपुणातिघोरम् ॥ १० ॥

**अश्वत्थामा**—किं पुनः कारणं शोकस्यास्त्रपरित्यागस्य वा ।

**सूतः**—ननु कुमार एव कारणम् ।

**अश्वत्थामा**—कथमहमेव नाम[२] ।

**सूतः**—श्रूयताम् । ( अश्रूणि विमुच्य । )

अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा
स्वैरं शेषे गज इति किल व्याहृतं सत्यवाचा ।
तच्छ्रुत्वासौ दयिततनयः प्रत्ययात्तस्य राज्ञः
शस्त्राण्याजौ नयनसलिलं चापि तुल्यं मुमोच ॥ ११ ॥

**अश्वत्थामा**—हा तात हा सुतवत्सल हा वृथामदर्थपरित्यक्तजीवित हा शौर्यराशे हा शिष्यप्रिय हा युधिष्ठिरपक्षपातिन् । ( इति रोदिति । )

**सूतः**—कुमार अलमत्यन्तपरिदेवनकार्पण्येन ।

**अश्वत्थामा**—

श्रुत्वा वधं मम मृषा सुतवत्सलेन
तात त्वया सह शरीरसवो विमुक्ताः ।

---

अन्यतोऽन्यस्मात् खलु निश्चये ॥ ९ ॥ एतेऽपीति । एते भीमार्जुनकृष्णाः । संख्ये संग्रामे धूर्जटेर्हरस्य [ इव कुपितस्य तस्य तुलामुपयान्ति किम् । नैवेत्यर्थः ] हृदयेनेत्याचार्यविशेषणं । [ यदा तु शोकेनोपरुद्धं व्याप्तमिति यावत् हृदयं यस्य तेन आचार्येण शस्त्रं त्यक्तं तदा रिपुणा अस्य अतिघोरं विहितम् । ] अस्याचार्यस्य । अतिघोरं विनाशः । अस्त्रं काण्डादि शस्त्रं खड्गादि । इत्यनयोर्विशेषः । असु क्षेपणे । शसु हिंसायाम् । औणादिकः ष्ट्रन् प्रत्ययः ॥१०॥ अश्वत्थामेति । पृथासूनुना युधिष्ठिरेण । स्वैरमल्पं [ अस्पष्टमित्यर्थः ] । शेषे । वचनस्येति शेषः । किल निश्चये । व्याहृतमुक्तम् । असावाचार्यः । दयितः प्रियस्तनयः पुत्रो यस्य स तथा । प्रत्ययात्प्रतीतेः । आजौ संग्रामे । शस्त्राणि मुमोच अपि तुल्यं धनुःसमकालं नयनसलिलं च मुमोचेत्यन्वयः ॥ ११ ॥ इहाभूताहरणरूपः गर्भसंधिः । यदाह—उक्तं युक्तं तु यद्वाक्यमभूताहरणं तु तत् । इति। अश्वत्थामा गजनाम [ युधिष्ठिरे पक्षपातो विद्यते अस्य । कार्पण्येन वैक्लव्येन प्राकृतजनवच्छोकवशो मा भूरित्यर्थः । ] श्रुत्वेति । [ मृषा मिथ्या मम वधं श्रुत्वा ॥ ] असवः प्राणाः ॥ १२ ॥

---

१ तदैव. २ नाम इति क्वचिन्नास्ति. ३ शंते. ४ चेति. ५ क्रान्त. ६ वल्लभेन.

जीवाम्यहं पुनरयं भवता वियुक्तः
क्रूरेऽपि तन्मयि मुधा तव पक्षपातः ॥ १२ ॥

( इति मोहमुपगतः । )

**सूतः**—समाश्वसितु समाश्वसितु कुमारः ।

( ततः प्रविशति कृपः । )

**कृपः**—( सोद्वेगं निःश्वस्य । )

धिक्सानुजं कुरुपतिं धिगजातशत्रुं
धिग्भूपतीन्विफलशस्त्रभृतो धिगस्मान् ।
केशग्रहः खलु तदा द्रुपदात्मजाया
द्रोणस्य चाद्य लिखितैरिव वीक्षितो यैः ॥ १३ ॥

तत्कथं नु खलु वत्सं द्रक्ष्याम्यश्वत्थामानम् । अथवा हिमवत्सारगुरुचेतसि ज्ञातलोकस्थितौ तस्मिन्न खलु शोकावेगमहमाशङ्के । किं तु पितुः परिभवमसदृशमुपश्रुत्य न जाने किं व्यवस्यतीति । अथवा

एकस्य तावत्पाकोऽयं दारुणो भुवि वर्तते ।
केशग्रहे द्वितीयेऽस्मिन्नूनं निःशेषिताः प्रजाः ॥ १४ ॥

(विलोक्य ) तदयं वत्सस्तिष्ठति । यावदुपसर्पामि । (उपसृत्य । ससंभ्रमम् ।) वत्स समाश्वसिहि समाश्वसिहि ।

**अश्वत्थामा**—( संज्ञां लब्ध्वा । सास्रम् । ) हा तात हा सकलभुवनैकगुरो । ( आकाशे । ) युधिष्ठिर युधिष्ठिर

आजन्मनो न वितथं भवता किलोक्तं
न द्वेक्षि यज्जनमतस्त्वमजातशत्रुः ।

---

**ततः प्रविशति कृप इति** । अत्र सूचनाव्यतिरेकेणैव प्रवेश इति प्रवेशे सूचना व्यभिचरतीत्यवधेयम् ॥ **धिक्सानुजमिति** । सानुजमिति धिग्योगे द्वितीया । अजातशत्रुं युधिष्ठिरम् । [विफलानि शस्त्राणि बिभ्रतीति तान् ।]खलु प्रसिद्धौ निश्चये वा । द्रौपद्याः केशग्रहस्तदाद्य द्रोणस्य च यैः [ लिखितैश्चित्रगतैरिव ] वीक्षित इत्यन्वयः ॥ १३ ॥ [ हिमवतः सारः ] हिमवत्सारो हिमालयबलम् । [तद्वद् गुरु स्थिरं चेतो यस्य । ] स्थितिः स्थैर्यम् । [ मर्यादा व्यवस्था वा । ] तस्मिन्नश्वत्थामनि । व्यवस्यति करोति । **एकस्येति** । एकस्य [ द्रौपद्याः ] केशग्रहस्य । तावच्छब्द उपक्रमे । निःशेषिता विनष्टाः ॥१४॥ इहाक्षिप्तरूपो गर्भसंधिः । यदाह—बीजस्योच्छेदनं यत्तु तदाक्षिप्तमुदाहृतम् । **आजन्मन इति** । आजन्मनो जननादारभ्य ।

---

१ पुनरहो भवता विनापि. २ मूर्च्छति; मूर्छितः पतति । ३ सोद्वेगः कृपः. ४ एतन्नास्ति क्वचित्. ५ वत्समद्य. ६ एकस्यैव विपाकोऽयम्. ७ ( विभाव्य ). ८ लब्धसंज्ञः.

**तातै गुरौ द्विजवरे मम भाग्यदोषा-**
**त्सर्वं तदेकपद एव कथं निरस्तम् ॥ १५ ॥**

**सूतः**—कुमार एष ते मातुलः शारद्वतः पार्श्वे तिष्ठति ।

**अश्वत्थामा**—( पार्श्वे विलोक्य । सबाष्पम् । ) मातुल मातुल

**गतो येनाद्य त्वं सह रणभुवं सैन्यपतिना**
**य एकः शूराणां गुरुसमरकण्डूनिकषणः ।**
**परीहासाश्चित्राः सततमभवन्येन भवतः**
**स्वसुः श्लाघ्यो भर्ता क्व नु खलु स ते मातुल गतः ॥१६॥**

**कृपः**—[3]परिगतपरिगन्तव्य एव भवान् । तदलमत्यन्तशोकावेगेन ।

**अश्वत्थामा**—मातुल परित्यक्तमेव मया [4]परिदेवनम् । एषोऽहं सुतवत्सलं तातमेवानुगच्छामि ।

**कृपः**—वत्स [5]अनुपपन्नं भवद्विधानामिदम् ।

**सूतः**—कुमार अलमतिसाहसेन ।

**अश्वत्थामा**—[6]आर्य शारद्वत

**मद्वियोगभयात्तातः परलोकमितो गतः ।**
**करोमि विरहं तस्य वत्सलस्य कथं पितुः ॥ १७ ॥**

**कृपः**—वत्स यावदयं संसारस्तावत्प्रसिद्धैवेयं लोकयात्रा यत्पुत्रैः पितरो लोकद्वयेऽप्यनुवर्तनीया इति । पश्य ।

---

वितथमसत्यम् । किल प्रसिद्धौ । यत्त्वं जनं न द्वेक्षि [ द्वेषविषयं करोषि तत्सर्वं मम भाग्यदोषात् दैवानुकूल्याभावात् त्वयेति शेषः । कथं निरस्तं दूरीकृतम् । ] ॥ १५ ॥ [ शरद्वतः पुत्रः ] शारद्वतः कृपः ॥ **गत इति** । [ येन सैन्यपतिना सह अद्य त्वं रणभुवं गतः । यः एकः शूराणां । गुर्वी या समरस्य युद्धस्य कण्डूः भुजयोः कण्डूतिस्तस्याः निकषणः ] कण्डूनिकषणः कण्डूनिवारणः । [ येन सह भवतः चित्राः । परीहासा नर्मभाषणानि सततं अभवन् । ] हे मातुल सः ते स्वसुर्भगिन्याः श्लाघ्यो भर्ता । क्व नु कुत्र नु खलु गतः । खलु प्रश्ने ॥ १६ ॥ परिगतं ज्ञातं परिगन्तव्यं ज्ञातव्यं येन स तथा । परिदेवितं विलापः । **मदिति** । अविरहं समाजं [ सान्निध्यमित्यर्थः । ] ॥ १७ ॥ लोकद्वये इहलोके परलोके च [ अनुवर्तनीया आनुकूल्येनानुसर्तव्याः । इहलोकस्थिते पितरि सदृशाचरणेन पर-

---

१ आयुष्मन्ननु. २ येनासि. ३ परिगतः परिगन्तव्य एवात्रभवान्. ४ परिदेवितम्. (टी.) ५ अनुपपन्नमीदृशं–ईदृशं व्यवसितं भवद्विधानाम्. ६ आर्य किमुच्यते. ७ करोम्यविरहं... सदा पितुः ( टी. ).

निवापाञ्जलिदानेन केतनैः श्राद्धकर्मभिः ।
तस्योपकारे शक्तस्त्वं किं जीवन्किमुतान्यथा ॥ १८ ॥

सूतः—आयुष्मन् यथैव मातुलस्ते शारद्वतः कथयति तत्तथा ।

अश्वत्थामा—आर्य सत्यमेवेदम् । किं त्वतिदुर्वहत्वाच्छोकभारस्य न शक्नोमि तातविरहितः क्षणमपि प्राणान्धारयितुम् । तद्गच्छामि तमेवोद्देशं यत्र तथाविधमपि पितरं द्रक्ष्यामि । ( उत्तिष्ठन् खड्गमालोक्य । विचिन्त्य । ) कृतमद्यापि शस्त्रग्रहणविडम्बनया । भगवन् शस्त्र ।

गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भया-
द्विमोक्ष्ये शस्त्र त्वामहमपि यतः स्वस्ति भवते ॥ १९ ॥

( इति उत्सृजति । )

( नेपथ्ये )

भो भो राजानः कथमिह भवन्तः सर्वे गुरोर्भारद्वाजस्य परिभवममुना नृशंसेन प्रयुक्तमुपेक्षन्ते ।

---

लोकगते श्राद्धादिकर्मणेत्यर्थः ।] निवापेति । निवापः पितृदानं स्यात् इत्यमरः । निवापाञ्जलिर्जलाञ्जलिः [ तस्य तर्पणादिषु दानेन] । केतनैर्गृहैः [ केतनैः पितृकृत्यैरित्यर्थः साधीयान् । अथ केतनं कृत्ये । इत्यमरः । श्राद्धकर्मभिः न तस्योपकारे त्वं किं जीवन् शक्तः । ] किमुताऽन्यथाऽजीवन्वा शक्तः । अपि तु जीवता जलादिदानमेव क्रियत इति भावः ॥ १८ ॥ तथाविधं मृतम् । गृहीतमिति । येनाचार्येण । [ परिभवो विमानना तस्य भयाद् । नोचितमपि गृहीतमासीः । यतः शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रावरुध्यते । इति स्मरणात् । ] यस्याचार्यस्य प्रभावात् । तव विषयः कश्चिन्नाभूदेवं न खलु । सर्व एव विषयोऽभूदित्यर्थः । [ तेन त्वं सुतशोकात्परित्यक्तमसि न तु भयात् । हे शस्त्र अहमपि ] विमोक्ष्ये त्यक्ष्यामि । अतो भवते स्वस्त्यस्तु । स्वस्तियोगे नमःस्वस्ति—इत्यादिना चतुर्थी ॥ १९ ॥ उत्सृजति त्यजति । भारद्वाजस्य द्रोणस्य । नृशंसेन पापवता ।

---

१ वितानैः. २ यदाह-यथाह-शारद्वतः; यथा ते मातुलः कथयति तथैवैतत् । इति पाठान्तराणि. ३तादृशमपि. ४अलमद्यापि. ५विषयाः; एतदनन्तरं (सास्रमञ्जलिं बद्ध्वा।) इत्य० कचित्. ६ आसीत्. ७ परित्यक्तुमिच्छति. ८ गुरोः परिभवममुना नृशंसेन प्रयुक्तमत्र भवतो भारद्वाजस्योपेक्षन्ते; भवन्तस्तत्रभवतः क्षत्रियगुरोर्भारद्वाजस्यासदृशं परिभवममुना इ०

**अश्वत्थामा**—(आकर्ण्य। शनैः शस्त्रं स्पृशन्।) किं गुरोर्भारद्वाजस्य परिभवः।

(पुनर्नेपथ्ये।)

**आचार्यस्य त्रिभुवनगुरोर्न्यस्तशस्त्रस्य शोकाद्-**
**द्रोणस्याजौ नयनसलिलक्षालितार्द्राननस्य।**
**मौलौ पाणिं पलितधवले न्यस्य कृत्वा नृशंसं**
**धृष्टद्युम्नः स्वशिबिरमयं याति सर्वे सहध्वम्॥ २०॥**

(सक्रोधं सकम्पं च कृपसूतौ दृष्ट्वा।) किं नामेदम्।

**प्रत्यक्षमात्तधनुषां मनुजेश्वराणां**
**प्रायोपवेशसदृशं व्रतमास्थितस्य।**
**तातस्य मे पलितमौलिनिरस्तकाशे**
**व्यापारितं शिरसि शस्त्रमशस्त्रपाणेः॥ २१॥**

**कृपः**—वत्स एवं किल जनः कथयति।

**अश्वत्थामा**—किं तातस्य दुरात्मना परिमृष्टमभूच्छिरः।

**सूतः**—(सभयम्।) कुमार आसीदयं तस्य तेजोराशेर्देवस्य नवः परिभवावतारः।

**अश्वत्थामा**—हा तात हा पुत्रप्रिय। मम मन्दभागधेयस्य कृते शस्त्रपरित्यागात्तथाविधेन क्षुद्रेणात्मा परिभावितः। अथवा

**परित्यक्ते देहे रणशिरसि शोकान्धमनसा**
**शिरः श्वा काको वा द्रुपदतनयो वा परिमृशेत्।**

---

नृशंसो घातुकः क्रूरः पापः इत्यमरः। **आचार्यस्येति**। शोकात् न्यस्तं त्यक्तं (शस्त्रं येन तस्य। नयनसलिलैरश्रुभिः क्षालितमतएवार्द्रमाननं यस्य।) पलितं जरसा शौक्ल्यम् इत्यमरः। नृशंसं विनाशम्। विनाशेऽपि नृशंसः स्यात् इति हारावली॥ २०॥ **प्रत्यक्षमिति**। आत्तं गृहीतं [धनुः यैस्तेषां मनुजेश्वराणां] नृपाणां प्रत्यक्षं समक्षम्। [प्रायोपवेशसदृशं व्रतमास्थितस्य अशस्त्रपाणेः मे तातस्य पलितमौलिनिरस्तकाशे शिरसि शस्त्रं व्यापारितम् इत्यन्वयः।] प्रायोपवेश उपवासार्थमुपवेशनम्। तत्सदृशं च यथा स्यादेवम्। तत्रापि निष्क्रियेणोपविश्यते। इहापि तथेति भावः। पलितो जराशुक्लो यो मौलिर्धम्मिल्लस्तेन निरस्तो जितः काशः काशकुसुमं येन तत्र। मौलिः किरीटे धम्मिल्ले इति विश्वः। [पाठान्तरे पलितः मौलिर्यस्य तत्पलितमौलि च निर्मीलिते अक्षिणी यस्य तन्निमीलिताक्षं च तस्मिन्]॥२१॥[परिमृष्टं स्पर्शेन दूषितम्।] **परित्यक्त इति**। मनसा त्वयेति शेषः।

---

१ सक्रोधं शनैः खड्गं स्पृशन्. २ किं किं; किं नु. ३ तार्था. ४ शम. ५ निमीलिताक्षे. ६ मन्दभाग्यस्य. ७ (विचिन्त्य।) अथ वा इति क्वचित्पाठः. ८ शोकार्त.

स्फुरद्दिव्यास्त्रौघद्रविणमदमत्तस्य च रिपो-
मंमैवायं पादः शिरसि निहितस्तस्य न करः ॥ २२ ॥

आः दुरात्मन्पाञ्चालापसद

तातं शस्त्रग्रहणविमुखं निश्चयेनोपलभ्य
त्यक्त्वा शङ्कां खलु विदधतः पाणिमस्योत्तमाङ्गे।
अश्वत्थामा करधृतधनुः पाण्डुपाञ्चालसेना-
तूलोत्क्षेपप्रलयपवनः किं न यातः स्मृतिं ते ॥ २३ ॥

युधिष्ठिर युधिष्ठिर अजातशत्रो अमिथ्यावादिन् धर्मपुत्र सानुजस्य ते किमनेनापकृतम्। अथ वा किमनेनालीकप्रकृतिजिह्मचेतसा। अर्जुन सात्यके बाहुशालिन्वृकोदर माधव युक्तं नाम भवतां सुरासुरमनुजलोकैकधनुर्धरस्य द्विजन्मनः परिणतवयसः सर्वाचार्यस्य विशेषतो मम पितुरमुना द्रुपदकुलकलङ्केन मनुजपशुना स्पृश्य-मानमुत्तमाङ्गमुपेक्षितम्। अथ वा सर्व एवैते पातकिनः। किमेतैः।

कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥ २४ ॥

---

श्वा कुक्कुरः। [ स्फुरन्ति यानि दिव्यानि अस्त्राणि तेषामोघः।] अस्त्रौघ एव द्रविणं धनं तस्य तज्जन्य इत्यर्थः मदो गर्वस्तेन मत्तस्य अयं। पितुः शिरसि करो न निहितः। किंतु ममैव शिरसि पादो निहित इत्यन्वयः ॥ २२ ॥ **तातमिति**। उपलभ्य ज्ञात्वा। शङ्कां शत्रुकृतमारणादिशङ्काम्। खलु प्रसिद्धौ। उत्तमांगं शिरः शीर्षम् इत्यमरः [ विदधतो व्यापारयतः। पाण्डूनां पाञ्चालानां च सेना एव तूलः तस्य उत्क्षेपे प्रलयपवनः कल्पांतमारुतः। लील्यैव तदुच्छेदकारी इत्यर्थः।] अश्वत्थामा तव स्मृतिं किं न यातः ॥ २३ ॥ अजातशत्रुणा किम् अपि तु न किमपि। कीदृशेन। अलीकेनासत्येन। इतरजनवत्कुटिलं चेतो यस्य तेन। [ अलीका या प्रकृतिस्तया जिह्मं चेतो यस्येति वा। सुरासुरमनुजानां लोकास्तेषु एकधनुर्धर-स्तस्य।] **कृतमिति**। [ यैः निर्गता मर्यादा येभ्यस्तैः निर्मर्यादैः उद्धृतानि आयुधानि येषां तैः उदायुधैः। प्रतिकर्तुं समर्थैरपीति यावत्। मनुजपशुभिः भवद्भिः इदं गुरुपातकं कृतमनुमतं दृष्टं वा। नरकरिपुणा सार्धं सभीमकिरीटिनां तेषां असृ-ग्मेदोमांसैः अयमहं दिशां बलिं करोमि इत्यन्वयः।] गुरु महच्च तत्पातकं च। नरकरिपुः कृष्णः। असृग्रक्तं। मेदो मज्जा। बलिमुपहारम्। बलिः पूजो-

---

१ असंख्यातास्त्रौघ०;...मदलेशस्य रिपुणा. २ मयैव. ३ तस्य सहसा. ४ जड. ५ निकृतिजि०. ६ मनुजगुरोर्लोकत्रयैकधनुर्धरस्य. ७ पतिभिः.

**कृपः**—वत्स किं न संभाव्यते भारद्वाजतुल्ये बाहुशालिनि दिव्यास्त्रग्रामकोविदे भवति ।

**अश्वत्थामा**—भो भोः पाण्डवमत्स्यसोमकमागधाद्याः क्षत्रियापसदाः ।

**पितुर्मूर्ध्नि स्पृष्टे ज्वलदनलभास्वत्परशुना**
**कृतं यद्रामेण श्रुतिमुपगतं तन्न भवताम् ।**
**किमद्याश्वत्थामा तदरिरुधिरासारविघसं**
**न कर्म क्रोधान्धः प्रभवति विधातुं रणमुखे ॥ २५ ॥**

सूत गच्छ त्वं सर्वोपकरणैः साङ्ग्रामिकैः सर्वायुधैरुपेतं महाहवलक्षणं नामास्मत्स्यन्दनमुपनय ।

**सूतः**—यदाज्ञापयति कुमारः । ( इति निष्क्रान्तः । )

**कृपः**—वत्स अवश्यप्रतिकर्तव्येऽस्मिन्दारुणे परिभवाग्नौ सर्वेषामस्माकं कोऽन्यस्त्वामन्तरेण शक्तः प्रतिकर्तुम् । किं तु—

**अश्वत्थामा**—किमतः परम् ।

**कृपः**—सैनापत्येऽभिषिक्तं भवन्तमिच्छामि समरभुवमवतारयितुम् ।

**अश्वत्थामा**—मातुल परतन्त्रमिदमकिंचित्करं च ।

**कृपः**—वत्स न खलु परतन्त्रं नाकिंचित्करं च । पश्य ।

**भवेद्भीष्ममद्रोणं धार्तराष्ट्रबलं कथम् ।**
**यदि तत्तुल्यकर्मात्र भवान्धुरि न युज्यते ॥ २६ ॥**

---

पहारयोः इति शाश्वतः ॥२४ ॥ ग्रामः संघः । कोविदः पण्डितः । **पितुरिति** । [ पितुर्जमदग्नेर्मूर्ध्नि कार्तवीर्यस्य पुत्रैः स्पृष्टे सति ।] यद् [ज्वलन् योऽनलस्तद्वद्भास्वान् परशुर्यस्य तेन ] रामेण परशुरामेण कृतं क्षत्रियजनघातादिकं तद्भवतां किं श्रुतिपथं न गतम् । पितुर्मूर्ध्नि द्रुपदेन स्पृष्टे सति अश्वत्थामा किमद्यापि तत्कर्म विधातुं न प्रभवति अपि तु प्रभवत्येव । [ अरिरुधिरस्यासार एव ] विघसो भोजनविशेषः [ यस्मिन् तत् ] । अमृतं विघसो यज्ञशेषभोजनशेषयोः । इत्यमरः ॥ २५ ॥ सांग्रामिकैः [ संग्रामाय प्रभवन्ति सांग्रामिकाणि । तस्मै प्रभवति सन्तापादिभ्यः इति ठञ् । निकारेति पाठे ] निकारस्य परिभवस्य । निकारः स्यात्परिभवः इति विश्वः । सेनापतेर्भावः सैनापत्यम् । **भवेदिति** । धार्तराष्ट्रबलं कथं भवेत् किं भवे-

---

१ न किंचिन्न. २ तुल्यपराक्रमे. ३ मागधेयाः क्षत्रियाः. ४ ( सुतमुद्दिश्य ) सुत. ५ आहितलक्षणं. ६ उपहर. ७ यथाज्ञापयति. ८ निकाराग्नौ. ९ नास्त्येतत्क्वचित्. १० अभिषिच्य. ११ अत्रभवन्तं. १२ भवेद्भीष्ममद्रोणं हि. १३ तत्तुल्यकक्षो. १४ धुर्यः.

कृतपरिकरस्य भवादृशस्य त्रैलोक्यमपि न क्षमं परिपन्थीभवितुं किं पुनर्युधिष्ठिरबलम् । तदेवं मन्ये परिकल्पिताभिषेकोपकरणः कौरवराजो न चिरात्त्वामेवाभ्यपेक्षमाणस्तिष्ठतीति ।

**अश्वत्थामा**— यद्येवं त्वरते मे परिभवानलदह्यमानमिदं चेतस्तत्प्रतीकारजलावगाहनाय । तदहं गत्वा तातवधविषण्णमानसं कुरुपतिं सैनापत्यस्वयंग्रहणप्रणयसमाश्वासनया मन्दसंतापं करोमि ।

**कृपः**—वत्स एवमिदम् । अतस्तमेवोद्देशं गच्छावः ।

( इति परिक्रामतः । )

( ततः प्रविशतः कर्णदुर्योधनौ । )

**दुर्योधनः**—अङ्गराज

**तेजस्वी रिपुहतबन्धुदुःखपारं**
**बाहुभ्यां व्रजति धृतायुधप्लवाभ्याम् ।**
**आचार्यः सुतनिधनं निशम्य संख्ये**
**किं शस्त्रग्रहसमये विशस्त्र आसीत् ॥ २७ ॥**

अथवा सूक्तमिदमभियुक्तैः प्रकृतिर्दुस्त्यजेति । यतः शोकान्धमनसा तेन विमुच्य क्षात्रधर्मकार्कश्यं द्विजातिधर्मसुलभो मार्दवपरिग्रहः कृतः ।

**कर्णः**—राजन् कौरवेश्वर न खल्विदमेवम् ।

---

दित्यर्थः । [ तयोः तुल्यं कर्म यस्य । ०कक्ष इति पाठे कक्षा पराक्रमावकाशः यस्य ।] अत्र धुरि धुरायाम् ॥ २६ ॥ परिकरः पुरस्कारः । उद्देशं प्रदेशम् । [ परिपन्थीभवितुम् । प्रतियोद्धमित्यर्थः । परिकल्पितानि अभिषेकस्य । ] उपकरणानि सामग्री [ येन ] । सैनापत्यस्य स्वयंग्रहणं तस्य प्रणयो याच्ञा तेन समाश्वासना सान्त्वनं तया । ] **तेजस्वीति** । पुरुषः पारं [ दुःखसागरस्य परतीरं । धृतः आयुधेव प्लवो याभ्यां ताभ्यां ] बाहुभ्यां व्रजतीत्यन्वयः । प्लवः कोलः । उडुपं तु प्लवः इत्यमरः । निशम्य श्रुत्वा संख्ये संग्रामे ॥ २७ ॥ सूक्तं शोभनमुक्तमभियुक्तैर्नीतिज्ञैः । [ शोकेनान्धं युक्तायुक्तविवेकासमर्थं मनो यस्य तेन । क्षत्रस्यायं क्षात्रो धर्मस्तस्य तत्सम्बन्धि कार्कश्यं कठिनहृदयताम् । ] **न खल्विति** । इदमेवं न वाच्य-

---

१ अहं च मन्ये; एवं च मन्ये. २ त्वाम् अभ्युदीक्षमाणः, कौरवनाथो भवन्तमुद्वीक्षते, ३ विपन्नमनसं. ४ ततः प्रविशति राजा कर्णश्च । इति क्वचित्पाठः. ५ चेतसा. ६ क्षत्र. ७ दैन्य.

**दुर्योधनः**—कथं[1] तर्हि ।

**कर्णः**—एवं किलास्या[2]भिप्रायो यथा अश्वत्थामा मया पृथिवीराज्ये अभिषेक्तव्य इति । तस्या[3]भावाद्वृद्धस्य मे ब्राह्मणस्य वृथा शस्त्रग्रह[4]णमिति तथा कृतवान् ।

**दुर्योधनः**—( सशिरःकम्पम् । ) एवमिदम् ।

**कर्णः**—एतदर्थं च कौरवपाण्डवपक्षपातप्रवृत्तमहासङ्ग्रामस्य राजकस्य परस्परक्षयमपेक्ष[5]माणेन तेन प्रधानपुरु[6]षवध उपेक्षा कृता ।

**दुर्योधनः**—उपपन्नमिदम् ।

**कर्णः**—अन्यच्च राजन् द्रुपदेनाप्यस्य बाल्यात्प्रभृत्यभिप्रायवेदिना न स्वराष्ट्रे वासो दत्तः ।

**दुर्योधनः**—साधु अङ्गराज साधु । निपुणमभिहितम् ।

**कर्णः**—न चायं ममैकस्याभिप्रायः । अन्ये[7]ऽभियुक्ता अपि नैवेदमन्यथा मन्यन्ते ।

**दुर्योधनः**—एवमेतत् । कः संदेहः ।

दत्त्वाभयं सोऽतिरथो वध्यमानं किरीटिना ।
सिन्धुराजमुपेक्षेत नैवं चेत्कथमन्यथा ॥ २८ ॥

**कृपः**—( विलोक्य । ) वत्स एष दुर्यो[9]धनः सूतपुत्रेण सहास्यां न्यग्रोधच्छायायामुपविष्टस्तिष्ठति । तदुपसर्पावः ।

( तथा कृत्वा । )

**उभौ**—विज[10]यतां कौरवेश्वरः ।

---

मित्यर्थः । किल प्रसिद्धौ । तथा शस्त्रत्यागम् । [ परस्परेण क्षयमपेक्षमाणेन । उपेक्षा कृता उदासीनेन स्थितम् । ] बाल्यात्प्रभृति शैशवादारभ्य । दत्त्वेति । सोऽतिरथः महारथः ( चिन्त्यमेतत् । अतिरथो महारथादभ्यधिकः—अमितान्योधयेद्यस्तु वीरान्सोतिरथः स्मृतः । इत्युक्तलक्षणो योधृविशेषः । ] द्रोणोऽभयं दत्त्वा कथमन्यथार्जुनेन वध्यमानं जयद्रथमुपेक्षेत । चेदेवं नेत्यन्वयः ॥ २८ ॥ सूतपुत्रेण सारथिसुतेन कर्णेन । सुतः क्षत्ता च सारथिः ॥ इत्यमरः । न्यग्रोधो बहुपाद्वटः इत्यमरः । विज-

---

१ किं तत्. २ द्रोणस्याभिप्राय आसीत्; तस्य मनसि; तस्यासंचितः. ३ तस्य वधात्. ४ धारणम्. ५ उपेक्षमाणेन. ६ नृप. ७ अन्येऽप्यत्र योद्धारो नैतदन्यथा मन्यन्ते. ८ दत्ता. ९ कौरवराजः. १० विजयतां विजयतां राजन्.

**दुर्योधनः**—( दृष्ट्वा । ) अये कथं कृपोऽश्वत्थामा च । ( आसनादवतीर्य कृपं प्रति । ) गुरो अभिवादये । ( अश्वत्थामानमुद्दिश्य । ) आचार्यपुत्र ।

**एह्यस्मदर्थहततात परिष्वजस्व**
**क्लान्तैरिदं मम निरन्तरमङ्गमङ्गैः ।**
**स्पर्शस्तवैष भुजयोः सदृशः पितुस्ते**
**शोकेऽपि यो विकृतिमेति तनूरुहेषु ॥ २९ ॥**

( आलिङ्ग्य पार्श्वे उपवेशयति । )

( अश्वत्थामा बाष्पमुत्सृजति । )

**कर्णः**— द्रोणायने अलमत्यर्थमात्मानं शोकानले प्रक्षिप्य ।

**दुर्योधनः**—आचार्यपुत्र को विशेष आवयोरस्मिन्व्यसनमहार्णवे । पश्य ।

**तातस्तव प्रणयवान्स पितुः सखा मे**
**शस्त्रे यथा तव गुरुः स तथा ममापि ।**
**किं तस्य देहनिधने कथयामि दुःखं**
**जानीहि तद्गुरुशुचा मनसा त्वमेव ॥ ३० ॥**

**कृपः**—वत्स यथाह कुरुपतिस्तथैवैतत् ।

**अश्वत्थामा**—राजन् एवं पक्षपातिनि त्वयि युक्तमेव शोकभारं लघूकर्तुम् । किन्तु

**मयि जीवति मत्तातः केशग्रहमवाप्तवान् ।**
**कथमन्ये करिष्यन्ति पुत्रेभ्यः पुत्रिणः स्पृहाम् ॥ ३१ ॥**

---

यता।मित्यत्र विपराभ्यां जेः इति तङ् ॥ **एहीति** । एह्यागच्छ । [ क्लान्तैर्दुःखविक्लवैरङ्गैर्ममाङ्गम् । निर्गतमन्तरं यस्मिन् कर्मणि तद्यथा तथा । गाढमित्यर्थः । [ परिष्वजस्वालिङ्ग । ] तनूरुहेषु लोमसु [ विकृतिमेति रोमोद्गमं करोतीत्यर्थः ।]॥ २९ ॥ **तात इति** । स तव तातो मे पितुः सखा मित्रमित्यन्वयः [ तस्य देहनिधने । यशोरूपो देहस्तु तिष्ठत्येव । यन्मम दुःखं तत् किं कथयामि । अत्र यत्तत् शब्दावनुक्तावपि प्रतीयेते । सामर्थ्यात् । यदाह विश्वनाथः—क्वचिदनुपात्तयोर्द्वयोः ( यत्तदोः ) अपि सामर्थ्यादवगमः । इति । ] तत्त्वमेव [ गुर्वी शुक् यस्य तेन गुरुशुचा तव मनसा ] जानीहीत्यन्वयः । [ यथा तव मनो गुरुशोकाकुलं तथा ममापीति जानीहीत्यर्थः । ] शुचा शोकेन ॥ ३० ॥ **मयीति** । पुत्रेभ्यः

---

१ प्रति. २ क्लान्तैरिमैः शुचा. ३ तवैव. ४ शोकेऽपि ये महति निर्वृतिमादधाति । ५ अलमत्यन्तावेगेनात्मानं शोकसागरे प्रक्षेप्तुम् इ. पा. ६ प्रक्षेप्तुम्. ७ व्यसनार्णवे. ८ स यथा तथा मे. ९ एतदनन्तरम् **कर्णः**–किमत्र विचारेण । **अश्वत्थामा**–राजन्येवंवादिनि युक्तमेव शोकसागरमुल्लङ्घयितुम् इ. पा. १० यत्तातः ११ केशग्रहणमाप्तवान.

**कर्णः**—द्रौणायन किमत्र[1] क्रियते यदा[2] तेनैव सर्वपरिभवत्राण-हेतुना शस्त्रमुत्सृजता तादृशीमवस्थामात्मा नीतः ।

**अश्वत्थामा**—अङ्गराज किमाह भवान् किमत्र क्रियत इति । श्रूयतां यत्क्रियते[3] ।

**यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः[4] पाण्डवीनां चमूनां**
**यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।**
**यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः[5]**
**क्रोधान्धस्तस्य तस्य स्वयमपि[6] जगतामन्तकस्यान्तकोऽहम् ॥३२॥**

अपि च भो जामदग्न्यशिष्य कर्ण

**देशः सोऽयमरातिशोणितजलैर्यस्मिन्ह्रदाः पूरिताः**
**क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः[8] ।**
**तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे**
**यद्रामेण कृतं तदेव कुरुते द्रौणायनः[10] क्रोधनः ॥ ३३ ॥**

**दुर्योधनः**—आचार्यपुत्र तस्य तथाविधस्यानन्यसाधारणस्य[11] ते वीरभावस्य किमन्यत्सदृशम् ।

**कृपः**—राजन् सुमहान्खलु द्रोणपुत्रेण वोढुमध्यवसितः समर-भारः । तदहमेवं मन्ये भवता कृतपरिकरोऽयमुच्छेत्तुं लोकत्रयमपि समर्थः किं पुनर्युधिष्ठिरबलम् । अतोऽभिषिच्यतां सैनापत्ये ।

---

इत्यत्र स्पृहेरीप्सितः इति चतुर्थी ॥३१॥ यो य इति । पाण्डवीनां पाण्डवसंबन्धि-नीनां चमूनां सेनानाम् । मध्ये [ स्वभुजयोः । स्वभुजवीर्यस्येत्यर्थः । गुरुर्मदो यस्य तथाभूतः यः यः इ० । ] अधिकवयास्तरुणो वृद्धश्च । तत्कर्मसाक्षी तातवधसाक्षाद्-द्रष्टा । साक्षाद्द्रष्टरि संज्ञायाम् इति साक्षीति सिध्यति । [मयि रणे चरति युद्धकर्मा-चरति यः यः ] प्रतीपो विपरीतकारी [ स्यात् । प्रतीपामिति पाठे यश्च यश्च रणे मयि प्रतीपं चरति इति योज्यम् । ] तस्य जगतामन्तकस्य विनाशकस्य अन्तको यमो विनाशको वा ॥ ३२ ॥ जामदग्न्यः परशुरामः । देश इति । [ सोयं कुरु-क्षेत्रम् । ] शोणितं रक्तं ( तदेव जलम् । पूरिताः परशुरामेणेति शेषः ) । क्षात्रात् क्षत्रियकृतात्परिभवः तत्रैव जात इति शेषः । आहिता उपस्थिता ये(यद्वा आहिताः) शत्रवस्तेषां ( यानि शस्त्राणि तेषां ) घस्मराणि भक्षकाणि । अत एव गुरूणि । भास्वन्ति दीप्यमानानि । रामेण परशुरामेण कृतं क्षत्रियनाशनम् ॥३३॥ सुमहान-

---

१ अत्र इति क्वचिन्नास्ति. २ यदनेन. ३ क्रियते तत्. ४ मदात्--बलः. ५ प्रतीपम्. ६ स्वयमिह. ७ भरे. ८ ग्रहात्. ९ हेति. १० द्रोणात्मजः. ११ तथाविधपरिभवस्यानन्य-पुरुषसाधारणस्य ते वीरभावस्य च किमस्त्यसदृशम् । इ. पा.

**दुर्योधनः**—सुष्ठु युज्यमानमभिहितं युष्माभिः । किं तु प्राक्प्रतिपन्नोऽयमर्थोऽङ्गराजस्य ।

**कृपः**—राजन् असदृशपरिभवशोकसागरे निमज्जन्तमेनमङ्गराजस्यार्थे नैवोपेक्षितुं युक्तम् । अस्यापि तदेवारिकुलमनुशासनीयम् । अतः किमस्य पीडा न भविष्यति ।

**अश्वत्थामा**—राजन् कौरवेश्वर किमद्यापि युक्तायुक्तविचारणया ।

**प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा-**
**मकेशवमपाण्डवं भुवनमद्य निःसोमकम् ।**
**इयं परिसमाप्यते रणकथाद्य दोःशालिना**
**व्यपैतु नृपकाननातिगुरुरद्य भारो भुवः ॥ ३४ ॥**

**कर्णः**—( विहस्य । ) वक्तुं सुकरमिदं दुष्करमध्यवसातुम् । बहवः कौरवबलेऽस्य कर्मणः शक्ताः ।

**अश्वत्थामा**—अङ्गराज एवमिदम् । बहवः कौरवबलेऽत्र शक्ताः । किं तु दुःखोपहतः शोकावेगवशाद्ब्रवीमि न पुनर्वीरजनाधिक्षेपेण ।

---

तिशयितः । वोढुं धर्तुम् । ( अध्यवसितः निश्चयपूर्वमङ्गीकृतः । ) अयमर्थोऽभिषेकरूपः । [ असदृशोऽननुरूपः । यद्वा नास्ति सदृशो यस्य अपूर्वः । अतः अस्योपेक्षायाः प्रयत्नेत्यादि । हे मातुल त्वं तावन्निशां व्याप्य शेषे स्वपिहि ।] [अयमर्थोऽसंगतः । हे राजन् अद्य त्वं निशां शेषे शयिष्यसे । वर्तमानसामीप्ये लट् । कथंभूतः निःशेषोच्छिन्नशत्रुत्वाद्गाढनिद्रामग्नः सन् । बन्दिजनकृतस्तवैः प्रयत्नेन श्वः प्रभाते परिबोधितः । ] कीदृशः सन् । स्तुतिभिर्मागधादिकृतस्तवैरद्य प्रयत्नेन परिबोधितः प्रबोधितः । तथा च त्वं स्तवादिनापि परिहृतभगिनीपतिशोकः समस्तां निशां व्याप्य शयनं विधेहीति भावः । शेषे इति शीङ् स्वप्ने लटि मध्यमपुरुषैकवचने साधु । निशाम् इत्यत्र कालाध्वनोरत्यन्तसंयोगे इति द्वितीया । अद्य पुनर्भुवनमेतादृशमस्तु । कीदृशम् । केशवशून्यं पाण्डवशून्यं सोमवंशशून्यं च । दोःशालिनां बाहुबलशालिनां वीराणामपि रणकथा युद्धवार्ताद्य [ पाठान्तरे दोःशालिना ] मया परिसमाप्यते । अद्य भुवो भारोऽपैतु दूरं यातु । कीदृशः । नृपा एव काननानि वनानि तैरतिगुरुः । उपचित इत्यर्थः । दोषा भुजा भुजः इत्यमरः [ अत्र तोटकं नाम गर्भसन्ध्यङ्गमुक्तं । संरब्धं तोटकं वचः इति तल्लक्षणात् ] ॥ ३४॥ वीरजनाधिक्षेपेण [ वीरजननिन्दनेच्छया । ] ननु हे स्पर्धायामवरे

---

१ अस्मात्परं क्वचित् ( इत्यंगुरीयकं ददाति । ) कर्णः—(सहर्षम् । ) महान्-परःप्रसादः । कृपः—असदृशपरिभवसागरे मज्जन्तमेनमङ्गराजस्यार्थे नोपेक्षितुं युक्तम् । अश्व०—( साटोपम् । ) राजन् राजन् युक्तायुक्तविचारणया किमद्यापि । इति । २ दोःशालिनामपैतु. ३ रिपु. ४ द्रोणात्मज वक्तुं इति, अश्वत्थामन् अकेशवमपाण्डवमिति वक्तुमपि दुष्करम् । किमुताध्य० इति च पा०. ५ हतचित्तः ।

**कर्णः**—मूढ दुःखितस्याश्रुपातः कुपितस्य चायुधद्वितीयस्य सङ्ग्रामावतरणमुचितं नैवंविधाः प्रलापाः।

**अश्वत्थामा**—(सक्रोधम्।) अरे रे राधागर्भभारभूत सूतापसद ममापि नामाश्वत्थाम्नो दुःखितस्याश्रुभिः प्रतिक्रियामुपदिशसि न शस्त्रेण। पश्य।

**निर्वीर्यं गुरुशापभाषितवशात्किं मे तवेवायुधं**
**संप्रत्येव भयाद्विहाय समरं प्राप्तोऽस्मि किं त्वं यथा।**
**जातोऽहं स्तुतिवंशकीर्तनविदां किं सारथीनां कुले**
**क्षुद्रारातिकृताप्रियं प्रतिकरोम्यस्त्रेण नास्त्रेण यत्॥ ३५॥**

**कर्णः**—(सक्रोधम्।) अरे रे वाचाट वृथाशस्त्रग्रहणदुर्विदग्ध बटो।

**निर्वीर्यं वा सवीर्यं वा मया नोत्सृष्टमायुधम्।**
**यथा पाञ्चालभीतेन पित्रा ते बाहुशालिना॥ ३६॥**

अपि च।

**सूतो वा सूतपुत्रो वा यो वा को वा भवाम्यहम्।**
**दैवायत्तं कुले जन्म मदायत्तं तु पौरुषम्॥ ३७॥**

**अश्वत्थामा**—(सक्रोधम्।) अरे रे रथकारकुलकलङ्क राधागर्भभारभूत अरे आयुधानभिज्ञ तातमप्यधिक्षिपसि। अथ वा

---

पदम् इति भरतः। गर्भस्य गर्भे वा भारभूतः। राधा नाम सूतपत्नी तस्याः। **निर्वीर्यमिति**। [गुरोः परशुरामस्य शापभाषितस्य वशात्। यस्मान्मिथ्योपचरितो ह्यस्त्रलोभादिह त्वया। तस्मादेतन्न ते मूढ ब्रह्मास्त्रं प्रतिभास्यति॥ इत्येवंरूपात्।] कर्णःकिल बालकः स्वीयक्षत्रियजातिं संगोप्यास्त्रविद्याशिक्षार्थं परशुरामस्थानं गतः। तेनास्त्रविद्या तस्मै दत्ता। ततः कर्णोयं क्षत्रिय इति तेन ज्ञातम्। अथ तवास्त्रविद्या वीर्यवती न भवतु मम च्छलनादिति परशुरामस्तं शशाप—इति पुराणम्। तवेव यथा तवेत्यर्थः। स्तुतिं च वंशकीर्तनं च [विदन्तीति तेषां]। यद्वा। स्तुतिरूपं यद्वंशकीर्तनम्। [यत् येन क्षुद्रश्चासौ अरातिश्च तेन कृतं यदप्रियं तद् अस्रेण] प्रतिकरोमि प्रतीकारविषयं करोमि। अस्रेण नेत्रजलेन॥ ३५॥ **निर्वीर्यं वेति**। उत्सृष्टं त्यक्तम्॥ ३६॥ **सूत इति**। सूतः सारथिः। स्यो वेनि त्यच्छब्दस्य प्रयोगः। स च्छान्दसोऽपि क्वचिद्भाषायां प्रयुज्यते। सो वा इत्यपि पाठः॥ ३७॥ [रथं करोतीति रथकारः। कर्मण्यण्।]

---

१ द्रोणायने. २ (सरोषम्). ३ अस्मादनन्तरं केषुचित्पुस्तकेषु—किमेवमाक्षिपसि। कर्णः—सूतो वा इत्यादि पद्यं; अश्वत्थामा—किमाह भवान्। ममापि नामा० इ. पा. ४ कृताप्रियः. ५ किम्. ६ वा सो—स्यो (टी.)

**स भीरुः शूरो वा प्रथितभुजसारस्त्रिभुवने**
**कृतं यत्तेनाजौ प्रतिदिनमियं वेत्ति वसुधा ।**
**परित्यक्तं शस्त्रं कथमिति स सत्यव्रतधरः**
**पृथासूनुः साक्षी त्वमसि रणभीरो क नु तदा ॥ ३८ ॥**

**कर्णः**—( विहस्य । ) एवं भीरुरहम् । पुनर्विक्रमैकरसं[2] तव पितरमनुस्मृत्य महान्मे संशयो जातः । अपि च रे मूढ

**यदि शस्त्रमुज्झितमशस्त्रपाणयो**
**न निवारयन्ति किमरीनुदायुधान् ।**
**यदनेन मौलिदलनेऽप्युदासितं**
**सुचिरं स्त्रियेव नृपचक्रसंनिधौ ॥ ३९ ॥**

**अश्वत्थामा**—( सक्रोधं सकम्पं च । ) दुरात्मन् राजवल्लभ प्रगल्भ सूतापसद असंबद्धप्रलापिन्

**कथमपि न निषिद्धो दुःखिना भीरुणा वा**
**द्रुपदतनयपाणिस्तेन पित्रा ममाद्य ।**
**तव भुजबलदर्पाध्मायमानस्य वामः**
**शिरसि चरण एष न्यस्यते वारयैनम् ॥ ४० ॥**

( इति तथा कर्तुमुत्तिष्ठति । )

**कृपदुर्योधनौ**—गुरुपुत्र[3] मर्षय । ( इति निवारयतः । )

( अश्वत्थामा चरणप्रहारं नाटयति । )

**कर्णः**—( सक्रोधमुत्थाय खड्गमाकृष्य । ) अरे दुरात्मन् वाचाल ब्रह्मबन्धो आत्मश्लाघ[5]

---

**स भीरुरिति** । त्रिभुवने प्रथितं ख्यातं [ भुजयोः सारो बलं यस्य तथा ] । आजौ युद्धे । प्रतिदिनं तेन यत्कृतं तद्वसुधा वेत्तीत्यन्वयः । तेन शस्त्रं कथं परित्यक्तं तत्र स [ सत्यमेव व्रतं सत्यव्रतं तस्य धरः पृथासूनुः ]युधिष्ठिरः साक्षी ॥ ३८ ॥ **यदीति** [ शस्त्रपाणयो न भवन्ति इति ] अशस्त्रपाणयस्त्यक्तास्त्राः । उदायुधानुद्यतास्त्रान् । किं न निवारयन्ति । किं तु निवारयन्त्येव । अनेन द्रोणेन । दलने खण्डने । उदासितमुदासीनीभूतम् । स्त्रियेवेति । यथा स्त्रियोदास्यते इत्यर्थः । चक्रं सैन्यरथाङ्गयोः इति विश्वः ॥ ३९ ॥ **कथमपीति** । तव शिरस्येष वामश्चरणो वामपादो मया न्यस्यते इत्यन्वयः । [ भुजयोर्बलं तस्य दर्पस्तेन । ] आध्मायमानस्याध्मातस्य [ न दाक्षिणः पाणिः किंतु वामः पादः दीयते ] ॥ ४० ॥

---

१ धनः. २ त्वं पुनः—रसं—सारं—स्वपितरमनुस्मृत्य न जाने किं करिष्यसीति । महान्मे इ०, त्वं पुनर्विक्रमैकरसः । तव पितर०. ३ एव. ४ वत्स. ५ आत्मश्लाघिन्.

**जात्या का[1]ममवध्योऽसि चरणं त्विमम्[2]उद्धृतम्।**
**अनेन लूनं खड्गेन प[3]तितं वेत्स्य[4]सि क्षितौ॥ ४१॥**

**अश्वत्थामा**—अरे मूढ[5] किं नाम जात्या कामम[6]वध्योऽहम्। इयं सा जातिस्त्यक्ता। ( इति यज्ञोपवीतं छिनत्ति। पुनश्च सक्रोधम्। )

**अद्य[6] मिथ्याप्रतिज्ञोऽसौ किरीटी क्रियते मया।**
**शस्त्रं[7] गृहाण वा त्यक्त्वा मौलौ वा रचयाञ्जलिम्॥ ४२॥**

( उभावपि खड्गमाकृष्यान्योन्यं प्रहर्तुमुद्यतौ। कृपदुर्योधनौ वा[8]रयतः। )

**दुर्योधनः**—सखे आचार्यपुत्र शस्त्रग्रहणेनालम्।

**कृपः**—वत्स सूतपुत्र शस्त्रग्रहणेनालम्।

**अश्वत्थामा**—मातुल मातुल किं निवा[9]रयसि। अयमपि तातनिन्दाप्रगल्भः सू[10]तापसदो धृष्टद्युम्नपक्षपात्येव।

**कर्णः**—राजन् न खल्वहं निवारयितव्यः।

**उपेक्षितानां मन्दानां धीरसत्त्वैरवज्ञया।**
**अत्रासितानां क्रोधान्धैर्भवत्येषा विकत्थना॥ ४३॥**

---

वाचाल बहुभाषक। ब्रह्मबन्धो अग्राह्यनामन्। [ ब्राह्मणाधम ] ब्रह्मबन्धुरधिक्षेपे निर्देश्येऽपि निगद्यते इत्यमरः। **जात्येति**। [ अकामानुमतौ कामम् इत्यमरः। जात्या ब्राह्मणस्यावध्यत्वात्। तदुक्तं भागवते–वपनं द्रविणादानं स्थानान्निर्यापणं तथा। एष हि ब्रह्मबन्धूनां वधो नान्योऽस्ति दैहिकः॥ ] चरणं लूनं सत्क्षितौ। पतितं द्रक्ष्यसीत्यन्वयः। पदंघ्रिश्चरणोऽस्त्रियाम् इत्यमरः॥ ४१॥ **अद्येति**। [ असूयितारं द्वेष्टारं प्रवक्तारं विकत्थनम्। भीमसेन नियोगात्ते हन्ताहं कर्णमाहवे॥ अर्जुनः प्रतिजानीते भीमस्य प्रियकाम्यया। कर्णं कर्णानुगांश्चैव रणे हन्तास्मि पत्रिभिः॥ इति सभापर्वणि अर्जुनेन कर्णवधः प्रतिज्ञातः। तदनुरोधादाह अद्य मयासौ किरीटी ] मिथ्याप्रतिज्ञो मया तव वधात्तेन च तदकरणादिति भावः। [त्यक्त्वा शस्त्रमिति शेषः।] ॥४२॥ [तातस्य निन्दायां प्रगल्भः।] **उपेक्षितानामिति**। अवज्ञया ( प्रलपत्वयं क्षुद्रो नास्माकं कापि क्षतिरित्यवहे-

---

१ तावत्. २ त्विदं; उद्यतम्, उद्धृतम्. ३ पतित. ४ द्रक्ष्यसि. ५ अरे रे किं जात्या तावदवध्योऽहं यत एवं ब्रवीषि। गृहाण शस्त्रम्। इयं सा जातिः परित्यक्ता। ( इति यज्ञोपवीतं भूमौ निक्षिपति।). ६ चेत्. ७ गृहाणास्त्रं व्रज त्यक्त्वा मौलौ वा धारयाञ्जलिम्। अद्य मिथ्याप्रतिज्ञोऽसौ गाण्डीवी क्रियते मया। कर्णः–गृहाणास्त्रम् ( इत्यन्योन्यव्यसनं कुरुतः। ) राजा अङ्गराज अलमाचार्यपुत्रेण सह शस्त्रग्रहणेन। गुरुपुत्र अलमङ्गराजेन सह शस्त्रग्रहणेन। ८ निवारयतः. ९ किं-निवारयसि; समासादयतु तावत्तातनिन्दाप्रगल्भः सूतकुलकलङ्को मद्भुजान्तरनिष्पेषसुलभं प्राणानामवसानम्. १० सूतकुलाधमः.

**अश्वत्थामा**—राजन् मुञ्च मुञ्चैनम् । आसादयतु मद्भुजान्तरनिष्पेषसुलभमसूनामवसादनम् । अन्यच्च राजन् स्नेहेन कार्येण वा यत्त्वमेनं ताताधिक्षेपकारिणं दुरात्मानं मत्तः परिरक्षितुमिच्छसि तदुभयमपि वृथैव । पश्य ।

**पापप्रियस्तव कथं गुणिनः सहायः**
**सूतान्वयः शशधरान्वयसंभवस्य ।**
**हन्ता किरीटिनमहं नृप मुञ्च कुर्या**
**क्रोधादकर्णमपृथात्मजमद्य लोकम् ॥ ४४ ॥**

( इति प्रहर्तुमिच्छति । )

**कर्णः**—( खड्गमुद्यम्य । ) अरे वाचाट ब्राह्मणाधम अयं न भवसि । राजन् मुञ्च मुञ्च । न खल्वहं वारयितव्यः । ( हन्तुमिच्छति । )

( दुर्योधनकृपौ निवारयतः । )

**दुर्योधनः**—कर्ण गुरुपुत्र कोऽयमद्य युवयोर्व्यामोहः ।

**कृपः**—वत्स अन्यदेव प्रस्तुतमन्यत्रावेग इति कोऽयं व्यामोहः । स्वबलव्यसनं चेदमस्मिन्काले राजकुलस्यास्य युष्मत्त एव भवतीति वामः पन्थाः ।

**अश्वत्थामा**—मातुल न लभ्यतेऽस्य कटुप्रलापिनो रथकारकुलकलङ्कस्य दर्पः शातयितुम् ।

---

लया । ) धीरसत्त्वैः सुभटैरुपेक्षितानामित्यन्वयः । [ क्रोधान्धैः कोपमूर्छितैरत्रासितानामशासितानां ] मन्दानामेषा विकत्थना भवति । अतोत्र मया नोपेक्षा कर्तव्येति भावः । अत्रासितानां गेहवासिनाम् ॥ ४३ ॥ निष्पेषो यन्त्रणं [ तेन सुलभं सुप्रापम् । अवसानं विनाशम् । ] । अस्मत्तो मत्सकाशात् । **पापप्रिय इति** । अयं पापस्तव कथं सखेत्यन्वयः । कीदृशः । प्रियः प्रियसुहृदित्यर्थः । अन्वयो वंशः । अहं किरीटिनं हन्ता हनिष्यामि । ततो हे नृप मां मुञ्च । अहं लोकं कर्णरहितमर्जुनरहितं च कुर्यां करिष्ये ॥ ४४ ॥ [व्यामोहो मतिविभ्रमः । कर्तव्याकर्तव्यविवेकशून्यतेत्यर्थः । अन्यद् द्रोणपरिभवप्रतिकारणम् । अन्यत्र स्वार्थविनाशहेतौ द्वन्द्वे आवेगः साग्रहा प्रवृत्तिः । वामः पन्थाः अनीतिमार्गाश्रयणम् । असमीक्ष्यकारितेत्यर्थः । ]

---

१ ताताधिक्षेपप्रगल्भमस्मत्तो रक्षसि. २ पापः ( टी. ). ३ सखायं. ४ सूतात्मज. ५ भो अश्वत्थामन् ननु भोः कर्ण अन्यदेव प्रकृतमन्यत्रावेगः । कोऽयमद्य युवयोर्व्यामोहः स्वबलव्यसनं चेदमस्मिन्काले राजकुलस्यास्मत्त एव उपपद्यते इति नायं पन्थाः । ६ आयुष्मन्. ७ आवेशः, अन्यदेवापतितम्.

**कृपः**—वत्स अकालः खलु स्वबलप्रधानविरोधस्य ।

**अश्वत्थामा**—मातुल यद्येवम्

**अयं पापो यावन्न निधनमुपेयादरिशरैः**
**परित्यक्तं तावत्प्रियमपि मयास्त्रं रणमुखे ।**
**बलानां नाथेऽस्मिन्परिकुपितभीमार्जुनभये**
**समुत्पन्ने राजा प्रियसखबलं वेत्तु समरे ॥ ४५ ॥**

( इति खड्गमुत्सृजति । )

**कर्णः**—(विहस्य ।) [3]कुलक्रमागतमेवैतद्भवादृशां यदस्त्रपरित्यागो नाम

**अश्वत्थामा**—ननु रे अपरित्यक्तमपि भवादृशैरायुधं चिर-परित्यक्तमेव निष्फलत्वात् ।

**कर्णः**—अरे मूढ

**धृतायुधो यावदहं तावदन्यैः किमायुधैः ।**
**यद्वा न सिद्धमस्त्रेण मम तत्केन सेत्स्यति ॥ ४६ ॥**

( नेपथ्ये । )

आः दुरात्मन् द्रौपदीकेशाम्बराकर्षण[3]महापातकिन् धार्तराष्ट्रापसद चिरस्य खलु कालस्य [4]मत्संमुखमागतोऽसि । क्षुद्रपशो क्वेदानीं गम्यते । अपि च । भो भो राधेयदुर्योधनसौबलप्रभृतयः पाण्डवविद्वेषिण-श्चापपाणयो मानधनाः शृण्वन्तु भवन्तः ।

**स्पृष्टा[5] येन शिरोरुहे[6] नृपशुना पाञ्चालराजात्मजा**
**येनास्याः परिधानमप्यपहृतं राज्ञां गुरूणां[7] पुरः ।**

---

रथकारः सारथिः । शातयितुं तनूकर्तुम् । ( स्वबलप्रधानः सेनापतिः कर्णः । तस्य सेनापतित्वेन वृतत्वात् । ) **अयमिति** । उपेयाद्गच्छेत् ( प्रियः सखा प्रियसख-स्तस्य बलम् । अस्य प्रभावः कियत्कार्यावह इति जानात्वित्यर्थः । सखममुम् इति पाठे अमुं कर्णं ।) ॥ ४५ ॥ **धृतायुध इति** । ममास्त्रेण यन्न सिद्धमि-त्यन्वयः ॥ ४६ ॥ इह श्लोके दम्भ आरभटी वृत्तिः । कपटानृतदम्भेषु वृत्तिरार-भटी मता इति भरतः । [ प्रयत्नपरिबोधितः इत्यादिना धृतायुध...इत्यन्तेनान्योन्यं कर्णाश्वत्थाम्नोः संरब्धवचसा सेनाभेदकारिणा पाण्डवविजयप्राप्त्याशान्वितं तोटक-मिति दशरूपकम्।संरब्धं तोटकं वचःइति तल्लक्षणम्। ०कर्षणमेव महापातकमस्य विद्यते ०कर्षणेन वा महापातकी । ] सौबलो योधभेदः (शकुनिः)।**स्पृष्टेति**। आसवो मद्यम्।

---

१ सखममुं. २ अपरित्यक्तमपि भवादृशैरायुधं ननु चिरपरित्यक्तमेव निष्फलत्वात् धृतायुधो यावदहं इ. ३ बाहुशालिन्. ४ मत्संमुखी-नमा-गतोऽसि. ५ कृष्टा. ६ शिरोरुहेषु पशुना. ७ कुरूणां.

यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवा-
न्सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवः ॥४७॥

( सर्वे आकर्णयन्ति । )

**अश्वत्थामा**—( सोत्प्रासम् । ) अङ्गराज सेनापते जामदग्न्यशिष्य द्रोणोपहासिन् भुजबलपरिरक्षितसकललोक । ( धृतायुधः इति पठित्वा । ) इदं तदासन्नतरमेव संवृत्तम् । रक्षैनं सांप्रतं भीमाद् दुःशासनम् ।

**कर्णः**—आः का शक्तिर्वृकोदरस्य मयि जीवति दुःशासनस्य छायामप्याक्रमितुम् । युवराज न भेतव्यं न भेतव्यम् । अयमहमागतोऽस्मि । ( इति निष्क्रान्तः । )

**अश्वत्थामा**—राजन्कौरवनाथ अभीष्मद्रोणं संप्रति कौरवबलमालोडयन्तौ भीमार्जुनौ राधेयेनैवंविधेनान्येन वा न शक्येते निवारयितुम् । अतः स्वयमेव भ्रातुः प्रतीकारपरो भव ।

**दुर्योधनः**—आः शक्तिरस्ति दुरात्मनः पवनतनयस्यान्यस्य वा मयि जीवति शस्त्रपाणौ वत्सस्य छायामप्याक्रमितुम् । वत्स न भेतव्यं न भेतव्यम् । कः कोऽत्र भोः । रथमुपनय । ( इति निष्क्रान्तः । )

( नेपथ्ये कलकलः । )

**अश्वत्थामा**—( अग्रतोवलोक्य । ) मातुल हा धिक्कष्टम् । एष खलु भ्रातुः प्रतिज्ञाभङ्गभीरुः किरीटी समं दुर्योधनराधेयौ शरवर्षैर्दुर्वारैरभिद्रवति । सर्वथा पीतं दुःशासनशोणितं भीमेन ।

---

भुजपञ्जरे बाहुमध्ये । कथं कौरवा इति । कच्छादिपाठान्मनुष्यतत्स्थयोरिति वुञ्प्रसक्तः । अत्रामनुष्यत्वेन विवक्षणान्न वुञ् । ततः तस्येदम् इत्यण् । जनपदविवक्षायां वाण् ॥ ४७ ॥ सोत्प्रासम् समनाक्स्मितम् इत्यमरः । बाढं निश्चितम् । आलोडयन्तौ उन्मथ्नन्तौ । सममेकदैव । अहं विषहे सोढुं पारयामि । (अनृतं

---

१ मद्भुजगोचरे. २ कौरवाः ( टी. ) ३ अश्वत्थामा—( सोपहासम् । ) अङ्गराज । कर्णः—किमाह भवान् । अश्व०—सेनाधिपते । कर्णः—तत्र कः संदेहः । अश्व०—जामदग्न्यशिष्य । कर्णः—बाढम् । अश्व०—द्रोणोपहासिन् । कर्णः—एवमेतत् । अश्व०—त्वयोक्तम् । कर्णः—किं मयोक्तम् । अश्व०—धृतायुधो यावदहम् इति पठति । कर्णः—बाढमुक्तम् । अश्व०—इदं महत्कदनं संवृत्तम् । कर्णः—किं जातम् । अश्व०—भीमः कथयति । कर्णः—किम् । अश्व०—श्रूयतां । कर्णः—किं कथ्यतां । अश्व०—कृष्टा येन इत्यादि पठति । तद्भीमाद्दुःशासनः संरक्ष्यतां युवराजः । इत्यपरः पाठः । ४ आः शक्तिरस्ति वृकोदरस्य ५ युवराजस्य. ६ अतिक्रमितुं; लङ्घयितुं. ७ आः का शक्तिर्दुरात्मनः. ८ ससंभ्रमम. ९ कष्टं कष्टं मातुल मातुल कष्टं.

न[1] खलु विषहे दुर्योधनानुजस्यैनां विपत्तिमवलोकयितुम् । अनृतमनुमतं नाम । मातुल शस्त्रं शस्त्रम् ।

**सत्यादप्यनृतं श्रेयो धिक्स्वर्गं नरकोऽस्तु मे ।**
**भीमाद्दुःशासनं त्रातुं त्यक्तमत्यक्तमायुधम् ॥ ४८ ॥**

( इति खड्गं ग्रहीतुमिच्छति । )

( नेपथ्ये । )

महात्मन्[2] भारद्वाजसूनो न खलु सत्यवचनमनुल्लङ्घितपूर्वमुल्लङ्घयितुमर्हसि ।

**कृपः**—वत्स अशरीरिणी भारती[3] भवन्तमनृतादभिरक्षति ।

**अश्वत्थामा**—कथमियममानुषी वाग्मानुमनुते सङ्ग्रामावतरणं मम[4] । भोः कष्टम् । आः पक्षपातिनो देवा अपि पाण्डवानाम् । सर्वथा पीतं दुःशासनशोणितं भीमेन । भोः कष्टं कष्टम् ।

**दुःशासनस्य रुधिरे पीयमानेऽप्युदासितम् ।**
**दुर्योधनस्य कर्तास्मि किमन्यत्प्रियमाहवे ॥ ४९ ॥**

मातुल राधेयक्रोधवशादनार्यमस्माभिराचरितम् । अतस्त्वमपि तावदस्य राज्ञः पार्श्ववर्ती भव ।

**कृपः**—गच्छाम्यहमत्र प्रतिविधातुम् । भवानपि शिबिरसंनिवेशमेव प्रतिष्ठताम् ।

( परिक्रम्य[5] निष्क्रान्तौ )

## इति तृतीयोऽङ्कः ।

---

प्रतिज्ञाभङ्गरूपम् । **सत्यादिति** । अनृतमसत्यम् । स्वर्गमिति । धिग्योगे द्वितीया । **भीमादिति** । भीत्रार्थानां भयहेतुः इति पञ्चमी । अत्यक्तं मयेति शेषः ॥ ४८ ॥ भारती सरस्वती ( अनृतादसत्याचरणात् ) **दुःशासनस्येति** । उदासितम् । मयेति शेषः । किमन्यत्प्रियं दुर्योधनस्याहं कर्ता करिष्ये ॥ ४९ ॥ अनार्यमनर्हम् ॥

अमूत यं रत्नधरो गुणीशो नानागुणाढ्या दमयन्तिकापि ।
जगद्धरं तस्य कृतावयासीदङ्कस्तृतीयो वरटिप्पनेऽत्र ॥

## इति तृतीयोऽङ्कः ।

---

१ तन्न युक्तं दुर्योधनस्यानुजस्यैतां विपत्तिमुपेक्षितुं । अनृतमनुमतं नाम । भगवन् शस्त्र इत्यपि क्वचित्पाठः. २ महाभाग शारद्वतीसूनो. ३ वाणी. ४ ०तरणं मे । सर्वथा पाण्डवपक्षपातिनो देवाः । भोः इ. ५ उभौ परिक्रम्य.

## चतुर्थोऽङ्कः ।

( ततः प्रविशति प्रहारमूर्च्छितं रथस्थं दुर्योधनमपहरन् सूतः । )

( सूतः ससंभ्रमं परिक्रामति । )

( नेपथ्ये । )

भो भोः बाहुबल[1]ावलेपप्रवर्तितमहासमरदोहदाः कौरव[2]पक्षपातपणीकृतप्राणद्रविणसंचया नरपतयः संस्तभ्यन्तां संस्तभ्यन्तां निहतदुःशासनपीतावशेषशोणितस्नपितबीभत्सवेषवृकोदरदर्शनभ[3]यपरिस्ख[4]लत्प्रहरणानि रणात्प्र[5]द्रवन्ति बलानि ।

**सूतः**—( विलोक्य । ) कथमेष धवलचप[6]लचामरचुम्बितकनककमण्ड[7]लुना शिख[8]राववद्धवैजयन्तीसूचितेन हतगजवाजिनरकलेवरसहस्रसंमर्दविष[9]मोद्धातकृतकलकलकिङ्किणीजालमालिना रथेन शरवर्षस्तम्भितपरबलपराक्रमप्रसरः प्रद्रुतमात्मब[10]लमाश्वासयन्कृपः किरीटिनाभियुक्तमङ्गराजमनुसरति । हन्त जात[11]मस्मद्बलानामवलम्बनम् ।

( नेपथ्ये कलकलानन्तरम् । )

भो भोः अस्मद्दर्शनभयस्खलितकार्मुककृपाणतोमरशक्तयः कौरवचमूभटाः पाण्डवपक्षपातिनश्च योधाः न भेतव्यं न भेतव्यम् । अयमहं निहतदुःशासनपीवरोरःस्थलक्षतजासवपानमदोद्धतो र[12]भस-

---

अवलेपः स्मृतो गर्वे इति विश्वः । दोहदो दोहर इति प्रसिद्धः । [ प्रवर्तितं महासमरमेव दोहदो येषाम् । ] प्राणा एव द्रविणमिति रूपकम् । [ पणीकृतः प्राणद्रविणसंचयो यैः ।] संस्तभ्यन्तां स्थिरीक्रियन्ताम् । [पीतावशेषेण शोणितेन स्नपितः अत एव बीभत्सो वेषो यस्य तस्य वृकोदरस्य दर्शनाद्यद्भयं तेन परिस्खलन्ति प्रहरणानि येषां तानि । ] बीभत्सो भयानकः । प्रहरणमस्त्रम् । चपलं चंचलम् । चुम्बितः संबद्धः शिखरमभ्रम् । वैजयन्ती पताका । कलेवरं शरीरम् । [ कलेवराणां सहस्राणि तेषां संमर्दः निविडावस्थानं संघट्टो वा तेन विषमो यः उद्धातोऽभिघातजन्यः क्षोभस्तेन कृतः कलकलो यस्य तादृग्यत् किंकिणी जालं क्षुद्रघण्टिकासमूहस्तस्य माला वियतेऽस्य तेन मालते शोभत इति वा तेन। हन्त हर्षे । कृपाणः खड्गः ।] तोमरोऽस्त्रभेदः । [निहतः यः दुःशासनः तस्य पीवरमुरःस्थलं तस्य यत्क्षतजं रक्तं तदेवासवस्तस्य पानेन यो मदस्तेनोद्धतः ।] पीवरं

---

१ बलाहंकार. २ कौरवकुल. ३ विषाद. ४ परिस्खलित–. ५ वि-द्रवन्ति. ६ चपलचारु, धवलचारु. ७ दण्डेन ८ शिखराबद्ध–; शिखरावनद्ध–. ९ विषमोत्खात–. १० चक्र; परबलपराक्रमप्रद्रुतमात्मबलं; परचक्रपराक्रमप्रसर; प्रतिपक्षमीक्षमाणमात्मीयबलम्. ११ जातमेव बलानामवलम्बनम् इति क्वचित्पाठः. १२ रणरभस.

गामी स्तोकावशिष्टप्रतिज्ञामहोत्सवः कौरवराजस्य द्यूतनिर्जितो दासः पा[1]र्थमध्यमो भीमसेनः सर्वान्भवतः सा[2]क्षीकरोमि । श्रूयताम् ।

> **राज्ञो मानधनस्य कार्मुकभृतो दुर्योधनस्याग्रतः**
> **प्रत्यक्षं कुरुबान्धवस्य मि[3]षतः कर्णस्य शल्यस्य च ।**
> **पीतं तस्य मयाद्य पाण्डववधूकेशाम्बराकर्षिणः**
> **कोष्णं जीवत एव तीक्ष्णकरजक्षुण्णादसृग्वक्षसः ॥ १ ॥**

**सूतः**—( श्रुत्वा । सभयम् । ) [4]अये आसन्न [5]एव दुरात्मा कौरव-[6]राजपुत्रमहावनोत्पातमारुतो मारुतिः । अनुपलब्धसंज्ञश्च तावदत्र महाराजः । भवतु । सुदू[7]रमपहरामि स्यन्दनम् । कदाचिद् दुःशासन इवास्मिन्नप्ययमनार्योऽनार्यमाचरिष्यति । ( त्वरिततरं परिक्रम्यावलोक्य च । ) अये अयमसौ सरसीसरोजविलोलनसुरभिशीतलमातरिश्वसंवाहितसान्द्रकिसलयो न्यग्रोधपादपः । उ[8]चिता विश्रामभूरियं समरव्यापारखिन्नस्य वीरजनस्य । [9]अत्र स्थितश्चायाचिततालवृन्तेन हरिचन्दनच्छटाशीतलेनाप्रयत्नसुरभिणा दशापरिणामयोग्येन [10]सरसीसमीरणेनामुना गतक्लमो भविष्यति महाराजः । [11]लूनकेतुश्चायं रथोऽ-

---

मांसलम् । [ रभसः वेगस्तेन गन्तुं शीलं यस्य स रभसगामी । सुप्यजातौ णिनिस्ताच्छील्ये इति णिनिः । स्तोकमवशिष्टः प्रतिज्ञामहोत्सवो यस्य । ] पृथायाः पुत्राः पार्थास्तेषु मध्यमः । **राज्ञ इति** । [ मिषतः स्पर्धावतो जीवतो वा ।] मृषतः सहिष्णोः । कोष्णमीषदुष्णम् । कोष्णं कवोष्णं मन्दोष्णम् इत्यमरः । तस्य दुःशासनस्य । कराज्जायन्ते इति करजानि नखानि तैः क्षुण्णात् । ] वक्षसो हृदयात् । असृङ् मया पीतमित्यन्वयः । करजो नखः ॥ १ ॥ [कौरवराजस्य पुत्राः कौरवाश्च ते राजपुत्रा वा त एव महावनं तस्योत्पातमारुतः प्रभञ्जनः । मारुतिर्भीमः । सरसी सरः तस्याः सरोजानां कमलानां विलोलनं विलोडनं परिमलनमित्यर्थः । तेन सुरभिश्चासौ शीतलश्च यो मातरिश्वा तेन संवाहिताश्चालिताः सान्द्राः किसलया यस्य । ] संवाहितो मिलितः । न्यग्रोधो बहुपाद्वटः इत्यमरः । अयाचिततालवृन्तं स्वयमुपस्थितव्यजनम् । हरिचन्दनं चन्दनभेदः [ तस्य च्छटावच्छीतलेन । दशा मूर्च्छावस्था तस्याः परिणामः परिवर्तः । निवर्तनमिति यावत् । तस्य योग्येन । ] परिणामो विपाकः । [ अनि-

---

१ पाण्डव. २ साक्षिणः ३ च तथा; मृषतः (टी. ). ४ कथमासन्न. ५ एषः; एवासौ. ६ कौरववनोत्पातमारुतः. ७ दूरमपसारयिष्यामि. ८ उचितेयं विश्रामभूमिः. ९ अत्रस्थोऽयं मयोपवीजिततालवृन्तेन; अत्रस्थश्चायमयत्नोपवीजिततालवृन्तेन. १० सरसीसमीरणेन च विगतक्लमः. ११ अस्मात्प्राक् ( ऊर्ध्वमवलोक्य । ) इत्यधिकं क्वचित् ।

निवारित एव प्रवेक्ष्यति छायाम्। ( इति प्रवेशं रूपयित्वा । ) कः कोऽत्र भोः । ( समन्तादवलोक्य । ) कथं न कश्चिदत्र परिजनः । नूनं तथाविधस्य वृकोदरस्य दर्शनादेवंविधस्य च स्वामिनस्त्रासेन शिबिरसंनिवेशमेव प्रविष्टः । कष्टं भोः कष्टम् ।

दत्त्वा द्रोणेन पार्थादभयमपि न संरक्षितः सिन्धुराजः
क्रूरं दुःशासनेऽस्मिन्हरिण इव कृतं भीमसेनेन कर्म ।
दुःसाध्यामप्यरीणां लघुमिव समरे पूरयित्वा प्रतिज्ञां
नाहं मन्ये सकामं कुरुकुलविमुखं दैवमेतावतापि ॥ २ ॥

( राजानवमलोक्य । ) कथमद्यापि न चेतनां लभते महाराजः । भोः कष्टम् । ( निःश्वस्य । )

मदकलितकरेणुभज्यमाने
विपिन इव प्रकटैकशालशेषे ।
हतसकलकुमारके कुलेऽस्मि-
स्त्वमपि विधेरवलोकितः कटाक्षैः ॥ ३ ॥

ननु भो हतविधे भरतकुलविमुख ।

---

वारितः । अनिरुद्धः । ] प्रवेक्ष्यति प्रवेशं करिष्यति । छत्रमित्यादावानीयतामिति शेषः । दत्त्वेति । पार्थादभयं दत्त्वापि द्रोणेन सिन्धुराजो न रक्षित इत्यन्वयः । भीमसेनेन प्रतिज्ञां पूरयित्वा कर्म कृतमित्यन्वयः । समरे अरीणां दुःसाध्यां दुःखसाध्याम् [अपि प्रतिज्ञां लघुमिव पूरयित्वा कुरुकुलविमुखं दैवं एतावतापि सकामं न मन्ये इत्यन्वयः । ] तृणमिव कर्मातिशीघ्रं कृतमित्यर्थः । लघुम् इति पाठे प्रतिज्ञाविशेषणम् । वस्तुतो गुर्वीमपि लघ्वीमिवेत्यर्थः । एतावतापि दैवं कुरुकुलविमुखं नाहं मन्ये । अपि त्वपरमपि करिष्यतीति भावः । कुरुकुलनिधने इति पाठे कुरुकुलनाशे सकामं पूर्णमनोरथं दैवं नाहं मन्य इत्यर्थः ॥२॥ मदेति । मदेन मत्ततया कलितः संबद्धः करेणुर्हस्ती [ तेन भज्यमाने ] । प्रकटः स्फुटः एकः शालः शक्रुतरुर्वृक्षमात्रं वा शेषोऽवशेषो यत्र तस्मिन् । शालः शक्रुतरुर्मतः इति विश्वः । अनोकहः कुटः शालः इत्यमरः । हे राजंस्त्वमपि ॥ ३ ॥ आकाश इति । पात्रस्याल्पतया यत्र पात्रं नैव प्रवेश्यते । आकाशे कर्णं दत्त्वाकाशे लक्ष्यं बद्ध्वेति वोच्यते ॥ इति

---

१ कः कोऽत्र; कः कोऽत्र भोः । व्यजनं चामरं शीघ्रमुपनयतु । ( दिशोऽवलोक्य । ) कथं न कश्चिदत्र परिजनः । नूनं तथाविधस्य वृकोदरस्य दर्शनादेवंविधे सति स्वामिनि त्रासात् इ. एवंविधस्य विधेः परिणामाच्च स्वामिनः, त्रासेन इ. च पा. २ तथाभूतस्य, ३ द्रोणेनाकृष्य पार्थादभयमपि च न. ४ तृणमिव. ५ निधने. ६ स्वामी. ७ करीन्द्र. ८असि.

**अक्षतस्य गदापाणेरनारूढस्य संशयम् ।**
**एषापि भीमसेनस्य प्रतिज्ञा पूर्यते त्वया ॥ ४ ॥**

**दुर्योधनः**—( शनैरुपलब्धसंज्ञः ।) आः[2] शक्तिरस्ति दुरात्मनो वृकोदरहतकस्य मयि[3] जीवति दुर्योधने प्रतिज्ञां पूरयितुम् । वत्स दुःशासन न भेतव्यं न भेतव्यम् । अयमहमागतोऽस्मि । ननु[4] सूत प्रापय रथं तमेवोद्देशं यत्र वत्सो[5] मे दुःशासनः ।

**सूतः**—आयुष्मन्[6] अक्षमाः संप्रति वाहास्ते रथमुद्वोढुम् । ( अपवार्य ।) मनोरथं च ।

**दुर्योधनः**—( रथादवतीर्य सगर्वं साकूतं च । ) कृतं[7] स्यन्दनगमनकालातिपातेन ।

**सूतः**—( सवैलक्ष्यं सकरुणं च । ) मर्षयतु मर्षयत्वायुष्मान् ।

**दुर्योधनः**—धिक् सूत किं रथेन । केवलमरातिविमर्दसंघट्टसंचारी दुर्योधनः खल्वहम् । तद्गदामात्रसहायः समरभुवमवतरामि ।

**सूतः**—आयुष्मन् एवमेतत् । कः संदेहः ।

**दुर्योधनः**—यद्येवं किमेवं भाषसे । पश्य ।

**बालस्य मे प्रकृतिदुर्ललितस्य पापः**
**पापं[10] व्यवस्यति समक्षमुदायुधोऽसौ ।**
**अस्मिन्निवारयसि किं व्यवसायिनं मां**
**क्रोधो न नाम करुणा[11] न च तेऽस्ति लज्जा ॥ ५ ॥**

---

भरतः । **अक्षतस्येति** । [ संशयं दुर्योधनस्य गदायुद्धनैपुण्यात्कदाचिदात्मनः पराजयः स्यादिति शङ्काम् ] अनारूढस्य अगतस्य ॥४ ॥ स्वैरं मन्दं यथा स्यादेवं । वाहोऽश्वः । वाजिवाहार्वगन्धर्व इत्याद्यमरः । मनोरथं च । मनोरथमप्युद्वोढुमक्षमा इति शेषः । [ साकूतं साभिप्रायम् । अरातीनां विमर्दो नैरन्तर्येणावस्थानं तेन संघट्टो यस्य यथा संचरितुं शीलमस्य । ] **बालस्येति** । [ प्रकृतिदुर्ललितस्य स्वभावचपलस्य । ] पापं नाशरूपम् । नाम संभावनायाम् । क्रोधस्ते नास्ति । करुणापि न । लज्जापि न । इत्यन्वयः । करुणापि नेत्यत्र नकारस्यावृत्तिः । यद्वा क्रोधो न

---

१ स्वैरं सधीरम्. २ आः का शक्तिरस्ति दुरात्मनः पवनतनयस्य वृकोदरहतकस्य, वृकोदरस्य. ३ मयि जीवति गदापाणौ वत्सदुःशासनस्य छायामप्यतिक्रामितुम्. ४ एतन्नास्ति क्वचित्. ५ वत्सो दुःशासनस्तिष्ठति; वत्सं द्रक्ष्यामि इ. पाठौ. ६ महाराज, देव, अक्षमास्ते वाहाः संप्रति. ७ किम्. ८ देवः. ९ किमिति त्वमेवं. १० पास्यत्यसृग्जनसमक्षमुदायुधोऽसौ इ० पा. ११ करुणापि च ते न लज्जा.

**सूतः**—( सकरुणं पादयोर्निपत्य । ) एतद्विज्ञापयामि । आयुष्मन् सं[1]पूर्णप्रतिज्ञेन निवृत्तेन भवितव्यमिदानीं दुरात्मना वृकोदरहतकेन । अत एवं ब्रवीमि ।

**दुर्योधनः**—( सहसा भूमौ पतन् । ) हा वत्स दुःशासन हा मदाज्ञाविरोधितपाण्डव हा विक्रमैकरस हा मदङ्कदुर्ललित हा अरातिकुलगजघटामृगेन्द्र हा युवराज क्वासि । प्रयच्छ मे प्रतिवचनम् ।
( इति निःश्वस्य मोहमुपगतः । )

**सूतः**—राजन् समाश्वसिहि समाश्वसिहि ।

**दुर्योधनः**—( संज्ञां लब्ध्वा । निःश्वस्य । )

**मु[2]क्तो यथेष्टमुपभोगसुखेषु नैव**
**त्वं लालि[4]तोऽपि हि मया न वृथाग्रजेन ।**
**अस्यास्तु वत्स तव हेतुरहं विपत्ते-**
**र्यत्कारितोऽस्यविनयं न च रक्षितोसि ॥ ६ ॥**

( [3]इति पतति । )

**सूतः**—आयुष्मन् समाश्वसिहि समाश्वसिहि ।

**दुर्योधनः**—धिक्सूत किमनुष्ठितं भवता ।

**रक्षणीयेन सततं बा[5]लेनाज्ञानुवर्तिना ।**
**दुःशासनेन भ्रात्राहमुपहारेण रक्षितः ॥ ७ ॥**

**सूतः**—महाराज मर्मभेदिभिरि[6]षुतोमरशक्तिप्रासवर्षैर्महारथानाम[7]पहृतचेतनत्वान्नि[8]श्चेष्टः कृतो महाराज इत्यपहृतो मया रथः ।

**दुर्योधनः**—सूत विरूपं कृतवानसि ।

---

नापि करुणा इति पाठः ॥ ५ ॥ अरातीनां कुलं समूह एव गजघटा तस्याः सिंहः मुक्त इति । मुक्तो योजितः । हिरवधारणे । मया नैव त्वं न लालितो विलासं नीतः । कीदृशेन मया । वृथा [ निष्फलं लालनादिकर्माकरणादग्रे जायतेऽसौ तेन ] वृथाग्रजेन निष्फलज्येष्ठेन । [ यद्यस्मात्कारणात् ] ॥ ६ ॥ **रक्षणीयेनेति** । रक्षणीयेत रक्षणार्हेण । दुःशासनेनोपहारेण [ दुःशासनरूपोपदादानेनेत्यर्थः । ] रक्षितस्त्वयेति शेषः ॥ ७ ॥ [ महारथानां महारथकृतैः । मर्माणि भेत्तुं शीलं येषां तैः मर्मभेदिभिः । इषुतोमरादिवर्षैः । निश्चेष्टः प्रतीकाराक्षम इत्यर्थः । विरूपमयोग्यम् । ]

---

१ संपूर्णप्रतिज्ञेन भूतमिदानीं वृकोदरेण । यत एवं ब्रवीमि; संपूर्णमनोरथेन सत्यप्रतिज्ञेन भवितव्यमिदानीं वृकोदरेण इ० पा. २ युक्तः. ३ इति पुनः; इति मूर्च्छति. ४ लालनीयेन. ५ बालकेनानुवर्तिना. ६ असि. ७ अपहृत. ८ निश्चेतनः.

**तस्यैव पाण्डवपशोरनुजद्विषो मे**
**क्षोदैर्गदाशनिकृतैर्न विबोधितोऽस्मि ।**
**तामेव नाधिशयितो रुधिरार्द्रशय्यां**
**दौःशासनीं यदहमाशु वृकोदरो वा ॥ ८ ॥**

( निश्वस्य नभो विलोक्य । ) ननु भो हतविधे कृपाविरहित भरतकुल-विमुख

**अपि नाम भवेन्मृत्युर्न च हन्ता वृकोदरः ।**

**सूतः**—शान्तं पापं शान्तं पापम् । महाराज किमिदम् ।

**दुर्योधनः**—

**घातिताशेषबन्धोर्मे किं राज्येन जयेन वा ॥ ९ ॥**

( ततः प्रविशति शरप्रहारव्रणबद्धपट्टिकालंकृतकायः सुन्दरकः । )

**सुँन्दरकः**—(क) आर्या अपि नामास्मिन्नुद्देशे सारथिद्वितीयो दृष्टो युष्माभिर्महाराजदुर्योधनो न वेति । ( निरूप्य । ) कथं न कोऽपि मन्त्रयते । भवतु । एतेषां बद्धपरिकराणां पुरुषाणां समूहो दृश्यते ।

---

(क) अज्जा अवि णाम इमस्सिं उद्देसे सारहिदुईओ दिट्ठो तुम्हेहिं महाराअदुज्जोहणो ण वेत्ति कहं ण को वि मन्तेदि । होदु । एदाणं बद्धपरिअराणं पुरिसाणं समूहो दीसई । एत्थ गदुअ पुच्छिस्सम् । कहं एदे क्खु स्वसामिणो

---

तस्यैवेति । [ यद् यस्मात् मे अनुजं द्वेष्टीति अनुजद्विट् तस्य । पाण्डवेषु अनुचितकर्मत्वात्पशुरिव पाण्डवपशुः तस्य गदा एव अशनिः वज्रं गदाशनिस्तेन कृतैः क्षोदैः पेषणैः प्रहारैरिति यावत् । विबोधितोऽस्मि प्रत्याहृतचेतनोऽस्मि । दौःशासनीं दुःशासनसंबन्धिनीम् । तामेव शय्यां नाधिशयितोऽहं तत्रैव न शयितः । अधिशीङ्स्थासां कर्म इत्याधारे कर्म । वृकोदरो वा नाधिशयितस्तामेव शय्याम् । [तस्माद्विरूपं कृतवानसीति पूर्वेण सम्बन्धः ] ॥८॥ अपि नामेति । नाम संभावनायाम् । मृत्युरपि मे भवेन्न च वृकोदरो हन्ता भवेदिति प्रार्थनायां लिङ् । मरणं [ ममेष्टं किंतु न वृकोदरहस्तादिति भावः । ]॥ ९॥ व्रणेषु क्षतेषु बद्धा या पट्टिका पाटी इति प्रसिद्धा तयालंकृतकायः । आर्याः अपि नामेति प्रश्ने । अस्मिन्नुद्देशे प्रदेशे दृष्टो न हि वा । कथं वा प्रेक्ष्याधिकतरं रुदन्ति । तत्र खल्वेतेऽपि जानन्ति । भवतु । अन्यतो गत्वा पृच्छामि । एतेषां बद्धपरिमण्डलानां पुरुषाणां समूहो दृश्यते । भवतु । अत्र गत्वा

---

१ क्षोभैः ( टी. ). २ यद्धयेव; अयैव; ययेव, यच्चैव. ३ अय. ४ पातिता. ५ ततः प्रविशति सप्रहारः पुरुषः । इ. पा. ६ बन्ध...शरीरः. ७ पुरुषः. ८ महाराआ ९ योद्धपुरिसाणं. १० दीसइत्ति.

अत्र गत्वा प्रक्ष्यामि । ( परिक्रम्य विलोक्य च ) कथमेते खलु स्वस्वामिनो गाढप्रहारहतस्य घनसन्नाहजालदुर्भेद्यमुखैः कङ्कवदनैर्हृदयाच्छल्यान्युद्धरन्ति । तन्न खल्वेते जानन्ति । भवतु । अन्यतो विचेष्यामि । ( अग्रतोऽवलोक्य किंचित्परिक्रम्य । ) इमे खल्वपरे प्रभूततराः संगता वीरमनुष्या दृश्यन्ते । तदत्र गत्वा प्रक्ष्यामि । ( उपगम्य । ) हं हो जानीथ यूयं कस्मिन्नुद्देशे कुरुनाथो वर्तत इति । ( दृष्ट्वा । ) कथमेतेऽपि मां प्रेक्ष्याधिकतरं रुदन्ति । तन्न खल्वेतेऽपि जानन्ति । हा अतिकरुणं खल्वत्र वर्तते । एषा वीरमाता समरविनिहतं पुत्रकं श्रुत्वा रक्तांशुकनिवसनया समग्रभूषणया वध्वा सहानुम्रियते । ( सश्लाघम् । ) साधु वीरमातः साधु । अन्यास्मिन्नपि जन्मान्तरे अनिहतपुत्रका भविष्यासि । भवतु । अन्यतो विचेष्यामि । ( अन्यतो विलोक्य ) अयमपरो वहुप्रहारनिहतकायोऽकृतव्रणवन्ध एव योधसमूह इमं

---

गाढप्पहारहदस्स घणसण्णाहजालदुब्भेज्जमुहेहिं केङ्कवदणेहिं हिअआदो सल्लाइं उद्धरन्ति । ता ण क्खु एदे जाणन्ति । होदु । अण्णदो विचिणइस्सम् । इमे क्खु अवरे प्पहूददरा संगदा वीरमणुस्सा दीसन्ति । ता एत्थ गदुअ पुच्छिस्सम् । हंहो जाणह तुह्मे कस्सिं उद्देसे कुरुणाहो वट्टइत्ति । कहं एदे वि मं पेक्खिअ अहिअदरं रोअन्दि । ता ण हु एदे वि जाणन्ति । हा अदिकरुणं क्खु एत्थ वट्टइ । एसा वीलमादा समलविणिहदं पुत्तअं सुणिअ रत्तंसुअणिवसणाए समग्गभूषणाए वहूए सह अणुमरदि । साहु वीरमादे साहु । अण्णस्सिं वि जम्मन्तरे अपि हदपुत्तआ हुविस्ससि । होदु । अण्णदो विचिणइस्सम् । अअं अवरो वहुप्पहारणिहदकाओ

---

पृच्छामि । कथमेते खलु स्वामिनो गाढप्रहारहतस्य घनसन्नाहजालदुर्ग्राह्यमुखैः [घनः यः संनाहः कवचस्तस्य जालं तेन दुर्भेद्यं मुखं येषां तैः कङ्कवदनैः शस्त्रविशेषैः ।] एते वहुतराः संमिलिता वीरमनुष्या दृश्यन्ते । हा हा अतिकरुणं खल्वत्र वर्तते । कथमेषा वीरमाता समरविनिहतं पुत्रं प्रेक्ष्य रक्तांशुकयुगनेपथ्यया सर्वाङ्गभूषणया वध्वा सममनुम्रियते। अयि वीरमातः मा त्वमन्यस्मिन्नपि जन्मान्तरे विनिहतपुत्रका भविष्यसि । [अन्यत् जन्म जन्मान्तरं तस्मिन् । प्रस्तुतजन्मान्तरादपरस्मिन्नित्यर्थः ।] अयमपरो वहुतप्रहारव्रणितकायोऽकृतव्रणवन्ध एव योधसमूह इमं शून्यासनं तुरङ्गममुपालभ्य

---

१ कङ्कवत्तेहिं. २ संकलिदा वीरमाणुसा. ३ तुह्मे इति क्वचिन्नास्ति. ४ देक्खिअ. ५ दुक्करं. ६ पेक्खिदुं. ७अनुसरदि. ८अस्मादनन्तरं पुत्तो वि दे अखण्डिदयसो वीरो हुविस्सदि इत्यधिकं क्वचित् . ९ पुच्छिस्सम् . १० अवलोक्य.

शून्यासनं तुरङ्गमुपालभ्य रोदिति । नूनमेतेषामत्रैव स्वामी व्यापादितः । तन्न खल्वेतेऽपि जानन्ति । भवतु । अन्यतो गत्वा प्रक्ष्यामि । ( सर्वतो विलोक्य । ) कथं सर्व एवावस्थानुरूपं व्यसनमनुभवन्भागधेयविमुखतया पर्याकुलो जनः । तत्कमत्र प्रक्ष्यामि । कं वोपालप्स्ये । भवतु । स्वयमेवात्र विचेष्यामि । ( परिक्रम्य । ) भवतु दैवमिदानीमुपालप्स्ये । हंहो दैव एकादशानामक्षौहिणीनां नाथो ज्येष्ठो भ्रातृशतस्य भर्ता गाङ्गेयद्रोणाङ्गराजशल्यकृपकृतवर्माश्वत्थामप्रमुखस्य राजचक्रस्य सकलपृथ्वीमण्डलैकनाथो महाराजदुर्योधनोऽप्यन्विष्यते । अन्विष्यमाणोऽपि न ज्ञायते कस्मिन्नुद्देशे वर्तत इति । ( विचिन्त्य निःश्वस्य च । ) अथ वा किमत्र दैवमुपालभे । तस्य खल्विदं निर्भर्त्सितविदुरवचनबीजस्यावधीरितपितामहहितोपदेशाङ्कुरस्य शकुनिप्रोत्सा-

---

आकिदव्वणप्पंडिआरो एव्व जोहसमूहो इमं सुण्णासणं तुलङ्गमं उवालहिअ रोइदि । णूणं एदाणं एत्थ एव्व सामी वावादिदो । ता ण हू एदे वि जाणन्दि । होदु । अण्णदो गदुअ पुच्छिस्सम् । कहं सव्वो एव्व अवत्थाणुरूवं व्वसणं अणुभवन्तो भाअधेअविमुंखदाए पज्जाउलो जणो । ता कं एत्थं पुच्छिस्सम् । कं वा उवालहिस्सम् । होदु । सअं एव्व एत्थ विचिणइस्सम् । होदु । देव्वं दाणीं उवालहिस्सम् । हंहो देव्व एआदसाणं अक्खोहिणीणं णाहो जेट्ठो भादुसदस्स भत्ता गङ्गेअद्दोणङ्गराअसल्लकिवकिदवम्मअस्सत्थामप्पमुहस्स राअचक्कस्स सअलप्पुहवीमण्डलेक्कणाहो महाराजदुज्जोहणो वि अण्णेसीअदि । अण्णेसीअन्तो वि ण जाणीअदि कस्सिं उद्देसे वट्टइ त्ति । अह वा किं एत्थ देव्वं उवालहामि । तस्स क्खु एदं णिब्भच्छिअविउरवअणवीअस्स अवहीरिदपिदामहहिदोवदेसङ्कुरस्स सउणिप्पोच्छा-

---

[ निन्दित्वा ] रोदिति । नूनमेतेषां स्वामीह समरे हतः । तन्न खल्वप्येते जानन्ति । सर्व एव कालवस्थानुरूपमनुभवन्भागधेयविषमशीलतया बाष्पपर्याकुलो जनो दृश्यते । [ अवस्थानुरूपं स्वस्वावस्थासदृशम् । ] तात्किमिदानीमत्र पृच्छामि । कं वोपालभे । भवतु । दैवमुपालभे । [ अक्षौ०—अक्षौहिण्याः प्रमाणं तु खागाष्टैकद्विकैः ( २१८७० । गजैः । रथैरेतैर्हयैस्त्रिघ्नैः पञ्चघ्नैश्च पदातिभिः ॥ ] यतस्तस्य खल्वेतादिति [ निर्भर्त्सितं तिरस्कृतं यद्विदुरवाक्यं तत् । विदुरवाक्यनिर्भर्त्सनमित्यर्थः । बीजं यस्य तथोक्तस्य । अविधीरितः पितामहस्य हितः उपदेश एवाङ्कुरो यस्य तस्य ।

---

१ विमृश्य. २ बन्धा. ३ विसमसीलदाए. ४ दाणीं एत्थ. ५ ण जाणे कस्सिं उद्देसे सो वट्टइ त्ति. ६ परिभूद. ७ सउणिहदअ.

हनादिविरूढमूलस्य जतुगृहद्यूतविषशाखिनः संभूतचिरकालसंबद्ध-वैरालवालस्य पाञ्चालीकेशग्रहणकुसुमस्य फलं परिणमति । (अन्यतो विलोक्य ।) यथात्रैष विविधरत्नप्रभासंवलितसूर्यकिरणप्रसूतशक्रचाप-सहस्रसंपूरितदशदिशामुखो लूनकेतुवंशो रथो दृश्यते तथाहं तर्क-याम्यवश्यमेतेन महाराजदुर्योधनस्य विश्रामोद्देशेन भवितव्यमिति । यावन्निरूपयामि । (उपगम्य दृष्ट्वा निश्वस्य च ।) कथमेकादशानाम-क्षौहिणीनां नायको भूत्वा महाराजो दुर्योधनः प्राकृतपुरुष इवा-श्लाघनीयायां भूमावुपविष्टस्तिष्ठति । अथ वा तस्य खल्विदं पाञ्चाली-केशग्रहकुसुमस्य फलं परिणमति ।

(उपसृत्य सूतं संज्ञया पृच्छति ।)

---

हणादिविरूढमूलस्स जदुगेहजूदे[1]विससाहिणो संभूदचिरआलसंबद्धवेरालवालस्स । पञ्चालीकेसग्गहणकुसुमस्स फलं परिणमदि । जहा एत्थ एसो विविहरअणप्पहासंवलिदसूरकिरणप्पसूदसक्कचावसहस्ससंपूरिददसदिसामुहो[3] लूणकेदुवंसो रहो दीसइ ता अहं[2] तक्केमि अवस्सं एदिणा महाराअदुज्जोहणस्स विस्सामुद्देसेण होदव्वम् । याव निरूपेमि । कधं एआदहाणं अक्खोहिणीणं णाअको भविअ महाराओ दुज्जोहणो पइदपुरिसो विअ असलाहणीए भूमिए उवविट्ठो चिट्ठदि । अध वा तस्स क्खु एदं पञ्चालीकेसग्गहकुमुमस्स फलं परिणमदि ।

---

जतुनः गृहं जतुगृहं च द्यूतं च विषं भीमाय विषदानं चैव शाखा विद्यन्ते अस्य तस्य । संभूतं च तच्चिरकालं संवद्धं यद्वैरं तदेवालवालं जलावापप्रदेशो यस्य । ] संभूतस्य । ...अम्मो यथा चैष विविधरत्नप्रभाभास्वरसंगलितसूराकिरण...[विविधानां रत्नानां प्रभा विविधा वा रत्नप्रभाः ताभिः संवलिता मिश्रिता ये सूर्यकिरणास्तैः प्रसूतं शक्रचापसहस्रं तेन संपूरितानि दशानां दिशां मुखानि येन सः ।]दिङ्मुखो...तथा तर्कयामि...रथोद्देशेन भवितव्यम् । भवतु । उपसर्पामि । कथमेष देव एकाद-शानामक्षौहिणीनां नाथो महाराजदुर्योधनोऽश्लाघनीयः प्राकृतपुरुष इव भूमावुप-विष्टस्तिष्ठति । नूनं तस्य खल्वेतत्पाञ्चालीकेशग्रहकुसुमस्य फलं परिणमति । अत्र परिमण्डलं मण्डली । कङ्कवदनं संदंशिका । रणबन्धः इति पाठे रणबन्धः संग्रा-मानुबन्धः । नेपथ्यं प्रसाधनम् । नेपथ्यं प्रतिकर्म प्रसाधनम् इत्यमरः । वध्वा पुत्रवध्वा । भागधेयं भाग्यम् । भागरूपनामभ्यो धेयः इति धेयप्रत्ययः । शीलतया कालावस्थानुरूपमित्यन्वयः । विदुरो मन्त्री । पितामहो भीष्मः । आलवालं थलम् इति प्रसिद्धम् । अम्मो शब्दो देशी ज्ञातार्थो हर्षार्थो वा । भास्वरः परप्रकाशकः । संगलितः संवद्धो यः सूराकिरण आदित्यतेजः । उत्तमरत्नतेजोभिरिन्द्रधनुरारभ्यत इति रत्नपरीक्षा । उद्देशः प्रदेशः । प्राकृतः पामरः । स्वागतं कुशलम् । सारथे कुतः

---

१ कूडविससाहिणो इति दशरूपके पाठः. २ ग्गह. ३ दिसाभोओ (दिशाभोगः).

**सूतः**—( दृष्ट्वा[१] ) अये कथं सङ्ग्रामात्सुन्दरकः प्राप्तः ।

**सुन्दरकः**—( उपगम्य । ) जयतु जयतु महाराजः । ( क )

**दुर्योधनः**—( विलोक्य । ) अये सुन्दरकः । सुन्दरक कच्चित्कुशलमङ्गराजस्य ।

**सुन्दरकः**—देव कुशलं शरीरमात्रेण । ( ख )

**दुर्योधनः**—( ससंभ्रमम् ) सुन्दरक किं किरीटिनास्य निहता धौरेया हतः सारथिर्भग्नो वा रथः ।

**सुन्दरकः**—देव न भग्नो रथः । अस्य मनोरथोऽपि । ( ग )

**दुर्योधनः**—( सरोषम् ) किमविस्पष्टकथितैराकुलमपि पर्याकुलयसि मे हृदयम् । तदशेषतो विस्पष्टं कथ्यताम् ।

**सुन्दरकः**—यद्देव आज्ञापयति । अये देवस्य मुकुटमणिप्रभावेणापनीता मे रणप्रहारवेदना । ( इति साटोपं परिक्रम्य । ) शृणोतु देवः । अस्तीदानीं कुमारदुःशासनवध—( इत्यर्धोक्ते मुखमाच्छाद्य शङ्कां नाटयति । ) ( घ )

**सूतः**—सुन्दरक कथय । कथितमेव दैवेन ।

**दुर्योधनः**—कथ्यताम् । श्रुतमस्माभिः ।

---

( क ) जअदु जअदु महाराओ । ( ख ) देव कुसलं सरीरमेत्तेण ।

( ग ) देव ण भग्गो रहो । से मणोरहो वि ।

( घ ) जं देवो आणवेदि । अए देवस्स मउडमणिप्पहावेण अवणीदा मे रणप्पहारवेअणा । सुणादु देवो । अत्थि दाणीं कुमालदुस्सासणवह—

---

स्वागतं निवेदय ममागमनं देवस्य । जयति देवः । कच्चित्कामप्रवेदने इत्यमरः । तेन कथयेत्यर्थः । देव कुशलं स्वामिनः शरीरमात्रकेणैव । धौरेया अश्वाः । धुरं वहन्तीत्यर्थे । धुरो यड्ढकौ इति ढकि धौरेय इति साधु ॥ देव न हि रथो भग्नोऽस्यास्माकं स्वामिनो मनोरथः । [ कथितैः कथनैः नपुंसके भावे क्तः । मुखमाच्छाद्य अप्रियकथनजातलज्जावशादिति भावः ।] यद्देव आज्ञापयति । अपनीय दूरीकृत्य । दिष्टया महाराजस्य मुकुटमहामणिप्रभावेणापगता मे बाणव्रणवेदना । शृणोतु देवः शृणोतु सारथिश्च । श्रुतः स्वामिना दुःशासनवधः । अथ किं स्वीक्रियार्थकमिति भरतः ।

---

१ याव ( ९० पृष्ठ ) इत्यारभ्य अये कथं सङ्ग्रामात्सुन्दरकः प्राप्तः इत्यन्तो ग्रन्थः केषुचित्पुस्तकेषु नास्ति. २ किमेवमस्पष्ट०...पर्याकुलयसि मे मनः ३ तदलं संभ्रमेण । अशेषतो० ४ मुखमावृणोति. ५ सरीरमेत्तकेण. ६ भग्गो रहो किं तु अह्माणं सअलर. अचक्कस्स मणोरहो ।

**सुन्दरकः**—शृणोतु देवः। अद्य तावत्कुमारदुःशासनवधामर्षितेन स्वामिनाङ्गराजेन कुटिलभ्रुकुटीभङ्गभीषणनिटिलपट्टेनाविज्ञातसंधानमोक्षशिलीमुखसंघातवर्षिणा अभियुक्तः स दुराचारो मध्यमपाण्डवो भीमसेनहतकः। (क)

**उभौ**—ततस्ततः।

**सुन्दरकः**—ततो देव उभयबलमिलद्दीप्यमानकरितुरगपदातिसमुद्भूतधूलिनिकरेण पर्यस्तगजघटासंघातेन च विस्तीर्यमाणेनान्धकारेणान्धीकृतमुभयबलम्। न खलु गगनतलं लक्ष्यते। (ख)

**उभौ**—ततस्ततः।

**सुन्दरकः**—ततो देव दूराकृष्टधनुर्गुणाच्छोटनटङ्कारेण गम्भीरभीषणेन ज्ञायते गर्जितं प्रलयजलधरेणेति। (ग)

**दुर्योधनः**—ततस्ततः।

---

(क) सुणादु देवो। अज्ज दाव कुमालदुस्सासणवहामारिसिदेण सामिणा अङ्गराएण कुडिलभिउडीभङ्गभीसणनिडलवट्टेण अविण्णादसंधाणमोक्खसिलीमुहसंघादवरिसिणा अभिजुत्तो सो दुराआरो मज्झमपण्डवो भीमसेणहतओ।

(ख) तदो देव उहअबलमिलन्तदीप्पन्तकरितुरअपदादिसमुब्भूदधूलिणिअरेण पल्लत्थगअघडासंघादेण अ वित्थरन्तेण अन्धआरेण अन्धीकिदं उहअबलम्। ण हु गगणतलं लक्खीअदि। (ग) तदो देव दूराकट्टिअधणुग्गुणाच्छोडणटङ्कारेण गम्भीरभीसणेण जाणीअदि गज्जिदं पलअजलहरेण त्ति।

---

कृतकुटिलभ्रुकुटीभङ्गभीषणेन ललाटपट्टेनाविज्ञातसंधानतीक्ष्णमोक्षनिक्षिप्तशरसंपातवर्षिणाभियुक्तोऽसौ दुराचारः दुःशासनवैरी। अत्र संपात आसारः। दुराचारेत्यत्र द्वन्द्वसमासः। [दुःशासनवधेन अमर्षितः तेन। अमर्षः क्रोधः अस्य संजातः असौ अमर्षितः। तारकादित्वादितच्। कृतः यः कुटिल भ्रुकुट्याः भङ्गस्तेन भीषणः निटिलपट्टः यस्य तेन। न विज्ञातौ अविज्ञातौ सन्धानमोक्षौ येषां ते तथोक्ताःशिलीमुखा बाणास्तेषां संघातं वर्षतीति तेन।] ०पदातिपदसमुद्भूतबहलधूली० ०तेनोत्थितेन घनान्धकारेणान्धी०। प्रनष्टं गगनाङ्गनम्। कुत्रापि किमपि न दृश्यते। [दूराकृष्टधनुर्गुणस्य यदाच्छोटनं तेन यः टंकारस्तेन।] गभीरभीषणेन नभस्तलापूरिणा०।

---

१ सुं०–(स्वगतम्।) कधं दुस्सासणवहो सुदो देवेण। (प्रकाशम्।) सुणादु. २कुमाल इति क्वचिन्नास्ति. ३ किदकुडिलललाडवट्टेण. ४ मोक्खण; संधाणतीक्खमोक्खणिक्खित्तसरधारावरिसिणा...दुराआरो दुःसासणवेरिओ पाण्डवो०. ५ दीप्पन्त इति क्वचिन्नास्ति ६ णिवहेण. ७ पल्लत्थतत्तद्दअघडा–; पसत्थ (प्रशस्त) गअ. ८ विअ. ९ ण भुवणतलं. १० आस्फालन (टी.). टङ्कारगम्भीरभीषणेनान्धआरेण; भअआरिणा अन्धआरेण.

**सुन्दरकः**—ततो देव द्वयोरपि तयोरन्योन्यसिंहनादगर्जितपिशुनं विविधपरिमुक्तप्रहरणाहतकवचसंगलितज्वलनविद्युच्छटाभासुरं गम्भीरस्तनितचापजलधरं प्रसरच्छरधारासहस्रवर्षि जातं समरदुर्दिनम्। (क)

**दुर्योधनः**—ततस्ततः।

**सुन्दरकः**—ततश्च देव एतस्मिन्नन्तरे ज्येष्ठस्य भ्रातुः पराभवशङ्किना धनंजयेन वज्रनिर्घातनिर्घोषविषमरसितध्वजाग्रस्थितमहावानरः तुरङ्गमसंवाहनव्यापृतवासुदेवशङ्खचक्रासिगदालाञ्छितचतुर्बाहुदण्डदुर्दर्शन आपूरितपाञ्चजन्यदेवदत्तताररसितप्रतिरवभरितदशदिशामुखकुहरो धावितस्तमुद्देशं रथवरः। (ख)

---

(क) तदो देव दोह्णिं वि ताणं अण्णोण्णसिंहणादगज्जिदपिसुणं विविहपरिमुक्कप्पहरणाहदकवअसंगलिदजलणविज्जुच्छडाभासुरं गम्भीरत्थणिअचापजलहरं प्पसरन्तसरधारासहस्सवरिसं जादं समरदुद्दिणम्।

(ख) तदो अ देव एदस्सिं अन्तरे जेट्ठस्स भादुणो पराभवसङ्किणा धणंजएण वज्जणिग्घादणिग्घोसविसमरसिदधअग्गट्ठिदमहावाणरो तुरङ्गमसंवाहणवावि

---

...पिशुनानां विविधप्ररूढप्रहरणा...भास्वरं ०जलधरं जातं तत्समर०। [अन्योन्यस्य सिंहनाद एव गर्जितं तत्पिशुनं यस्य। पिशुनौ खलसूचकौ इत्यमरः। विविधं विविधानि वा परिमुक्तानि प्रहरणानि तैराहतं यत्कवचं तस्मात्संगलितः स्फुरितो यो ज्वलनः स एव विद्युच्छटा तया भासुरम्। गम्भीरं स्तनितं गर्जितं यस्यासौ चाप एव जलधरः यस्मिन्। प्रसरन्तः शरा एव धारास्तासां सहस्राणि वर्षितुं शीलं यस्य तत्तथोक्तम्। धारासंपात आसारः। मेघच्छन्नेऽह्नि दुर्दिनम्। इति चामरः।]परिभवशङ्किना ध्वजयष्टिस्थित...प्रतिरवोद्भरितदशदिङ्मुखकुहरःप्रापितस्तमेवोद्देशं धनंजयस्यैव रथवरः। अत्र वज्रस्य निर्घातवद्य उद्घोषः [यद्वा वज्रस्य निर्घातस्य अन्तरिक्षे वायुनाभिहतस्य वायोश्च यः निर्घोषः]उच्चैःशब्दस्तद्वद्विषमं रसितं यस्य स तथा।[ध्वजाग्रस्थितःमहावानरो यस्य। तुरङ्गमाणां संवाहने व्यापृतः वासुदेवःतस्य शंखश्च चक्रं च असिश्च गदा च ताभिः लांछिता ये चत्वारः बाहुदण्डास्तैर्दुर्दर्शनः दुष्प्रेक्ष्यः। आपूरितौ यौ पाञ्चजन्यदेवदत्तौ तयोस्ताररसितस्य यः प्रतिरवस्तेन भरितानि दशदिशामुखकुहराणि येन स तथा।] शङ्खो लक्ष्मीपतेः पाञ्चजन्यः इत्यमरः।

---

१ तदो अ देव. २ संजलिदजलणाविज्जुअं (विज्जुल्लअं) बहललुहिलिरन्दुखज्जोअभासुरं जलहरप्पसरिदसरधारासहस्सवरिसंदुद्दसणं संभूदं. ३ णिग्घोसो विसमरासिदहरसिदहओ; णिग्घोसविसमरासिदहरसिदहओ, णिग्घोसविसमरसिदहओ; सिहराटिदवाणरो. ४ तुरङ्गमधारणवावारिद–

**दुर्योधनः**—ततस्ततः ।

**सुन्दरकः**—ततो भीमसेनधनंजयाभ्यामभियुक्तं पितरं प्रेक्ष्य ससंभ्रमं विगलितमवधूय रत्नशीर्षकमाकर्णाकृष्टकठिनकोदण्डजीवः दक्षिणहस्तोत्क्षिप्तशरपुङ्खविघट्टनत्वरितसारथिस्तं देशमुपगतः कुमारवृषसेनः । (क)

**दुर्योधनः**—(सावष्टम्भम् ।) ततस्ततः ।

**सुन्दरकः**—ततश्च देव तेनागच्छतैव कुमारवृषसेनेन विदलितासिलताश्यामलस्निग्धपुङ्खैः कठिनकङ्कपत्रैः कृष्णवर्णैः शाणशिलानिशितश्यामलशल्यबन्धैः कुसुमित इव तरुर्मुहूर्तेन शिलीमुखैः प्रच्छादितो धनंजयस्य रथवरः । (ख)

**उभौ**—(सहर्षम् ।) ततस्ततः ।

---

दवासुदेवसङ्खचक्कासिगदालञ्छिदचउव्बाहुदण्डदुद्दंसणो आपूरिअपञ्चजण्णदेअदत्ततारसिद्दप्पडिरवभरिददसादिसामुहकुहरो धाविदो तं उद्देसं रहवरो ।

(क) तदो भीमसेणधणंजएहिं अभिजुत्तं पिदरं पेक्खिअ ससंभमं विअलिअं अवधूणिअ रअणसीसअं आकण्णाकड्ढिदकठिणकोदण्डजीओ दाहिणहत्तुक्खित्तसरपुंखविघट्टणतुवराइदसारहीओ तं देसं उवगदो कुमालविससेणो ।

(ख) तदो अ देव तेण आअच्छन्तेण एव्व कुमालविससेणेन विदलिदासिलदासामलसिणिद्धपुङ्खेहिं कठिणकङ्कवत्तेहिं किसणवण्णेहिं साणसिलाणिसिदसामलसल्लबन्धेहिं कुसुमिदो विअ तरू मुहुत्तएण सिलीमुहेहिं पच्छादिदो धणंजअस्स रहवरो

---

देवदत्तोऽर्जुनशङ्खः । तार उच्चः । भरितेति तारकादित्वादितच् । [रत्नशीर्षकं रत्नमयशिरस्त्राणम् । आकर्णमाकृष्टा कठिनस्य कोदण्डस्य जीवा येन । दक्षिणहस्तेन उत्क्षिप्ता ये शरास्तेषां पुंखैः यद्विघट्टनं तेन त्वरितः सारथिर्यस्य तथाभूतः । ] ससंभ्रमामुक्तविगलितमवधूय...अत्रामुक्तः परिहितः । शीर्षकं टोप्पर इति ख्यातम् । शीर्षकम् । शीर्षण्यं च शिरस्त्रे इत्यमरः । जीवा पतञ्चिका । [विदलिता विपाटिता या असिलता तद्वच्छ्यामलाः स्निग्धाश्च पुंखा येषां तैः । कठिनानि कंकस्य कंकस्येव च पत्राणि पंखा येषां तैः। शाणशिलायां निकषपाषाणे निशिताः श्यामलाः शल्यबन्धा येषां तैः । शिलीमुखैः बाणैः भ्रमरैश्च ।] ततो देव स्वागतेनैव कुमारवृषसेनेन महदाश्चर्यं कृतम् । वैडूर्यशिलाश्यामलसुस्निग्धशल्यबन्धैः कठिनकङ्कपक्षकृष्णाननैः शिलानिशितमांसलोज्ज्वलैर्यथा कुसुमितस्तरुवरः शिलीमुखैस्तथा प्रच्छादितो धनंजयस्य रथवरः । अत्र वैडूर्यशिला मणिविशेषः । शल्यबन्धो बाणभेदः । कङ्कः कङ्कारी इति प्रसिद्धः

---

१ गदासिलञ्छिदचडुलचउव्बाहुदण्डदुद्दंसणो. २ कोदण्डमण्डलो. ३ हत्थविक्खित्तसरपुङ्खबंधनो विघट्टण०. ४ विदलिदासिहासामल. साणेति क्वचिन्नास्ति.

**सुन्दरकः**—ततो देव तीक्ष्णविक्षिप्तनिशितभल्लबाणवर्षिणा धनंजयेनेषद्विहस्य भणितम्—अरे रे वृषसेन पितुरपि तावत्ते न युक्तं मम कुपितस्याभिमुखं स्थातुम् । किं पुनर्भवतो बालस्य । तद्गच्छ । अपरैः कुमारैः सहायुध्यस्वेति । एवं वाचं निशम्य गुरुजनाधिक्षेपेणोद्दीपितकोपोपरक्तमुखमण्डलविजृम्भितभ्रुकुटीभङ्गभीषणेन चापधारिणा कुमारवृषसेनेनापि मर्मभेदकैः परुषविषमैः श्रुतिपथकृतप्रणयैर्निर्भर्त्सितो गाण्डीवी बाणैर्न पुनर्दुष्टवचनैः । ( क )

**दुर्योधनः**—साधु वृषसेन साधु । सुन्दरक ततस्ततः ।

**सुन्दरकः**—ततो देव निशितशराभिघातवेदनोपजातमन्युना किरीटिना चण्डगाण्डीवजीवाशब्दनिर्जितवज्रनिर्घातघोषेण बाणनिपतनप्रतिषिद्धदर्शनप्रसरेण प्रस्तुतं शिक्षाबलानुरूपं किमप्याश्चर्यम् । ( ख )

---

( क ) तदो देव तिक्खविक्खित्तणिसिदभल्लबाणवरिसिणा धणंजएण ईसि विहसिअ भणिदम्—अरे रे विससेण पिदुणो वि दाव दे ण जुत्तं मह कुविदस्स अभिमुहं ठादुम् । किं उण भवदो बालस्स । ता गच्छ । अवरेहिं कुमारेहिं सह आओधेहित्ति एव्वं वाअं णिसमिअ गुरुअणाहिक्खेवेण उद्दीविअकोवोपरत्तमुहमण्डलविअम्भिअभिउडीभङ्गभीसणेण चावधारिणा कुमालविससेण वि मम्मभेदएहिं परुसविसमेहिं सुदिवहकिदप्पणएहिं[2] णिब्भच्छिदो गण्डीवी बाणेहिं ण उण दुव्वअणेहिं[3] ।

( ख ) तदो देव णिसिदसराभिघादवेअणोपजादमण्णुणा किरीटिणा चण्डगण्डी-

---

पक्षी । शिलायां यन्निशितं निघर्षणं तेन मांसलैः स्निग्धैरत एवोज्ज्वलितैः । शिलीमुखौ बाणभृङ्गौ इत्यमरः । [ तीक्ष्णं यथा तथा विक्षिप्ता ये निशिता भल्लसंज्ञा बाणास्तान् वर्षितुं शीलं यस्य तेन ।] तीक्ष्णमोक्षनिक्षिप्तनिशितशरसंपाताभिघातजातमन्युना धनंजयेन...परिकुपितस्य पुरतः स्थातुम् । तद्गच्छ रे गच्छ । अपरैः कुमारकैः सह गत्वायोधय इति । गुरुजनाधिक्षेपजनितकोपोरक्तमुखमण्डलभ्रुकुटीविजृम्भितनेपथ्यधारिणा कुमारवृषसेनेन मर्मभेदकैः सुतवधकृतप्रणयैर्निर्भर्त्सितो अत्र विजृम्भितं कृतम् । सुतवधेऽर्जुनसुतस्याभिमन्योर्वधे । निर्भर्त्सितो धर्षितः । [ गुरुजनस्य पितुः अधिक्षेपेण निन्दया उद्दीपितः कोपः तेनोपरक्तं यन्मुखमण्डलं तत्र विजृम्भितो यः भ्रुकुटीभङ्गस्तेन भीषणस्तेन । श्रुतिपथे कर्णमार्गे कृतः प्रणयः अनुरागः यैः । आकर्णमाकृष्य मुच्यमानैः बाणैः कर्णपथागामिभिश्च वचनैरिति भावः । निशितराभिघातैर्या वेदना पीडा तया उपजातो मन्युर्यस्य । चण्डं च तद्गाण्डीवं च तस्य जीवायाः शब्देन निर्जितः वज्रस्य निर्घोषस्य च ध्वनिः येन

---

१ एतत् क्वचिन्नास्ति. २ सुदवह–सुदिपध–किदप्पणएहिं. ३ दुव्वअणेहिं ४ गण्डीविणा.

**दुर्योधनः**—( साकूतम् । ) ततस्ततः ।

**सुन्दरकः**—ततश्च देव तत्तादृशं प्रेक्ष्य शत्रोः समरव्यापार-चतुरत्वमविभाविततूणीरमुखधनुर्गुणगमनागमनशरसंधानमोक्षचटुल-करतलेन कुमारवृषसेनेनापि सविशेषं प्रस्तुतं समरकर्म । ( क )

**दुर्योधनः**—ततस्ततः ।

**सुन्दरकः**—ततो देव अत्रान्तरे विमुक्तसमरव्यापारो मुहूर्तविश्र-मितवैरानुबन्धो द्वयोरपि कुरुराजपाण्डवबलयोः साधु कुमारवृषसेन साधु इति कृतकलकलो वीरलोकोऽवलोकयितुं प्रवृत्तः । ( ख )

**दुर्योधनः**—( सविस्मयम् । ) ततस्ततः ।

---

वजीआसद्दणिज्जिदवज्जणिग्घादघोसेण बाणणिपडणपडिसिद्धदंसणप्पसरेण पत्थुदं सिक्खाबलाणुरूवं किं वि अच्चरीअम् ।

( क ) तदो अ देव तं[1] तारिसं पेक्खिअ सत्तुणो सरव्वावारचउरत्तणं अविभाविअतूणीर[2]मुहधणुग्गुणगमणागमणसरसंघाणमोक्खचडुलकरअलेण कुमाल-विससेणेण वि सविसेसं पत्थुदं समलकम्म ।

( ख ) तदो देव एत्थ[3]न्तरे विमुक्कसमरव्वावारो मुहु[4]त्तविस्समिदवेराणुबन्धो दोणं वि कुरुरा[5]अपण्डवबलाणं साहु कुमालविससेण साहु त्ति किदकलअलो वीर-लोओ अवलोइदुं पउत्तो ।

---

तथा भूतेन । शिक्षाया बलस्य च अनुरूपम् ।] ०शराभिघातजातमन्युना विज्ञातबा-णनिपतनप्रतिषिद्धदर्शनप्रसरेण..। प्रस्तुतं कृतम् । शिक्षास्त्राभ्यासः। तीक्ष्णमोक्ष... प्रस्तुतः समरकर्मारम्भः । अत्राविभावितोऽप्रकाशितः । तूणीरं तोन इति ख्यातम् । चटुलं मनोज्ञं कुशलं वा ।[ अविभाविताान्यलक्षितानि यानि तुणीरमुख-धनुर्गुणयोः गमनागमनानि च शरसंधानं मोक्षश्च तेषु चटुलं मनोज्ञतया संचारि करतलं यस्य । ] प्रस्तुत आरब्धः । आरम्भः उपक्रमः । समरकर्मान्त इति पाठे समर एव कर्मान्तः कीमत इति प्रसिद्धः । [ मुहूर्तं विश्रमितः वैरस्यानुबन्धः वैरानुबन्धः विरोधानुवृत्तिर्येन स तथोक्तः ।] द्वयोरपि तयोः कुरुपाण्डवराज-

---

१ तं पेक्खिअ तस्स. २ तूणीमुहधणुग्गुणगमणासणसंधाण०—०गमणासणसरसंधाण०-गमणागमणबाण०. ३ परिसेसिदरणव्वावारेसु विमुक्कचिरणिव्वट्टिअवेराणुबन्धेसु कुरुराअ-पाण्डवबलेसु;-परिसेसिदरणव्वावारो विमुक्कचिरणिव्वट्टिअवेराणुबन्धो दोणं वि कुरुराअप-ण्डवबलेसु—साहु विससेण साहु त्ति कलअलमुहरो वीरलोओ आलोइदुं पउत्तो इ० पा०. ४ सुपरिच्चत्तचिरआलसंवट्टिदवेराणुबन्धो. ५ कुरुपण्डवाणं हि.

**सुन्दरकः**—ततश्च देव अवधीरितसकलधानुष्कचक्रपराक्रमशालिनः सुतस्य तथाविधेन समरकर्मारम्भेण हर्षरोषकरुणासंकटे वर्तमानस्य स्वामिनोऽङ्गराजस्य निपतिता शरपद्धतिर्भीमसेने बाष्पपर्याकुला दृष्टिः कुमारवृषसेने । (क)

**दुर्योधनः**—( सभयम् । ) ततस्ततः ।

**सुन्दरकः**-ततश्च देव उभयबलप्रवृत्तसाधुकारामर्षितेन शरवर्षप्रज्वलितेन गाण्डीविना तुरगेषु सारथावपि रथवरे धनुष्यपि जीवायामपि नरेन्द्रलाञ्छने सितातपत्रेऽपि च व्यापारितः समं शिलीमुखासारः । (ख)

**दुर्योधनः**—( सभयम् । ) ततस्ततः ।

**सुन्दरकः**—ततो देव विरथो लूनगुणकोदण्डः परिभ्रमणव्यापारमात्रप्रतिषिद्धशरसंपातो मण्डलैर्विचरितुं प्रवृत्तः कुमारः ! (ग)

---

(क) तदो अ देव अवहीरिदसअलधाणुक्कचक्कपराक्कमसालिणो सुदस्स तहाविहेण समलकम्मालम्भेण हरिसरोसकरुणासंकडे वट्टमाणस्स सामिणो अङ्गराअस्स णिवडिआ सरपद्धइ भीमसेणे वप्फपज्जाउला दिट्ठी कुमालविससेणे ।

(ख) तदो अ देव उभअबलप्पउत्तसाहुकारामरिसिदेण सरवरिसपज्जलिदेन गण्डीविणा तुरगेसु साराहिं पि रहवरे धणुं पि जीआइं पि णलिन्दलञ्छणे सिदादवत्ते वि अ व्वावारिदो समं सिलीमुहासारो ।

(ग) तदो देव विरहो लूणगुणकोदण्डो परिब्भमणव्वावारमेत्तप्पडिसिद्धसरसंपादो मण्डलेहिं विअरिदुं पउत्तो कुमालो ।

---

वलयोः । अत्र विश्रमित उपशान्तः । [ अवधीरितं तिरस्कृतं सकलधानुष्काणां चक्रं येन तादृशेन पराक्रमेण शालते शोभते असौ तस्य । तथाविधः समरकर्मण आरम्भस्तेन । संकटे मिश्रीभावे । ]... संकटे । अत्र धानुष्को धनुर्धरः । धनुःप्रहरणमस्येत्यर्थे ठक् [ तस्य इसुसुक्तान्तात् इति कः । ] सुतविक्रमदर्शनेन हर्षः । शत्रु-[पराक्रम]-दर्शनेन रोषः । बालस्य महाबलेन युद्धात्करुणमिति रसत्रयमत्र । पद्धतिः पंक्तिः । [ उभयाभ्यां बलाभ्यां विमुक्तः यः साधुकारः साधुवादः तेन अमर्षितः जातक्रोधः तेन । वृषसेनकृतशरवर्षेण प्रज्वलितेन दीप्तेन । जीवायां ज्यायाम् । 'मौर्वी जीवा गुणो गव्या' इति हैमः । ] अत्र लाञ्छने चिन्हे । सितातपत्रे श्वेतच्छत्रे । सममेकदैव । ततो कुमारवृषसेनः [ विनष्टो रथो यस्य स विरथः । लूनः गुणः कोदण्डं च यस्य स तथोक्तः । परिभ्रमणमव्यापार एव ०मात्रं तेन प्रतिषिद्धः निवारितः शरसंपातो येन । ] परिभ्रमणमात्रव्यापारो मण्डलाग्रेण विचरितुं प्रवृत्तः ।

---

१ राअधाणुक्क. २ करुणहरिसरोससंकडे; हरिसरोसकरुणासङ्कासंकडे ३ अणुवट्टमाणस्स ४ बाप्पआउला. ५ लिन्दकुल (टी). ६ व्वावारिदा समं सिलीमुहा. ७कोदण्डमेत्तपरि०; ब्भमणमेत्तव्वावारो मण्डलाग्गेण. कुमालविससेणो ( टी. ). ८ मण्डलाइं विचरइदुं.

**दुर्योधनः**—( साशङ्कम् ) ततस्ततः ।

**सुन्दरकः**—ततो देव सुतरथविध्वंसनामर्षोद्दीपितेन स्वामिनाङ्गराजेनागणितभीमसेनाभियोगेन परिमुक्तो धनंजयस्योपरि शिलीमुखासारः । कुमारोऽपि परिजनोपनीतमन्यं रथमारुह्य पुनरपि प्रवृत्तो धनंजयेन सहायोद्धुम् । ( क )

**उभौ**—साधु वृषसेन साधु । ततस्ततः ।

**सुन्दरकः**—ततो देव । भणितं च कुमारेण रे रे ताताधिक्षेपमुखर मध्यमपाण्डव मम शरास्तव शरीरमुज्झित्वान्यस्मिन्न निपतन्ति । इति भणित्वा शरसहस्रैः पाण्डवशरीरं प्रच्छाद्य सिंहनादेन गर्जितुं प्रवृत्तः । ( ख )

**दुर्योधनः**—( सविस्मयम् । ) अहो बालस्य पराक्रमो मुग्धस्वभावोऽपि । ततस्ततः ।

**सुन्दरकः**—ततश्च देव तं शरसंपातं समवधूय निशितशराभिघातजातमन्युना किरीटिना गृहीता रथोत्सङ्गात्क्वणत्कनककिङ्किणीजालझङ्कारविराविणी मेघोपरोधविमुक्तनभस्तलनिर्मला निशितश्यामलस्निग्धमुखी विविधरत्नप्रभाभासुरभीषणरमणीयदर्शना शक्तिः सोपहासं विमुक्ता च कुमाराभिमुखी । ( ग )

---

( क ) तदो देव सुदरहविद्धंसणामरिसुद्दीविदेण सामिणा अङ्गराएण अगणिअभीमसेणाभीजोएण पडिमुक्को धणंजअस्स उवरि सिलीमुहासारो । कुमालो वि परिजणोवणीदं अण्णं रहं आरुहिअ पुणोवि पउत्तो धणंजएण सह आओधेदुम् ।

( ख ) भणिदं च कुमालेण रे रे तादाहिक्खेवमुहल मज्झमपण्डव मह सरा तुह सरीरं उज्झिअ अण्णसिं ण णिवडन्ति । ति भणिअ सरसहस्सेहिं पण्डवसरीरं पच्छादिअ सिंहणादेण गज्जिदुं पउत्तो ।

( ग ) तदो अ देव तं सरसंपादं समवधूणीअ णिसिदसराभिघादजादमण्णुणा

---

अत्र मण्डलाग्रेण खड्गेन । कौक्षेयको मण्डलाग्रः करवालः कृपाणवत् इत्यमरः । सुतरथविध्वंसनामर्षितेन । [ अगणितः भीमसेनस्य अभियोगः येन । ] भणितं च कुमारवृषसेनेन—अरे रे तताधिक्षेपकारक मुखरमध्यमपाण्डव न मम शरासारास्तव शरीरमुज्झित्वान्यस्मिन्निपतन्ति इति भणित्वा शरशतसहस्रैः पाण्डवशरीरं प्रच्छाद्य सिंहनादं विचरितुं प्रवृत्तम् । अत्र प्रच्छाद्य व्याप्य । विचरितुं कर्तुम् । प्रवृत्तं वृषसेनेनेति शेषः । [ निशिताश्च ते शराश्च तेषामभिघातस्तेन

---

१ मुग्धस्वभावस्यापि; मुग्धस्वभावेऽपि. २ पल्लत्थो. ४ कुमालविससेणो. ४ धणंजआभिजोए. ५ वज्जिअ. ६ भणन्तेण सरसहस्सेहिं पण्डवसरीरं पच्छादिदं कुमालेण । इति क्वचित्पाठः. ७ तस्स सरसहस्ससंपादे. ८ इदं क्वचिन्नास्ति.

**दुर्योधनः**—( सविषादम् । ) अहह । ततस्ततः ।

**सुन्दरकः**—ततश्च देव प्रज्वलन्तीं शक्तिं प्रेक्ष्य विगलितमङ्गराजस्य हस्तात्सशरं धनुर्हृदयाद्वीरसुलभ उत्साहो नयनाद्बाष्पसलिलं वदनाद्रसितम् । हसितं च धनंजयेन सिंहनादं विनादितं वृकोदरेण दुष्करं दुष्करमित्याक्रन्दितं कुरुबलेन । ( क )

**दुर्योधनः**—( सविषादम् । ) ततस्ततः ।

**सुन्दरकः**—ततो देव कुमारवृषसेनेनाकर्णकृष्टनिशितक्षुरप्रैश्चिरं निध्यायार्धपथ एव भागीरथीव भगवता विषमलोचनेन त्रिधा कृता शक्तिः । ( ख )

**दुर्योधनः**—साधु वृषसेन साधु । ततस्ततः ।

---

किरीटिणा गहिदा रहुच्छङ्गादो क्वणन्तकणअकिङ्किणीजालझङ्कारविराइणी मेहोवरोहविमुक्कणहत्थलणिम्मला णिसिदसामलसिणिद्धमुही विविहरअणप्पहारभासुर भीसणरमणिज्जदंसणा सत्ती सोवहासं विमुक्का अ कुमालाहिमुही ।

( क ) ततो अ देव पज्जलन्तीं सत्तिं पेक्खिअ विलसिअं अङ्गराअस्स हत्थादो सैसरं धणु हिअआदो वीरसुलहो उच्छाहो णअणादो बाप्पसलिलं वअणादो रसिदं । हसिदं अ धणंजएण सिंहणादं विणादिदं विओदलेण दुक्कलं दुक्कलं त्ति आक्कन्दिदं कुरुवलेण ।

( ख ) तदो देव कुमालविससेणेण आकण्णाकिट्ठणिसिदखुरप्पेहिं चिरं णिज्झाइअ अद्धपहे एव्व भाईरही विअ भवअदा विसमलोअणेण तिधा किदा सत्ती ।

---

जातः मन्युः क्रोधो यस्य तेन ] क्वणन्त्यो याः किङ्किण्यः क्षुद्रघण्टिकास्तासां जालानि तेषां झङ्कारैर्विरौतीति विराविणी । ] ०जालहुंकारराविणी महामेघोप० । [विविधरत्नानां प्रभाभिः भासुरा चासौ भीषणं रमणीयं च दर्शनं यस्याः तादृशी च ।] विविधरत्नप्रभाघटितशीर्षभीषणरमणीयदर्शना महाशक्तिर्विमुक्ता कुमाराभिमुखी । अत्र क्वणच्छब्दायमानम् । भीषणता विचित्ररूपतया । रमणीयता स्वभावादेव । तां तादृशीं प्रज्ज्वलन्तीं...। रसितं च सिंहनादं वृकोदरेण । दुःकरं दुःकरमिति कृत्वाक्रन्दितं कुरुबलेन । अत्र रसितं शब्दितम् । सिंहस्येव नादं यथा स्यात्तथा । कुमारेणाकर्णापूरितैर्निशितक्षुरप्रबाणैर्दूरं निर्ध्यायार्धपथ एवागच्छन्ती भागीरथी...। [क्षुरप्रैः शरविशेषैः । अर्धः पन्थाः अर्धपथस्तस्मिन् । निध्याय दृष्ट्वा । विषमलोचनेनेत्यत्र भारतं-तां दधार हरो राजन् गङ्गां गगनमेखलाम् ।...सा बभूव विसर्पन्ती त्रिधा राजन् समुद्रगा । वन० अ० १०९. ] अत्र निर्ध्याय विचिन्त्य । भागीरथी

---

१ अ धणंजएण...सुहं. २ सबाणं.

**सुन्दरकः**—ततश्च देव एतस्मिन्नन्तरे कृतकलकलमुखरेण वीर-लोकसाधुवादेनान्तरितः समरतूर्यरवः । सिद्धचारणगणविमुक्तकुसुम-प्रकरेण प्रच्छादितं समराङ्गणम् । (क)

**दुर्योधनः**—अहो बालस्य पराक्रमः । ततस्ततः ।

**सुन्दरकः**—ततश्च देव भणितं स्वामिनाङ्गराजेन—भो वृकोदर असमाप्तस्तव ममापि समरव्यापारः तदनुमन्यस्व मां मुहूर्तम् । प्रेक्षा-वहे तावद्वत्सस्य तव भ्रातुश्च धनुर्वेदशिक्षानिपुणत्वम् । तवाप्येत-त्प्रेक्षणीयम्—इति । (ख)

**दुर्योधनः**--ततस्ततः ।

**सुन्दरकः**—ततो देव विरतौ रणव्यापारनिर्बन्धान्मुहूर्तं प्रशमित-वैरौ द्वावपि प्रेक्षकौ जातौ भीमसेनाङ्गराजौ । (ग)

**दुर्योधनः**—( साभिप्रायम् । ) ततस्ततः ।

**सुन्दरकः**—ततश्च देवैतस्मिन्नन्तरे शक्तिखण्डनामर्षितेन गाण्डी-विना भणितम्—अरे रे दुर्योधनप्रमुखाः-(इत्यर्धोक्ते लज्जां नाटयति) (घ)

---

(क) तदो अ देव एदस्सिं अन्तरे किदकलकलमुहरेण वीरलोअसाहुवादेण अन्तरिदो समरतूररवो। सिद्धचालणगणविमुक्ककुसुमप्पअरेण पच्छादिदं समलाङ्गणम्।

(ख) तदो अ देव भणिअं सामिणा अङ्गराएण भो विकोदल असमत्तो तुह मह वि समलव्वावारो । ता अणुमण्ण मं मुहुत्तअम् । पेक्खामहे दाव वस्सस्स तुह भादुणो अ धणुव्वेदसिक्खानिउणत्तणम् । तुह वि एदं पेक्खणिज्जम् त्ति ।

(ग) ततो देव विरदाआ रणव्वावारणिव्वन्धादो मुहुत्तअं प्पसमिदवेरा दुवे वि पेक्खआ जादा भीमसेणाङ्गराआ ।

(घ) तदो अ देव एदस्सिं अन्तरे सत्तिखण्डणामरिसिदेण गण्डीविणा भणि-अम्--अरे रे दुज्जोहणप्पमुहा—

---

गङ्गा । विषमलोचनेन हरेण । गङ्गापि हरेण त्रिपथगा कृतेति भावः । कलमुखरेण [पाठान्तरे कृतः यः कलकलस्तेन मुखरो वृद्धिंगतः।] ०प्रमुक्तकुसुमप्रकरेण संच्छादितं समराङ्गणम् । भणितं च...तदनुमन्यस्व क्षणमात्रमेव । प्रेक्षावस्तावत्तव भ्रात्रा समं मम पुत्रस्य धनुर्वेदशिक्षाचतुरत्वम् । तवाप्येतत्प्रेक्षणीयम् इति । विश्रमित उपशान्तः।

---

१ भयं. २ णिग्घोसो (टी.) ३ विमुक्केण. ४ भो वीर. ५ अणुमण्णदु. ६ दाव क्खणमत्तं. ७ चउरत्तणम्. ८ त्ति । तदो विरदाआ इ० । ९ विस्सामिदाओधणव्वावारा मुहुत्तविस्स-मिदणिअवेराणुबन्धा (टी.); तदो विरामिदरणव्वावारा मुहुत्तविस्सामिदनिअवेरा । जादा मुहुत्तं दुव.

**दुर्योधनः**—सुन्दरक कथ्यताम् । परवैचनमेतत् ।

**सुन्दरकः**—शृणोतु देवः । अरे दुर्योधनप्रमुखाः कुरुबलसेनाप्रभवः अरे अविनयनौकर्णधार कर्ण युष्माभिर्मम परोक्षं बहुभिर्महारथैः परिवृत्यैकाकी मम पुत्रकोऽभिमन्युर्व्यापादितः । अहं पुनर्युष्माकं प्रेक्षमाणानामेवैतं कुमारवृषसेनं स्मर्तव्यशेषं करोमि । इति भणित्वा सगर्वमास्फालितमनेन वज्रनिर्घातनिर्घोषभीषणजीवारवं गाण्डीवम् । स्वामिनापि सज्जीकृतं कालपृष्ठम् । (क)

**दुर्योधनः**—( सावहित्थम् । ) ततस्ततः ।

**सुन्दरकः**—ततश्च देव प्रतिषिद्धभीमसेनसमरकर्मारम्भेण गाण्डीविना विरचिते अङ्गराजवृषसेनरथकूलंकषे द्वे बाणनद्यौ । ताभ्यामपि द्वाभ्यामन्योन्यस्नेहदर्शितशिक्षाविशेषाभ्यामभियुक्तः स दुराचारो मध्यमपाण्डवः । (ख)

(क) सुणादु देवो । अरे दुज्जोहणप्पमुहा कुरुबलसेणापहुणो अरे अविणअणोकण्णधार कण्ण तुम्हेहिं मह परोक्खं बहुहिं महारहेहिं पडिवारिअ एआई मम पुत्तओ अहिमण्णु व्वावादिदो । अहं उण तुह्माणं पेक्खन्ताणं एव्व एदं कुमालविससेणं सुमरिदव्वसेसं करोमि । त्ति भणिअ सगव्वं आप्फालिदं णेण वज्जणिग्घादणिग्घोसभीसणजीआरवं गण्डीवम् । सामिणा वि सज्जीकिदं कालपुट्ठम् ।

(ख) तदो अ देवे पडिसिद्धभीमसेणसमलकम्मालम्भेण गण्डीविना विरइदा अङ्गराअविससेणरहकूलंकसाओ दुवे बाणणदीओ । तेहिं वि दुवेहिं अण्णोण्णसिणेहदंसिदासिक्खाविसेसेहिं अभिजुत्तो सो दुरांआरो मज्झमपण्डवो ।

प्रेक्षको द्रष्टा । दुर्योधनप्रमुखाः कुरुयोधाः [ कर्णधारस्तु नाविकः । इत्यमरः । ] युष्माभिर्बहुभिर्महारथैर्मिलित्वा मया शून्ये मम पुत्रोभिमन्युर्बाल एकाकी व्यापादितः । अहं पुनर्युष्माकं प्रेक्षकाणामेवैतं कुमारं वृषसेनं स्मर्तव्यशेषं करोमि । तद्भ्रियतां भ्रियताम् । इत्यास्फालितं तेन वज्रनिर्घातोद्घोषगम्भीरभीषणजीवारवं गाण्डीवम् । अत्राविनय एव नौरिति रूपकम् । प्रेक्षकाणामित्यनादरे षष्ठी । तेन भवतः प्रेक्षकाननादृत्येत्यर्थः । स्मर्तव्यः स्मरणार्हः शेषोऽवसानं यस्य तम् । तथा च स्मरणमात्रावशिष्टमित्यर्थः । [ कालपृष्ठं कर्णस्य धनुः । राधासुतोर्कतनयः कालपृष्ठं तु तद्धनुः । इति हैमः । सावहित्थमित्यत्र अवहित्था आकारगोपनम् । अनुपलक्ष्यमाणहृद्गतभावमित्यर्थः । ] अन्योन्यदर्शित०...[ ०रथौ एव कूले कषतः इति । ] अत्र कूलं कषतीत्यर्थे रुर्वकूलाभ्रकरीषेषु कषः इति खच्प्रत्ययः । खित्यनव्ययस्य

१ परवचनमत्र को दोषः इ. पा. २ णईकण्णधार. ३ परोक्खं एआई पुत्तओ अहिमण्णु व्वावादिदो. ४ वज्जेति क्वचिन्नास्ति. ५ देव एदस्सिं अन्तरे. ६ सो दुराआरो इति क्वचिन्नास्ति.

**दुर्योधनः**—ततस्ततः ।

**सुन्दरकः**—ततश्च देव गाण्डीविनाताररसितजीवानिर्घोषमात्र-विज्ञातबाणवर्षेण तथाचरितं पत्रिभिर्यथा न नभस्तलं न स्वामी न रथो न धरणी न कुमारो न केतुवंशो न बलानि न सारथिर्न तुरङ्गमा न दिशो न वीरलोकश्च लक्ष्यते । (क)

**दुर्योधनः**—(सविस्मयम् ।) ततस्ततः ।

**सुन्दरकः**—ततश्च देव अतिक्रान्ते शरवर्षे क्षणमात्रमेव सहर्षसिंह-नादे पाण्डवसैन्ये सविषादमुक्ताक्रन्दे कौरवबले समुत्थितो महान्कल-कलो हा हतः कुमारवृषसेन इति । (ख)

**दुर्योधनः**—(सबाष्परोधम् ।) ततस्ततः ।

**सुन्दरकः**—ततो देव प्रेक्षे कुमारं हतसारथितुरङ्गं लूनातपत्र-चापचामरकेतुवंशं स्वर्गभ्रष्टमिव सुरकुमारमेकेनैव हृदयमर्मभेदिना शिलीमुखेन भिन्नदेहं रथमध्ये पर्यस्तम् । (ग)

---

(क) तदो अ देव गण्डीविना ताररसिदजीआणिग्घोसमेत्तविण्णादबाणवरिसेण तह आअरिदं पत्तिहिं जह ण णहत्तलं ण सामी ण रहो ण धरणी ण कुमालो ण केदुवंसो ण बलाइं ण सारही ण तुरङ्गमा ण दिसाओ ण वीरलोओ अ लक्खीअदि ।

(ख) तदो अ देव अदिक्कन्ते सरवरिसे क्खणमेत्तं एव सहरिससिंहणादे पण्डवसेण्णे सविसादमुक्काक्कन्दे कोरवबल समुत्थिदो महन्तो कलअलो हा हदो कुमालविससेणोत्ति ।

(ग) तदो देव पेक्खामि कुमालं हतसारहितुलङ्गं लूणादवत्तचावचामरकेदु-वंसं सग्गब्भट्ठंविअ सुलकुमालं एक्केण जेव हिअअम्ममभेदिणा सिलीमुहेण भिण्ण-देहं रहमज्झे पल्लत्थं ।

---

इति मुम् । [तारं रसिता निनादिता या जीवा गुणः तस्या निर्घोष एव निर्घोषमात्रं तेन विज्ञातो बाणवर्षो यस्य तेन । तारं यद् रसितं मेघध्वनिस्तद्वत् यः जीवायाः इ० वा] गाण्डीवताररसितमांसलनिर्घोषेणाविज्ञातबाणवर्षेण...न तेषां रथा...न खलु किमपि लक्ष्यते । पाण्डवबले विमुक्तसिंहनादे साक्रन्दे कौरवबले हा हतः कुमारो वृषसेनो हा हत इति महान्कलकल उत्थितः । ततो देव महत्या वेल्याहं प्रेक्ष्य हतसारथितुरङ्गमं लूनातपत्रकेतुवंशं स्वर्गपरिभ्रष्टमिव सुरकुमारकमेकेनैव मर्मभेदिना बाणेन भिन्नदेहं रथमध्ये परिस्थितं कुमारमागतः । अत्र केतुश्चिह्नम् ।

---

१ रोपम्. २गण्डीवताररसिदमंगलगोधाणिग्घोसदुव्विण्णादबाणवरिसेण. ३ संलक्खीअदि. ४ देव कुमालं हदसारहितुलङ्गं लूणादवत्तचामरकेदुवंसं...पल्लत्थं पेक्खिअ अहं आअदो; देव महन्तीए वेलाए-पेक्खामि कुमारं हदसारधिं इदतुरङ्गं लूणादवत्ताअं मम्मभेदिना सिलीमुहेण हिअए विभिण्णं रहोत्संगादो धराअले लुडितम्;-पेक्खिअ हद०...... लूणादवत्तकेतु०...मम्मभेदिना...परिट्ठिदं कुमालं आअदो । इ. पा.

**दुर्योधनः**—( सास्रम्। ) अहह कुमार[2] वृषसेन। अमलतः परं श्रुत्वा। हा वत्स हा मदङ्कदुर्ललित हा मदाज्ञाकर हा गदायुद्धप्रियशिष्य हा शौर्यसागर हा राधेयकुलप्ररोह हा प्रियदर्शन हा दुःशासननिर्विशेष हा सर्वगुरुवत्सल प्रयच्छ मे प्रतिवचनम्।

> **पर्याप्तनेत्रमचिरोदितचन्द्रकान्त-**
> **मुद्भिद्यमाननवयौवनरम्यशोभम्।**
> **प्राणा[3]पहारपरिवर्तितदृष्टि दृष्टं**
> **कर्णेन तत्कथमिवाननपङ्कजं ते॥ १०॥**

**सूतः**—आयुष्मन् अलमत्यन्त[4]दुःखावेगेन।

**दुर्योधनः**—सूत पुण्यवन्तो हि दुःखभाजो भवन्ति। अस्माकं पुनः

> **प्रत्य[5]क्षं हतबन्धूनामेतत्परिभवाग्निना।**
> **हृदयं दह्यतेऽत्य[6]र्थं कुतो दुःखं कुतो व्यथा॥ ११॥**

( इति मोहमुपगतः। )

**सूतः**—समाश्वासितु समाश्वासितु महाराजः। (इति पटान्तेन वीजयति।)

**दुर्योधनः**—( लब्धसंज्ञः। ) भद्र सुन्दरक [7]ततो वयस्येन किं प्रतिपन्नमङ्गराजेन।

---

कुमारं प्रेक्ष्याहमागत इत्यन्वयः [ मदङ्क एव दुष्टं ललितं यस्य। राधेयस्य कुलं तस्य प्ररोहो राधेयकुलस्य वर्धन इत्यर्थः। प्ररोहोऽङ्कुरः। **पर्याप्तेति**। पर्याप्तं तृप्तं यथेष्टं वा नेत्रं [ पूर्णमायतं वा ] यत्र तत्तथा। पर्याप्तं तु यथेष्टं स्यात्तृप्तौ शक्तिनिवारणे। इति विश्वः। अचिरोदितचन्द्रवत्कान्तं रम्यम्। उद्भिद्यमानमुद्गच्छत्। एतादृशमप्याननं तव प्राणापहारे विनाशे [ अपचार इति पाठे निर्गमे ] परिवर्तिता दृष्टिर्यत्र तथाभूतं विपरीतदर्शनं कथं कर्णेन दृष्टम्। इवशब्दोऽनवक्लृप्तौ॥ १०॥ **प्रत्यक्षमिति**। [अक्ष्णोः समीपे इति प्रत्यक्षं हतबन्धूनामस्माकं] एतद्धृदयमित्यन्वयः। [ परिभव एव अग्निस्तेन। अत्यर्थं भृशं दह्यते। कुत इति हृदयस्य दह्यमानत्वान्नास्ति दुःखव्यथयोस्तत्रावकाश इति भावः।]॥ ११॥ प्रतिपन्नमङ्गीकृतम्।

---

१ राजा. २ वत्स वृषसेन; राजा—सुन्दरक अलमिदानीं कथितेन। ( सास्रम्। ) हा वत्स वृषसेन क्वासि। देहि मे प्रतिवचनम्। ( इति मोहमुपागतः। ) सूतः—समाश्वसिहि समाश्वसिहि। राजा—( उत्थाय। सकरुणम्। ) हा वत्स वृषसेन, हा मदङ्कदुर्ललित, हा गदायुद्धप्रिय, हा राधेयकुलद्रुमप्ररोह. ३ ०पचार. ४ अत्यन्तं;–शोका०. ५ प्रत्यक्षहत. ६ व्यर्थं. ७ अस्मादनन्तरं आयुष्मन् अलमत्यन्तदुःखावेगेन इत्यधिकं क्वचित्. ८ संप्रति किं वयस्येनाङ्गराजेन.

**सुन्दरकः**——ततश्च देव तथाविधस्य पुत्रस्य दर्शनेन संगलितमश्रुजलमुज्झित्वा अनवेक्षितपरप्रहरणाभियोगेन स्वामिनाङ्गराजेनाभियुक्तो धनंजयः। तं च सुतवधामर्षोद्दीपितपराक्रमं विमुक्तजीविताशं तथा पराक्रामन्तं प्रेक्ष्य भीमनकुलसहदेवपाञ्चालप्रमुखैरन्तरितो धनंजयस्य रथवरः। (क)

**दुर्योधनः**——ततस्ततः।

**सुन्दरकः**——ततो देव शल्येन भणितम्——अङ्गराज स्खलिततुरङ्गमो मथितचक्रनेमिकूबरस्ते रथः। तन्न युक्तं भीमार्जुनाभ्यां सहायोद्धुम्। इति भणित्वा निवर्तितो रथोऽवतारितः स्वामी स्यन्दनाद्बहुप्रकारं च समाश्वासितः। (ख)

**दुर्योधनः**——ततस्ततः।

---

(क) तदो अ देव तहाविधस्स पुत्तस्स दंसणेण, संगलिदं अस्सुजलं उज्झिअ अणवेक्खिदपरप्पहरणाभिओएण सामिणा अङ्गराएण अभिजुत्तो धणंजओ। तं अ सुदवहामरिसुद्दीविदपरक्कमं विमुक्कजीविदासं तह परक्कमन्तं पेक्खिअ भीमणउलसहदेवपञ्चालप्पमुहेहिं अन्तरिदो धणंजअस्स रहवरो।

(ख) तदो देव सल्लेण भणिदम्——अङ्गराअ क्खलिदतुलङ्गमो मथिदचक्कनेमिकूवरो दे रहो ता ण जुत्तं भीमाज्जुणेहिं सह आजुज्झिदुं। त्ति भणिअ णिवंट्टिदो रहो ओदारिदो सामी सन्दणादो वहुप्पआरं अ समस्सासिदो।

---

[तथा विधा यस्य स तथाविधस्तस्य।] अश्रुजातमु०। [अनपेक्षितः अगणितः परेषां प्रहरणानामभियोग आक्रमणं। शस्त्रव्यापार इत्यर्थः। येन। सुतवधादमर्षस्तेनोद्दीपितः पराक्रमो यस्य तम्। विमुक्ता जीविताशा येन तं। जीवितनिरपेक्षं युद्ध्यमानमित्यर्थः।] पराक्रमवन्तं प्रेक्ष्य नकुलसहदेवपाञ्चालप्रमुखैरन्तरितो धनंजयस्य रथवरः। अत्रान्तरितः पिहितः। अयि राधेय स्खलिततुरङ्गमो भग्नकूवरस्ते रथो न योग्यो वोढुं भीमार्जुनाभ्यां सह सांप्रतमायोधितुम्। ततः परिवर्तितो रथो [वहवः प्रकारा यस्मिकर्मणि तद्यथा तथा] बहुप्रकारं च समाश्वासितः।

---

१ तहहदस्स. २ अस्सुजादं. ३ परप्पहरणेन. ४ दुराआरो मज्झमपण्डवो। दुर्योधनः——ततस्ततः। सुन्दरकः——तदो देव सुदवहामरिसुद्दीविदपरक्कमं विमुक्कजीविदासं तह परिक्कमन्तं; तदो तं सुदवहामरिसिदं. ५ सासक्केहिं भीम० ६ रहो. ७ अस्मात्परं—अज्जुणचावमहाप्पलअपओहरणिरसरिदसरधारासहस्सेहिं पूरिदेसु दिसामुहेसु (अर्जुनचापमहाप्रलयपयोधरनिःसृतशरधारासहस्रैः पूरितेषु दिशामुखेषु, इत्यधिकं पुस्तकान्तरे. ८ भणिदो सामी अङ्गराओ। जहा अङ्गराअ. ९ क्खुभिद, हत०; भग्गकुवरो दे रहो ण जोग्गो भीमासेणाज्जुणेहिं अभिजुत्तुं त्ति. १० पडिवट्टिदो (टी.).

**सुन्दरकः**—ततश्च स्वामिना सुचिरं विलप्य परिजनोपनीतमन्यं रथं प्रेक्ष्य दीर्घं निःश्वस्य मयि दृष्टिर्विनिक्षिप्ता । सुन्दरक एहीति भणितं च । ततोऽहमुपगतः स्वामिसमीपम् । ततोऽपनीय शीर्षस्थानात्पट्टिकां शरीरसंगलितैः शोणितबिन्दुभिर्लिप्तमुखं बाणं कृत्वाभिलिख्य प्रेषितो देवस्य संदेशः । ( इति पट्टिकामर्पयति । ) ( क )

( दुर्योधनो गृहीत्वा वाचयति यथा । )

स्वस्ति । महाराजदुर्योधनं समराङ्गणात्कर्ण एतदन्तं कण्ठे गाढमालिङ्ग्य विज्ञापयति ।

**अस्त्रग्रामविधौ कृती न समरेष्वस्यास्ति तुल्यः पुमान्**
**भ्रातृभ्योऽपि ममाधिकोऽयममुना जेयाः पृथासूनवः ।**
**त्वत्संभावित इत्यहं न च हतो दुःशासनारिर्मया**
**त्वं दुःखप्रतिकारमेहि भुजयोर्वीर्येण बाष्पेण वा ॥ १२ ॥**

---

( क ) तदो अ सामिणा सुइरं विलविअ परिअणोवणीदं अण्णं रहं पेक्खिअ दीहं निस्ससिअ मइ दिट्ठी विणिक्खिविदा । सुन्दरअ एहि त्ति भणिदं अ । तदो अहं उवगदो सामिसमीवम् । तदो अवणीव सीसट्ठाणादो पट्टिअं सरीरसंगलिदेहिं सोणिअबिंदुहिं लित्तमुहं बाणं कदुअ अहिलिहिअ प्पेसिदो देवस्स संदेसो ।

---

स्वामिना सुचिरं विलप्य परिजनोपनीतमन्यं रथमारुह्य क्षणेन दीर्घं निःश्वस्य मयि दृष्टिर्निहिता । सुन्दरक आगच्छेति भणितं च । तत उपगतोऽहं स्वामिसमीपम् । ततः शीर्षस्थानात्पट्टिकामपनीय स्वशरीरसंगलितैः शोणितबिन्दुभिः सुस्निग्धमुखं...। अत्र कूबरस्तु युगंधरः इत्यमरः। शीर्षं मस्तकम् । अपनीयानीय । **अस्त्रेति** । अयं कर्णः [ अस्त्रग्रामस्यास्त्रसमूहस्य विधौ प्रयोगे ] कृती कुशलः । इत्यनेनाकारेणाहं यत्संभावितो भवता प्रसिद्धः कृतः । प्रतिकारः प्रतीकारः इति शब्दभेदः । त्वं प्रतिकारमेहि गच्छ । तथा च युद्ध्वा वा । रुदित्वा वा । राजन् भ्रातृदुःखं त्यजेति भावः। [अहं तु सर्वथा न समोर्थो मयि समर्पितं कार्यभारं निर्वोढुमिति निर्वेदः। तदुक्तं तत्वज्ञानापदीर्षादेर्निर्वेदः स्वावमाननम् । इति । ]॥ १२॥

---

१ दुर्योधन. २ यत्सं० ३ तम्. विलम्बिअ परिअणो अभिहिदो अण्णं रहं मे उवणेहि त्ति । पिरअणोवणीदं अण्णं रहं पक्खिअ मइ दिणादिट्ठी सुन्दरअ एहि त्ति भणिअं अ । अहं उवगदो समीवम्; ( विलम्ब्य परिजनोभिहितोन्यं रथं म उपनयेति । परिजनोपनीतमन्यं रथं प्रेक्ष्य मयि दत्तदृष्टिः सुन्दरक एहीति भणितं च । अहमुपगतः समीपम् । ); देव सामिणा वि सुइ विलंविअ परिअणो अभिहिदो अण्णं रहं मे उवणेहि त्ति । परिअणोवणीदं अ अण्णं रहं दक्खिअ अस्सुजलं उज्झिअ दीहं...। तहा गदोम्हि सामिसमीपम् । इ. पा. २ विद्धवअणं. ५ अहिलिहिदो एसो देवस्स संदेसो—संलेहो.

**दुर्योधनः**—वयस्य कर्ण[1] किमिदं भ्रातृशतवधदुःखितं[2] मामपरेण वाक्शल्येन घट्टयसि। भद्र सुन्दरक अथेदानीं किमारम्भोऽङ्गराजः।

**सुन्दरकः**—देव अपनीतशरीरावरण आत्मवधकृतनिश्चयः पुनरपि पार्थेन सह समरं मार्गयते। (क)

**दुर्योधनः**—(आवेगादासनादुत्तिष्ठन्।)[3] सूत रथमुपनय। सुन्दरक त्वमपि मद्वचनात्त्वरिततरं गत्वा वयस्यमङ्गराजं प्रतिबोधय। अलमतिसाहसेन। अभिन्न एवायमावयोः संकल्पः। न खलु भवानेको जीवितपरित्यागाकाङ्क्षी। किं तु

**हत्वा पार्थान्सलिलमशिवं बन्धुवर्गाय दत्त्वा**
**मुक्त्वा बाष्पं सह कतिपयैर्मन्त्रिभिश्चारिभिश्च।[4]**
**कृत्वान्योन्यं सुचिरमपुनर्भावि गाढोपगूढं**
**संत्यक्ष्यावो हततनुमिमां दुःखितौ निर्वृतौ च॥ १३॥**

अथ च शोकं[5] प्रति मया न किञ्चित्संदेष्टव्यम्।

**वृषसेनो न ते पुत्रो न मे दुःशासनोऽनुजः।**
**त्वां[6] बोधयामि किमहं त्वं मां संस्थापयिष्यसि॥ १४॥**

**सुन्दरकः**—यद्देव आज्ञापयति। (इति निष्क्रान्तः।) (ख)

**दुर्योधनः**[7]—तूर्णमेव रथमुपस्थापय।

---

(क) देव[8] अवणीदसरीरावरणो अप्पवहकिदणिच्चओ पुणो वि पत्थेण सह समलं[9] मग्गदि। (ख) जं देवो आणवेदि।

---

देव अद्याप्यारम्भः पृच्छ्यते। [शरीरावरणं संनाहः। संकल्पः प्राणपरित्यागरूपः।] संकल्पः कर्म मानसम् इत्यमरः। हत्वेति। अशिवममङ्गलम्। बाष्पं मुक्त्वा। अपुनर्भावि [न पुनर्भवितुं शीलमस्य तत्।] गाढोपगूढं गाढालिङ्गनम्। इमां हततनुं निन्द्यशरीरमेवमेवं कृत्वा आवां संत्यक्ष्याव इत्यन्वयः। आवां कीदृशौ। प्रथमं दुःखितौ ततो निर्वृतौ मुमुक्षू ॥१३॥ वृषसेन इति। [वृषसेनः ते तवैव पुत्रो न। आवयोरभिन्नत्वान्ममापीति भावः। दुःशासनः मे अनुजः कनीयान् भ्राता न। तवापीति शेषः। अतोऽहं त्वां किं बोधयामि। त्वमपि मां किं संस्थापयिष्यसि। प्रकृतिस्थं करिष्यसि। आवयोरभिन्नत्वात्सान्त्वनादिकमनपेक्षितमितिभावः।] ॥१४॥

---

१ कर्ण कर्ण इति पाठः. २ वधदुःखः; हतभ्रातृशतं. ३ राजा—(श्रुत्वा सत्वरमुत्तिष्ठन्। सुन्दरक...प्रतिबोधय। न खलु जयाकाङ्क्षी भवानिदानीम्। अभिन्न... संकल्पः। किं तु इ. पा. ४ बन्धुभि. ५ कर्ण, सशोकं कर्ण. ६ त्वां बोधयिष्ये यदहं मां त्वं वा बोधयिष्यसि इ. पा. ७ दुर्योधनः—अयं नेमिध्वनिरिव। सूतः—आयुष्मन् एष सद्य एव संवर्धितो नेमिध्वनिः। दुर्योधनः—नूनं परिजनोपनीतो रथः। गच्छ त्वं सज्जीकुरु इ. पा. ८ देव अज्जवि आरम्भो पुच्छीअदि। इत्याधिकं क्वचित्. ९ सअं एव्व समलं मग्गदि (स्वयमेव समरं मार्गति.)

**सूतः**—( कर्ण दत्वा। ) देव ह्वेषासंवलितो नेमिध्वनिः श्रूयते। तथा तर्कयामि नूनं परिजनोपनीतो रथः।

**दुर्योधनः**—सूत गच्छ त्वं सज्जीकुरु।

**सूतः**—यदाज्ञापयति देवः। ( इति निष्क्रम्य पुनः प्रविशति। )

**दुर्योधनः**—( विलोक्य। ) किमिति नारूढोऽसि।

**सूतः**—एष खलु तातो[1]ऽम्बा च संजयाधिष्ठितं[2] रथमारुह्य देवस्य समीपमुपगतौ[3]।

**दुर्योधनः**—किं नाम तातोऽम्बा च संप्राप्तौ। कष्टमतिबीभत्स[4]-माचरितं दैवेन। सूत गच्छ त्वं स्यन्दनं तूर्णमुपहर। अहमपि तात-दर्शनं परिहरन्नेकान्ते तिष्ठामि।

**सूतः**—देव त्वदेकबान्धवावेतौ[5] कथमिव न समाश्वासयसि।

**दुर्योधनः**—सूत कथमिव समाश्वासयामि विमुखभागधेयः[6]। पश्य।

> **अद्यैवावां रणमुपगतौ तातमम्बां च दृष्ट्वा**
> **घ्रातस्ताभ्यां शिरसि विनतोऽहं च दुःशासनश्च।**
> **तस्मिन्बाले प्रसभमरिणा प्रापिते तामवस्थां**
> **पार्श्वं पित्रोरपगतघृणः[7] किं नु वक्ष्यामि गत्वा॥ १५॥**

तथाप्यवश्यं वन्दनीयौ गुरू।

( इति निष्क्रान्तौ। )

इति चतुर्थोऽङ्कः।

---

ह्वेषा अश्वशब्दः। संवलितो मिश्रः। नेमिश्चक्रप्रान्तः। त्वदेकबान्धवौ त्वमेको बान्धवो ययोरिति समासः। अद्येति। आवामहं दुःशासनश्च। [ प्रसभं हठात्। ] तामवस्थां मरणरूपाम्। पित्रोरित्यत्र पिता मात्रा इत्येकशेषः। घृणा करुणा जुगुप्सा वा। जुगुप्साकरुणे घृणे इत्यमरः। पित्रोः पार्श्वं गत्वा किं नु वक्ष्यामीत्यन्वयः॥ १५॥

> असूत यं रत्नधरो गुणाढ्यो नानागुणाढ्या दमयन्तिकापि।
> जगद्धरं तस्य कृतौ व्यरंसीदङ्कश्चतुर्थो वरटिप्पनेऽत्र॥

इति चतुर्थोऽङ्कः।

---

१ तातो धृतराष्ट्रः. २ संजयाधिरूढं रथमारूढौ देवसकाशमनुप्राप्तौ--देवदर्शनमनुप्राप्तौ; संजयेनाधिरूढौ देवदर्शन०. ३ समीपमागतौ. ४ अहो अतीव...स्यन्दनमुपहर इ. पा. ५ त्वदेकबान्धवौ. ६ मन्दभाग्यः. ७ स्नेहमपघृणः; स्नेहमुपगतः; ०गतः...ताभ्याम्.

## पञ्चमोऽङ्कः ।

( ततः प्रविशति रथयानेन गान्धारी संजयो धृतराष्ट्रश्च । )

**धृतराष्ट्रः**— वत्स संजय कथय कथय कस्मिन्नुद्देशे कुरुकुलकाननैकशेषप्रवालो वत्सो मे दुर्योधनस्तिष्ठति । कच्चिज्जीवति वा न वा ।[1]

**गान्धारी**—जात यदि सत्यं जीवति मे वत्सस्तत्कथय कस्मिन्देशे वर्तते । ( क )

**संजयः**—नन्वेष[2] महाराज एक एव न्यग्रोधच्छायायामुपविष्टस्तिष्ठति ।

**गान्धारी**—( सकरुणम्[3] । ) जात एकाकीति भणसि । किं नु खलु सांप्रतं भ्रातृशतमस्य पार्श्वे भविष्यति । ( ख )

**संजयः**—तात अम्ब अवतरतं स्वैरं रथात् ।

( उभाववतरणं नाटयतः । )

( ततः प्रविशति सव्रीडमुपविष्टो[4] दुर्योधनः । )

**संजयः**—( उपसृत्य[5] । ) विजयतां महाराजः । नन्वेष तातः अम्बया सह प्राप्तः । किं न पश्यति[6] महाराजः ।

**दुर्योधनः**—( वैलक्ष्यं नाटयति । )

**धृतराष्ट्रः**—

शल्यानि व्यपनीय कङ्कवदनैरुन्मोचिते कङ्कटे
बद्धेषु व्रणपट्टकेषु शनकैः कर्णे कृतापाश्रयः[7] ।

---

( क ) जाद जइ सच्चं जीवदि मे वच्छो ता[8] कहेहि कस्सिं देसे वट्टदि ।

( ख ) जाद एआइ त्ति भणासि । किं णु क्खु संपदं भादुसदं से पास्से भविस्सदि[9] ।

---

एकशेषोऽवशिष्टः । प्रवालोऽङ्कुरः । प्रवालमङ्कुरेऽप्यस्त्री इत्यमरः । [ कच्चित् कामप्रवेदने इति चामरः । ]... मे पुत्रकस्तत्कथय कस्मिन्नुद्देशे वर्तते । अन्यथा किं सांप्रतं भ्रातृशतमस्य...। अत्र जात पुत्रक [ स्वैरं शनैः सुखमिति यावत् । ] सव्रीडं सलज्जं यथा स्यादेवम् । [ कङ्कस्य पक्षिविशेषस्य वदनमिव वदनं येषां

---

१ संजय कुरुकुल०...दुर्योधनः कच्चित्; सकलकुलकाननैकपल्लवो, कुरुकुलकाननैक० इ. पा. २ तात अम्ब नन्वेष. ३ सास्रम्. ४ सव्रीडोपविष्टः. ५ उपगम्य. ६ पश्यसि महाराज. ७ कृतोपाश्रयः. ८ ता कस्सिं कधेहि तं उद्देसम्. ९ तस्स भादुसदं पास्से णत्थि; भादुणो से समवि ण होन्ति.

दूरान्निर्जितसान्त्विताञ्नरपतीनालोकयँल्लीलया
सह्या पुत्रक वेदनेति न मया पापेन पृष्टो भवान् ॥ १ ॥
(धृतराष्ट्रो गान्धारी च स्पर्शेनोपेत्यालिङ्गतः।)

**गान्धारी**—वत्स अतिगाढप्रहारवेदनापर्याकुलस्यास्मासु संनिहितेष्वपि न प्रसरति ते वाणी। (क)

**धृतराष्ट्रः**—वत्स दुर्योधन किमकृतपूर्वः संप्रति मय्यप्यप्रत्याहारः।

**गान्धारी**—वत्स यदि त्वमप्यस्मान्नालपसि तत्किं सांप्रतं वत्सो दुःशासन आलपतु दुर्मर्षणो वाथान्यो वा। (ख) (इति रोदिति।)

**दुर्योधनः**—

पापोऽहमप्रतिकृतानुजनाशदर्शी
तातस्य बाष्पपयसां तव चाम्ब हेतुः।
दुर्जातमत्र विमले भरतान्ववाये
किं मां सुतक्षयकरं सुत इत्यवैषि ॥ २ ॥

(क) वच्छ अदिगाढप्पहारवेअणापज्जाउलस्स अह्मेसु सण्णिहिदेसु वि ण प्पसरदि दे वाणी। (ख) वच्छ जइ तुमं वि अह्मे णालवसि तो किं संपदं वच्छो दुस्सासणो आलवदु दुम्मरिसणो वा अध अण्णो वा।

तैः कङ्कवदनैः शस्त्रविशेषैः। शल्यानि बाणाग्राणि उद्धृत्य कङ्कटे संनाहे अपनीते। कर्णे कृतः अपाश्रयः आश्रयो येन तादृशः। आदौ भवता निर्जिताः पश्चाच्च सान्त्वितास्तान् शत्रुपक्ष्यान् नरपतीन् लीलया आलोकयन् भवान्। एष क्षत्रियाणां धर्मः यन्निर्जिता अपि शत्रवः सान्त्वनीया एवेति। हे पुत्रक क्षतजा पीडा सह्येति पापेन पुत्रविनाशान्मन्दभाग्येन मया न पृष्टः। स्पर्शेन अन्धत्वात् हस्तपरामर्शेन समीपमागत्य। गान्धार्या अपि पातिव्रत्यप्रेरितायाः स्वभर्तुरान्ध्यादात्मनोपि चक्षुषोर्बद्धपट्टिकात्वादन्धत्वम्। तदुक्तं भारते—गान्धारी त्वथ शुश्राव धृतराष्ट्रमचक्षुषम्।...ततः सा पट्टमादाय कृत्वा बहुगुणं तदा। बबन्ध नेत्रे स्वे राजन् पतिव्रतपरायणा ॥] अपकृतमपकारः कृतः। यदि त्वं मां नालपसि तदा किं...। पाप इति। हे अम्ब [अहं पापः यतः] तव तातस्य च बाष्पपयसां हेतुः कारणं जातोऽस्मि। कीदृशः। अप्रतिकृतोऽप्रतीकारविषयीकृतो योऽनुजनाशः [तं पश्यतीति] तद्दर्शी। त्वं मां सुत इति किमवैषि जानासि। कीदृशम्। वो युष्माकमिह भरतकुले दुर्जातं दुष्टपुत्रम्। पुनः कीदृशम्। वः सुतविनाशकरम्। व इति

१ शात्रवान्. २ दृष्टः. ३ परिष्वजेते. ४ मय्यव्यवहारः; अभूतपूर्वो मय्यपि संप्रत्यनध्याहारः इ. पा. ५ दु०--अम्ब. ६ जातः (टी.) योधः. ७ न्वयेऽपि: न्वयेऽस्मिन्, न्वये वः. ८ अह्मेसु वि, किं अह्मेसु वि. ९ (सकरुणम्।) वच्छ. १० किं दाणीं दुस्सासणो दुम्मरिसणो अण्णो वा आलविस्सदि--आलवदि;—अध दुम्मरिसणो विकण्णो वा.

**गान्धारी**—जात अलं परिदेवितेन । त्वमपि तावदेकोऽस्यान्धयुगलस्य मार्गोपदेशकः । तच्चिरं जीव । किं मे राज्येन जयेन वा । (क)

**दुर्योधनः**—

**माता किमप्यसदृशं कृपणं वचस्ते**
**सुक्षत्रिया क भवती क च दीनतैषा ।**
**निर्वत्सले सुतशतस्य विपत्तिमेतां**
**त्वं नानुचिन्तयसि रक्षसि मामयोग्यम् ॥ ३ ॥**

नूनं वि[1]चेष्टितामिदं सुतशोकस्य ।

**संजयः**—महाराज किं वा[2]यं लोकवादो वितथः न घटस्य कूपपाते रज्जुरपि तत्र प्रक्षेप्तव्या इति ।

**दुर्योधनः**—अपुष्[3]कलमिदम् । [4]उपक्रियमाणाभावे किमुपकरणेन । ( इति रोदिति । )

**धृतराष्ट्रः**—( दुर्योधनं परिष्वज्य । ) वत्स समा[5]श्वसिहि । समाश्वासय चास्मा[6]निमामतिदीनां मातरं च ।

**दुर्योधनः**—तात दु[7]र्लभः समाश्वास इदानीं युष्माकम् । किं तु

**कुन्त्या सह युवामद्य मया निहतपुत्रया ।**
**विराजमानौ शोकेऽपि तनयाननुशोचतम् ॥ ४ ॥**

---

( क ) जाद अलं परिदेविदेण । तुमं वि दाव ऐक्को इमस्स अन्धजुअलस्स मागगोवदेसओ । ता चिरं जीव । किं मे रज्जेण जएण वा ।

---

काकाक्षिगोलकवदुभयान्वयि । आकाङ्क्षाया उभयत्र सत्त्वात् । शब्दान्वयस्य वागाकाङ्क्षाक्रमेणोत्थानादित्यन्यत्र विस्तरः ॥ २ ॥ त्वमेव तावदेतस्यान्धयुगलस्य मार्गोपदेशको भव । **मातरिति** । किमप्यानिर्वचनीयम् । कृपणं दीनम् । सुक्षत्रिया शोभनक्षात्रियजातिः । क्केति । अत्यन्तासंभवेऽर्थे द्वौ कौ प्रयुज्येते इति कोषः । हे निर्वत्सले अवात्सल्यवति वात्सल्यहीने वा ॥ ३ ॥ किं वितथोऽसत्यः किं तु सत्य एवेत्यर्थः । रज्जुः रशनादिप्रग्रहः । इदं वचोऽपुष्कलमश्रेष्ठं । श्रेयान्श्रेष्ठः पुष्कलः स्यात् इत्यमरः । [ न सर्वव्यापीत्यर्थः । ] [ उपक्रियमाणानां रक्षणीयानां भातॄणामभावे उपकरणेन मम प्राणरक्षणेन किम् । साध्याभावे किं साधनेनेत्यर्थः । ] कुन्त्येति । अद्य [ मया निहतपुत्रया ] कुन्त्या सह युवां [ शोकेपि विराजमानौ

---

१ विकृतं. २ चायं लोकप्रवादोऽपि विस्मृतो न च घटस्य ॰पतने रज्जुस्तत्रैव. ३ अलमलम् । उपक्रियमाणं किमपकारेण; अयुक्तमिदम् । अपक्रियमाणे किमुपकारेण. ४ ननु उप॰. ५ समाश्वसिहि समाश्वासिहि. ६ मां जननीं च, मामिमाम् इ॰. ७ दुर्लभमिदानीं पुनः समाश्वासनं युष्माकम्. ८ अलमलं;--मग्गोवदेसओ चिरंजीव । अलं मे. ९ एक्की अन्ध॰;--पन्थोवदेसेओ--चिरंजीव । किं मे रज्जेण वेरेण वा ।

**गान्धारी**—जात एतदेव सांप्रतं प्रभूतं यत्त्वमपि तावदेको जीवसि । तज्जात अकालस्ते समरस्य । प्रसीद । एष ते शीर्षाञ्जलिः । निवर्त्यतां समरव्यापारात् । अपश्चिमं कुरु मे वचनम् । (क)

**धृतराष्ट्रः**—वत्स शृणु वचनं तवाम्बाया मम च निहताशेषबन्धुवर्गस्य । पश्य ।

> **दायादा न ययोर्बलेन गणितास्तौ द्रोणभीष्मौ हतौ**
> **कर्णस्यात्मजमग्रतः शमयतो भीतं जगत्फाल्गुनात् ।**
> **वत्सानां निधनेन मे त्वयि रिपुः शेषप्रतिज्ञोऽधुना**
> **मानं वैरिषु मुञ्च तात पितरावन्धाविमौ पालय ॥ ५ ॥**

**दुर्योधनः**—समरात्प्रतिनिवृत्य किं मया कर्तव्यम् ।

---

(क) जादं एदं एव्व संपदं प्पभूदं जं तुमं वि दाव एक्को जीवसि । ता जाद अकालो दे समरस्स । प्पसीद । एसो दे सीसञ्जली । णिवट्टीअदु समरव्वावारादो । अपच्छिमं करेहि वअणम् ।

---

मया तस्याः पुत्रान् हत्वा कृतवैरनिर्यातनादिति भावः ।] तनयाननुशोचतमित्यन्वयः ॥ ४ ॥ इदमेव...यत्त्वामप्येकं नानुशोचयिष्ये । तज्जात प्रसीद । एष ते शीर्षे अञ्जलिः । निवर्त्यतामेतस्मात्समरव्यापारात् । अपश्चिमं कुरु पितुर्वचनम् । अत्र प्रभूतं युक्तम् । शीर्षेऽञ्जलिः प्रणामः । अपश्चिममलङ्घ्यम् । सपत्नः शत्रुः । **दायादा इति** । [ययोर्बलेन दायं पित्रादि द्रव्यमाददतेऽदन्तीति वा दायादाः ज्ञातयः । पाण्डवा इत्यर्थः । न गणिता तुच्छत्वेनावज्ञाताः तौ द्रोणभीष्मौ हतौ । कर्णस्यात्मजं कर्णस्याग्रतः शमयतः हतवत इत्यर्थः । फाल्गुनादर्जुनाज्जगद्भीतम् । फाल्गुनीनक्षत्रे जातः फाल्गुनः । तत्र श्रविष्ठाफल्गुन्यनुरोधा इत्यादिना जातार्थकस्याणो लुकि, लुक्तद्धितलुकि इत्युपसर्जनस्त्रीप्रत्ययस्य लुकि फल्गुन इति । ततः प्रज्ञादित्वात्स्वार्थे आणि फाल्गुनः इति रूपम् । मे वत्सानां त्वदितरेषां निधनेन मरणेन रिपुः अधुना त्वयि शेषा शेषवती प्रतिज्ञा यस्य स शेषप्रतिज्ञः वर्तते । शेषशब्दादर्श आद्यच् । त्वामपि हन्यादित्यर्थः। अतः तात वत्स । वत्स पुत्रक ताततेति नाम्ना गोत्रेण वा सुतः । शिष्योनुजश्च वक्तव्यः इति दर्पणे ।] दायादाः शत्रवः । अग्रतः कर्णस्यैव । फाल्गुनादर्जुनात् । मे वत्सानां निधनेनायं रिपुस्त्वयि शेषप्रतिज्ञः इत्यन्वयः । त्वदेकावशिष्टप्रतिज्ञ इत्यर्थः । हे तात मान्य । पितरौ मातापितरौ । एकशेषात् ॥५॥ पिता ते विदुरो यद्भणति पिता पितृकल्पो हितोपदेशात् । प्राणितं

---

१ ममापि; निहतसकल--सकलहत--बन्धुवर्गस्य; निहताशेषवर्गस्य. इ. पा. २ अपि च तात दुर्योधन. ३ शमयता भीतं यतः फाल्गुनात्; शमयता भीतं न बीभत्सुना. ४ निधनाच्च मारुतिरसौ शेषप्रतिज्ञस्त्वयि इ. पा. ५ क्रोधं. ६ वत्स. ७ तात अम्ब... किं करिष्यामि. ८ जाद दाणिं;--प्पभूददरं. ९ णानुसोचइदव्वो; कं अण्ण अणुसोहस्सम् । एसो दे अञ्जली । णिवट्टेहि इ०, समरानिब्बन्धादो; प्पसीद प्पसीद;--पिदुणो वअणं, अवस्सं पिदुणो इ. पा.

**गान्धारी**—जात यत्पिता ते विदुरो वा भणति। (क)

**संजयः**—देव[1] एवमिदम्।

**दुर्योधनः**—संजय अद्याप्युपदेष्टव्यमस्ति।

**संजयः**—देव[2] यावत्प्राणिति तावदुपदेष्टव्यभूमिर्विजिगीषुः प्रज्ञावताम्।

**दुर्योधनः**—(सक्रोधम्।) श्रृणुमस्तावद्भवत एव प्रज्ञावतः[3] संप्रत्यस्मदनुरूपमुपदेशम्।

**धृतराष्ट्रः**—वत्स युक्तवादिनि संजये किमत्र क्रोधेन। यदि प्रकृतिमापद्यसे तद[4]हमेव भवन्तं ब्रवीमि। श्रूयताम्।

**दुर्योधनः**—कथयतु तातः।

**धृतराष्ट्रः**—वत्स किं विस्तरेण[5]। संधत्तां भवानिदानीमपि युधिष्ठिरे[6]णाभीप्सितपणबन्धेन।

**दुर्योधनः**—तात तनयस्ने[7]हवैक्लव्यादम्बा बालिश[8]त्वात्संजयश्च काममेवं ब्रवीतु। युष्मा[9]कमप्येवं व्यामोहः। अथ वा प्रभवति पुत्रनाश[10]जन्मा हृदयज्वरः। अन्यच्च तात अस्खलितभ्रा[11]तृशतोऽहं यदा तदावधीरितवासुदेवसामोपन्यासः। संप्रति हि दृष्टपितामहाचार्यानुज-

(क) जाद जं पिदा दे विउरो वा भणादि[12]।

जीवितम्। संपन्नश्च प्रकृतिभिर्महोत्साहः कृतश्रमः। जेतुमेषणशीलश्च विजिगीषुरिति स्मृतः॥ इति विजिगीषुलक्षणम्। वैक्लव्याद्विह्वलत्वात्। अम्बा वदतीति शेषः। बालिशत्वेन मूर्खतया। संजयो वदतीति शेषः। नाम निश्चये। हृदयज्वरस्तातस्येति शेषः। **तातेत्यादि**। हे तात दुर्योधनः कथं संधिं करिष्यतीत्यन्वयः। अस्खलितमविनष्टं। साम संधानम्। [दृष्टा] पितामहो भीष्मः। आचार्यो द्रोणः। [अनुजा दुःशासनादयः] राजचक्रं क्षत्रियसंघः। [इत्येतेषां विपत्तिर्येन

१ राजन्. २ राजन् यावत्प्राणितव्यं—यावत्प्राणाः—तावदुपदेष्टव्यभूमयो विजिगीषवः; यावत्प्राणितव्यं—यावत्प्राणनाशस्तावदुपदेष्टव्या नृपतयो;—नृपतयो विजिगीषवः प्रज्ञावताम्. ३ प्रज्ञावतोऽस्मान्प्रति प्रातिरू०; (सासूयम्।)...तावत्प्रज्ञावतो भवतोऽस्मत्प्रातिरूपमेव. ४ तदहमेव तावद्भवन्तं, तदहमेव भवन्तं किंचित्; कथयामि. ५ विचारेण. ६ युधिष्ठिरस्य समीप्सितेन पणेन; युधिष्ठिरप्रार्थितपणेन. ७ स्नेहात्. ८ बालिशत्वेन. ९ युष्माकमपि चायं मोहः; अम्बा तनयवैक्लव्याद्बालिशत्वेन संजयो मामेवं ब्रुवतां नाम व्यामोहो भवतामपि। १० नाशशोक. ११ शतस्तदावधीरितशमोपन्यासः १२ भणिस्सदि—तं अणुचिट्ठ; भणदि तं अणुचिट्टिदव्वम्.

राजचक्रविपत्तिः [1]स्वशरीरमात्रस्नेहादुदात्तपुरुषव्रीडावहमसुखावसानं च कथमिव करिष्यति दुर्योधनः सह पाण्डवैः संधिम्। अन्यच्च। नयवेदिन्संजय

> [2]हीयमानाः किल रिपोर्नृपाः संदधते परान्।
> दुःशासने हतेऽहीनाः सानुजाः पाण्डवाः कथम्॥ ६॥

**धृतराष्ट्रः**—वत्स एवं गतेऽपि मत्प्रार्थनया [3]न किंचिन्न करोति युधिष्ठिरः। अन्यच्च। [4]सर्वदैवाप्रकृष्टमात्मानं मन्यते युधिष्ठिरः।

**दुर्योधनः**—कथमिव।

**धृतराष्ट्रः**—[5]वत्स श्रूयतां प्रतिज्ञा युधिष्ठिरस्य। नाहमेकस्यापि भ्रातुर्विपत्तौ प्राणान्[6]धारयामीति। बहुच्छलत्वात्सङ्ग्रामस्यानुजना[7]शमाशङ्कमानो [8]यदैव भवते रोचते तदैवासौ सज्जः संधातुम्।

**संजयः**—एवमिदम्।

**गान्धारी**— जात उपपत्तियुक्तं प्रतिपद्यस्व पितुर्वचनम्। (क)

---

(क) जाद उपपत्तियुक्तं पडिवज्जस्स पिदुणो वअणम्।

---

सः।] [स्वशरीरमेव स्वशरीरमात्रं तस्मिन् स्नेहस्तस्मात्।] कीदृशं संधिम्। [उदात्ताश्च ते पुरुषाश्च तेषां व्रीडामावहतीति व्रीडावहम्।] उदात्तकथाव्रीडाकरमुत्तमकथालज्जाकरम्। दुःखान्तं च। हीयमाना इति। किलागमे रिपोरहितात्। हीयमाना हीनाः नृपाः पराञ्शत्रून्संदधते। स्वापेक्षया यदि परे शक्ता भवन्ति तदा तैः समं संधिः कर्तव्य इति भावः। दुःशासने हते सति सानुजाः पाण्डवा अहीनाः सन्तः कथं परान्संदधत इत्यर्थः॥ ६॥ एवं गतेऽपि भवदुक्तनीतेर्यथार्थत्वेऽपीत्यर्थः। मम प्रार्थनया युधिष्ठिरः किंचिन्न करोत्येवं न। किं तु किंचित्करोत्येव। ननु हे राजन् युधिष्ठिरः सर्वमेवापकृतं नैवानुमन्यते। तस्य दक्षिणत्वात्सदा धर्मपरायणत्वाच्चेति भावः। कथमिव कुत इदमित्यर्थः। बहूनि [छलानि यस्मिन्नसौ बहुच्छलस्तस्य भावः। बहुच्छलत्वं तस्मात्।] भवते रोचते तुभ्यं रुचिविषयीभवति। रुच्यर्थानां प्रीयमाणः इति चतुर्थी। उपपत्तियुक्तं प्रतिपद्यस्व पितुर्वचनम्। अत्र प्रतिपद्यस्व जानीहि [अङ्गीकुरु।

---

१ शरीरमात्र—मात्रक-स्नेहात्. २ हीयमानान्किल रिपून्नृपाः संदधते कथम्। दुःशासनेन हीनोऽहं सानुजः पाण्डवोऽधुना। इ. पा.;—किल रणे...। दुःशासने हते हीनाः पाण्डवाः सानुजे कथम्। इ. क्वचित्. ३ किं न करोति युधिष्ठिरः. ४ सर्वमेवापकृतं नानुमन्यते। (टी.) सर्व दैवापकृष्टं मन्यते; स भवद्भ्यः, सर्वदैवात्मानमपकृष्टं मन्यते भवद्भ्यो युधिष्ठिरः इ.पा. ५ एतत्क्वचिन्नास्ति. ६ संधारयामीति. ७ अनुजनाशाच्छङ्कमानः; अनुजनाशशङ्कया शङ्कमानः. ८ यथैव भवते रोचते तथैवासौ शक्तः संधातुम्.

**दुर्योधनः**—तात अम्ब संजय

**एकेनापि विनानुजेन मरणं पार्थः प्रतिज्ञातवा-**
**न्भ्रातॄणां निहते शतेऽभिलषते दुर्योधनो जीवितुम्।**
**तं दुःशासनशोणिताशनमरिं भित्त्वं गदाकोटिभि-**
**र्भीमं दिक्षु न विक्षिपामि कृपणः संधिं विदध्यामहम् ॥७॥**

**गान्धारी**—हा जात दुःशासन हा मदङ्कदुर्ललित हा युवराज अश्रुतपूर्वा खलु कस्यापि लोक ईदृशी विपत्तिः। हा वीरशतप्रसविनि हतगान्धारि दुःखशतं प्रसूतासि। न पुनः सुतशतम्। (क)

(सर्वे रुदन्ति।)

**संजयः**—(बाष्पमुत्सृज्य।) तात अम्ब प्रतिबोधयितुं महाराजमिमां भूमिं युवामागतौ। तदात्मापि तावत्संस्तभ्यताम्।

**धृतराष्ट्रः**—वत्स दुर्योधन एवं विमुखेषु भागधेयेषु त्वयि चामुञ्चति सहजं मानमरिषु त्वदेकशेषजीवितालम्बनेयं तपस्विनी गान्धारी कमवलम्बतां शरणमहं च।

---

(क) हा जाद दुस्सासण हा मदङ्कदुल्ललिद हा जुअराअ अस्सुदपुव्वा क्खु कस्स वि लोए ईदिसी विपत्ती। हा वीरसदप्पसविणि हदगान्धारि दुक्खसदं प्पसूदासि। ण उण सुदसदम्।

---

अनुतिष्ठेत्यर्थः। ] एकेनेति। विनानुजेनेत्यत्र पृथग्विना–इत्यादिना तृतीया। पार्थो युधिष्ठिरः। विषहते शक्नोति। तथा च लज्जाकरेण मम जीवितेनालमिति भावः। शोणिताशिनं रक्तभोजिनम्। भोजनपदं लक्षणया पानेऽपि प्रवर्तत इहेत्यवधेयम्। कोटिरग्रम्। कोटिरग्रे प्रकर्षे च इति धरणिः। अहं भीमं दिक्षु न विक्षिपामि। किं तु विक्षिपाम्येवेत्यर्थः। नः शिरश्चालने। अहं कृपणः रुन्संधिं विदध्यां करिष्ये। तथा च भीमवधादेव समीहितसिद्धिर्न तु संधिनेति भावः ॥ ७ ॥ पुत्रशतम्। संस्तभ्यतां स्थिरीक्रियताम्। तपस्विन्यनुकम्प्या। तपस्वी तापसे चानुकम्पार्हे च तपस्विनि। इति विश्वः। त्वदेकशेषरूपं जीविताशावलम्बनं तद्योगिनी। न तु बहुव्रीहिं कृत्वा मत्वर्थीयः। तयोरेकेनैवापरस्य गतार्थत्वादित्यवधेयम्। किंशरणः इति पाठे किं शरणं यस्य स किंशरणः। अशरण इत्यर्थः। शरणं गृहरक्षित्रोः इत्यमरः। अहं च कमवलम्बै इत्यन्वयः।

---

१ विषहते. २ भिन्दन्, ०कोटिना. ३ विक्षिपत्यनुनयं तस्मिन्विधत्ते कथम् इ. पा. ४ समाश्वासयितुं. ५ मानबन्धम्. ६ जीविताशा० (टी.) ७ हा दुम्मरिसण हा विकण्ण हा वीरसदप्पसविणी गान्धारी दुक्खसदं प्पसूदा। इ. पा.

**दुर्योधनः**—श्रूयतां [1]यत्प्रतिपत्तुमिदानीं प्राप्तकालम् ।

> **कलितभुवना भुक्तैश्वर्यास्तिरस्कृतविद्विषः**
> **प्रणतशिरसां राज्ञां चूडासहस्रकृतार्चनाः ।**
> **अभिमुखमरीन्घ्नन्[2]तः संख्ये हताः शतमात्मजा**
> **वहतु सगरेणोढां तातो धुरं सहितोऽम्बया ॥ ८ ॥**

विपर्यये त्व[3]मस्याधिपतेरुलङ्घितः क्षात्रधर्मः स्यात्[4] ।

(नेपथ्ये महान्[5]कलकलः ।)

**गान्धारी**—(आकर्ण्य । सभयम् ।) जात कुत्रैतत् हाहाकारमिश्रं तूर्यरसितं श्रूयते । (क)

**संजयः**—अम्ब [6]भूमिरियमेवंविधानां भीरुजन[7]त्रासनानां महानिनादानाम् ।

**धृतराष्ट्रः**—वत्स संजय ज्ञायतामतिभैरवः खलु विस्तारी हाहारवः । कारणेनास्य महता भवितव्यम् ।

**दुर्योधनः**—तात प्रसीद । पराङ्मुखं खलु दैवमस्माकम् । यावदपरमपि किंचिदत्याहितं न श्रावयति तावदेवा[8]ज्ञापय मां सङ्ग्रामावतरणाय ।

---

(क) जादे का[9]हिं एदं हाहाकारमिस्सं तूर[10]रसिदं सुणीअदि ।

---

प्रतिपत्तुं कर्तुम् । कलितभुवना इति । हे तात यतः [ कलितं भुवनं यैस्ते ] कलितभुवनाः साधितलोकाः । कलिवली कामधेनू इति वैयाकरणाः । [ भुक्तैश्वर्याः तिरस्कृता विद्विषो यैस्ते तिरस्कृतविद्विषः । प्रणतानि शिरांसि येषां ते प्रणतशिरसस्तेषां राज्ञां चूडानां सहस्राणि चूडासहस्राणि तैः कृतमर्चनं येषां ते तथोक्ताः । अभिमुखं यथा तथा अरीन् घ्नन्तः ] तवात्मजाः शतं शतसंख्याका हता अतोऽम्बया सह सगरेणोढां धुरं तातो वहतु । यथा सगरस्य शतं पुत्राः शत्रुणा हतास्तथा तवापीति भावः । कीदृशाः । अभिमुखं क्रुद्धाञ्शत्रून्घ्नन्तो नाशयन्तः । इदं विशेषणं सगरसुतेष्वपि । एवं कलितभुवना इत्याद्यपि । शतमात्मजा इति । शतसंख्याया एकवचनान्तेनैव शतशब्देनोक्तत्वादात्मजपदेन बहुवचनान्तेन च तदभिधानादन्वयः । ऊढां धृताम् ॥ ८ ॥ [ विपर्यये भवान् धुरं न वहेत् चेत् ] क्षात्रवृत्तिः क्षत्रियधर्मः । जानीत किमिदं हाहाकारविमिश्रं

---

१ यत्प्रतिपत्तुमित्यादि कचिन्नास्ति. २ क्रुद्धान्-क्रोधाद्--घ्नन्तो हताः. ३ तु समुल्लङ्घितः. ४ अस्मादनन्तरं क्वचित्--धृतराष्ट्रः—वत्स हितं विधीयते न पुनः क्षात्रवृत्तिरियम् इत्यधिकम् । ५ नादः. ६ अभूमिरियमेवंविधानां भीरुजनानाम् । इ० पा०. ७ त्रासजननी ८ अनुमन्यस्व. ९ संजअ किं एदं. १० समरतूररासिदं; विसमं तूररासिदं, विसमं रासिदं.

**गान्धारी**—जात मुहूर्तं तावन्मां मन्दभाग्यां समाश्वासय। (क)

**धृतराष्ट्रः**—वत्स यद्यपि भवान्समराय कृतनिश्चयस्तथापि रहः-परप्रतीघातोपायश्चिन्त्यताम्।

**दुर्योधनः**—

**प्रत्यक्षं हतबान्धवा मम परे हन्तुं न योग्या रहः**
**किं वा तेन कृतेन तैरिव कृतं यन्न प्रकाशं रणे।**

**गान्धारी**—जात एकाकी त्वम्। कस्ते साहाय्यं करिष्यति। (ख)

**दुर्योधनः**—

**एकोऽहं भवतीसुतक्षयकरो मातः कियन्तोऽरयः**
**साम्यं केवलमेतु दैवमधुना निष्पाण्डवा मेदिनी॥ ९॥**

(नेपथ्ये। कलकलानन्तरम्।)

भो भो योधाः निवेदयन्तु भवन्तः कौरवेश्वराय इदं महत्कदनं प्रवृत्तम्। अलमप्रियश्रवणपराङ्मुखतया। यतः कालानुरूपं प्रतिविधातव्यमिदानीम्। तथा हि।

---

(क) जाद मुहुत्तअं दाव मं मन्दभाइणीं समस्ससेहि।
(ख) जाद एआइ तुमम्। को दे सहाअत्तणं करिस्सदि।

---

तूर्यरसितं श्रूयते। अत्याहितमनिष्टम्। मुहूर्तकमपि तावन्मामनाथां समाश्वासय। अत्र मुहूर्तकमित्यत्र स्वार्थे कः। प्रतीघातो विनाशः। प्रत्यक्षमिति। [ प्रत्यक्षं अस्माकं लोकानां वा समक्षं हताः अस्माकं बान्धवा यैस्ते परे शत्रवो रहः गुप्तं हन्तुं न योग्याः। प्रत्यक्षापकारिणां प्रत्यक्षमेव हननं वीरजनोचितमित्यर्थः। पाठान्तरे ] मम रथः परान्हन्तुं न क्षम इत्यन्वयः। तेन परप्रतीघातोपायेन। कृतेन वा किम्। किं तु न किमपि। तैरपि कर्म कृतं निष्फलं यद्रणे न प्राकाश्येन बोधनीयम्। यदित्यत्र जात्यभिप्रायमेकवचनम्। तैरिव कृतम् इति पाठे यथा तैः शत्रुभिः कृतं निष्फलं रणाप्रकाशनादित्यर्थः। हे मातरेकोऽहमद्वितीयः श्रेष्ठो वास्मि। कीदृशः। भवत्याः पुत्रनाशकरः। भवतीत्यत्र पुंवद्भावाभावः प्रियादिपाठात्। स्त्रियाः पुंवत् इति योगविभागाद्वा। कियन्तोऽल्पाः। केवलं दैवमेव श्लाघ्यमस्तु। [ पाठान्तरे साम्यं समतां निष्पक्षपातित्वमिति यावत्। ] मेदिनी निष्पाण्डवा भवेत्। यत्र क्रिया नास्ति तत्र कृभ्वस्तयो ग्राह्या इति व्युत्पत्तिः॥ ९॥ कदनं पापं भीषणं वा। कदनं भीषणे पापे इति विश्वः।

---

१ हतबान्धवस्य न परान् हन्तुं रथो मे क्षमः। इ. पा. २ तैरिह; तैरपि. ३ प्रकाश्यं ४ नन्वेकः. ५ साद्यं, शाम्यं; श्लाघ्यं केवलमस्तु (टी.) इ० पा०. ६ जनाः. ७ अलमिदानीम्०...प्रतिविधातव्यम्।

त्यक्तप्राजनरश्मिरङ्कितत॒नुः पार्थाङ्कितैर्मार्गणै-
र्वाहैः स्यन्दनवर्त्मनां परिचयादाकृष्यमाणः शनैः।
वार्तामङ्गपतेर्विलोचनजलैरावेदयन्पृच्छतां
शून्येनैव रथेन याति शिबिरं शल्यः कुरूञ्शल्ययन्॥१०॥

**दुर्योधनः**—(श्रुत्वा साशङ्कम्।) आः केनेदमविस्पष्टमशनिपात-दारुणमुद्धोषितम्। कः कोऽत्र भोः।

(प्रविश्य संभ्रान्तः।)

**सूतः**—हा हताः स्मः। (इत्यात्मानं पातयति।)

**दुर्योधनः**—अयि कथय कथय।

**धृतराष्ट्रसंजयौ**—कथ्यतां कथ्यताम्।

**सूतः**—आयुष्मन् किमन्यत।

शल्येन यथा शल्येन मूर्च्छितः प्रविशता जनौघोऽयम्।
शून्यं कर्णस्य रथं मनोरथमिवाधिरूढेन॥ ११॥

**दुर्योधनः**—हा वयस्य कर्ण। (इति मोहमुपगतः।)

**गान्धारी**—जात समाश्वसिहि समाश्वसिहि। (क)

(क) जाद समस्सस समस्सस।

त्यक्तेति। शल्यः शून्येनैव रथेन शिबिरं यातीत्यन्वयः। किं कुर्वन्। कुरून्कुरुवलानि शल्ययन्दुःखितानि कुर्वन्। कीदृशः। [त्यक्तप्राजनरश्मिः त्यक्तौ प्राजनरश्मी येन स तथा।] प्राजनं प एना इति ख्यातम्। प्राजनं तोदनं तोत्रम् इत्यमरः। रश्मिर्वल्गा। [पार्थस्य अङ्कः चिह्नं स संजात एषामिति पार्थाङ्कितैः मार्गणैर्बाणैः। पृषत्कमार्गणशराः इत्यमरः। अङ्कितत॒नुः] स्यन्दनवर्त्मनां परिचयाद्रथमार्गानुसंधानात्। वाहैः शनैर्मन्दमाकृष्यमाणः। पृच्छतां जनानां पृच्छद्भ्यो जनेभ्य इत्यर्थः। अङ्गपतेर्वार्ता नेत्रजलैरावेदयन्कथयन्। तथा च कर्णो मृत इति रोदनेनैव सूचितमिति भावः॥१०॥ अशनिर्वज्रम्। उभयं क्रियाविशेषणम्। उद्घोषितमुच्चैः शब्दः कृतः। स्मो भवामः। शल्येनेति। हे देव अयं जनौघः शल्येन राज्ञा हेतुभूतेन मूर्च्छितोऽस्ति। कीदृशेन। प्रविशता। अर्थाज्जनौघमेव। कर्णस्य रथमधिरूढेन च। यथा शल्येनास्त्रविशेषेण मूर्छितो जनौघो भवति। कीदृशं रथम्।

१ न्युब्जप्रोज्झितरश्मिरङ्कितत॒नुः. २ धनुः. ३ वर्त्मनः; वर्त्मना. ४ पृच्छते. ५ कम्पयन. ६ आकर्ण्य। सभयम्।;--सशङ्कम्। सूत केनेद०...ज्ञायताम्। कोऽत्र भोः; राजा-आः; किमेवमविस्पष्टमशनिनिर्घात इ० पा० ७ हतोऽस्मि. ८ कथयामि किं देव इ० पा०।

**संजयः**—समाश्वसितु समाश्वसितु देवः।

**धृतराष्ट्रः**—भोः कष्टं कष्टम्।

**भीष्मे द्रोणे च निहते य आसीदवलम्बनम्।**
**वत्सस्य मे सुहृच्छूरो राधेयः सोऽप्ययं हतः॥ १२॥**

वत्स समाश्वसिहि समाश्वसिहि। ननु भो हतविधे

**अन्धोऽनुभूतशतपुत्रविपत्तिदुःखः**
**शोच्यां दशामुपगतः सह भार्ययाहम्।**
**अस्मिन्नशेषितसुहृद्गुरुबन्धुवर्गे**
**दुर्योधनेऽपि हि कृतो भवता निराशः॥ १३॥**

वत्स दुर्योधन समाश्वसिहि समाश्वसिहि। समाश्वासय तपस्विनीं मातरं च।

**दुर्योधनः**—( लब्धसंज्ञः। )

**अयि कर्ण कर्णसुखदां प्रयच्छ मे**
**गिरमुद्गिरन्निव मुदं मयि स्थिराम्।**
**सततावियुक्तमकृताप्रियं प्रियं**
**वृषसेनवत्सल विहाय यासि माम्॥ १४॥**

( पुनर्मोहमुपगतः। )

( सर्वे समाश्वासयन्ति। )

**दुर्योधनः**—

**मम प्राणाधिके तस्मिन्नङ्गानामधिपे हते।**
**उच्छ्वसन्नपि लज्जेऽहमाश्वासे तात का कथा॥ १५॥**

---

मनोरथमिव। शून्यमित्यर्थः। आर्याच्छन्दः॥ ११॥ **अन्ध इति।** [ अनुभूतं शतपुत्रस्य विपत्तेर्मरणस्य दुःखं येन सः। अहं भार्यया सह शोच्यां दशामुपगतः।] अशेषितो विनष्टः [ सुहृद्गुरुबन्धुवर्गो यस्य तस्मिन्। ] विरामो निरस्तता। निराश इति पाठे आशाशून्यः॥१३॥ **अयीति।** [ अयि कर्ण मयि स्थिरां मुदमुद्गिरन्निव मे कर्णसुखदां गिरं प्रयच्छ। ] हे कर्ण मयि गिरं प्रयच्छ। कीदृशः। मयि स्थिरां मुदमुद्गिरन्निव। इत्येकोऽन्वयः। द्वितीयस्तु। हे कर्ण मे मम कृते कर्णसुखदां गिरं प्रयच्छ। मुदमुद्गिरन्निव। त्वामिति शेषः। अकृताप्रियं न कृतमप्रियं येन तम्। प्रियं मित्रम्। वृषसेनो वत्सलो यस्य स तथा॥ १४॥ **ममेति।** तस्मिन्नङ्गानामधिपे हते सत्युच्छ्वसन्नप्यहं लज्जे। श्वासधारणेऽपि लज्जां करोमि। आश्वासे का कथा। [ सुदूरापेतं तु समाश्वासनमिति भावः ]॥ १५॥

---

१ महाराजः; समाश्वसिहि समाश्वसिहि महाराज. २ पुत्रस्य--वत्सस्य--मे सुहृत्प्रेयान्. ३ हतविधे भरतकुल विमुख. ४ निःशेषिताखिलसुहृद्गुरुबन्धुवर्गः. ५ विरामः ( टी ). ६ अनुजैर्वियुक्त० प्रियं; कथम्. ७ अङ्गानामीश्वरे,--गते.

अपि च ।

**शोचामि शोच्यमपि शत्रुहतं न वत्सं**
**दुःशासनं तमधुना न च बन्धुवर्गम् ।**
**येनातिदुःश्रवमसाधु कृतं तु कर्णे**
**कर्तास्मि तस्य निधनं समरे कुलस्य ॥ १६ ॥**

गान्धारी—जात शिथिलय तावत्क्षणमात्रं बाष्पमोक्षम् । (क)

धृतराष्ट्रः—वत्स क्षणमात्रं परिमार्जयाश्रूणि ।

दुर्योधनः—

**मामुद्दिश्य त्यजन्प्राणान्केनचिन्न निवारितः ।**
**तत्कृते त्यजतो बाष्पं किं मे दीनस्य वार्यते ॥ १७ ॥**

सूत केनैतदसंभावनीयमस्मत्कुलान्तकरं कर्म कृतं स्यात् ।

सूतः—आयुष्मन् एवं किल जनः कथयति ।

**भूमौ निमग्नचक्रश्चक्रायुधसारथेः शरैस्तस्य ।**
**निहतः किलेन्द्रसूनोरस्मत्सेनाकृतान्तस्य ॥ १८ ॥**

दुर्योधनः—

**कर्णाननेन्दुस्मरणात्क्षुभितः शोकसागरः ।**
**वाडवेनेव शिखिना पीयते क्रोधजेन मे ॥ १९ ॥**

---

(क) जाद सिढिलेहि दाव क्खणमेत्तं बाप्पमोक्खम् ।

---

**शोचामीति**। अधुना [शत्रुहतं शोच्यं शोचनार्हमपि तं वत्सं दुःशासनं न शोचामि । बन्धुवर्गं च न शोचामि । तु किंतु येन कर्णे अतिदुःश्रवं अतिदुःखेन श्रोतुं शक्यम् असाधु कृतम् । कर्णो हत इत्यर्थः । तस्य कुलस्य समरे निधनं नाशं कर्तास्मि । ] येन कर्णेन मम कर्णेऽसाध्वयोग्यमतिदुःश्रवमत्यर्थदुःखश्राव्यं वचो न कृतं तस्य कर्णस्य निधने सति मम कुलस्य निधनं विनाश इत्यर्थः । [त्याज्योयं जगद्धरसंमतः पाठः । ] दुःश्रवमिति विशेषणद्वारा विशेष्यलाभः । ईषद्दुःसुषु—इत्यादिना खल् ॥ १६ ॥ अत्र मोक्षस्त्यागः । **मामिति** । न निवारितो य इति शेषः । तत्कृते तं लक्ष्यीकृत्याश्रूणि त्यजतो मे किं वार्यते । न वारयितुमर्हामीति भावः ॥ १७ ॥ असंभावनीयं दुष्करम् । **भूमाविति** । किल प्रसिद्धौ । [ चक्रायुधः सारथिः यस्य तस्य अस्मत्सेनाकृतान्तस्य ] तस्येन्द्रसूनोरर्जुनस्य शरैः [भूमौ निमग्नचक्रः] स कर्णो निहतः । कीदृशः । भूमौ निमग्नरथाङ्गः । चक्रं सैन्यरथाङ्गयोः इति विश्वः। चक्रायुधः कृष्णः । कृतान्तो यमः ॥१८॥ **कर्णेति** । [ कर्णाननमेव इन्दुः तस्य स्मरणात्क्षुभितः

---

१ न कर्णे कर्णस्य तस्य निधनं निधनं कुलस्य (टी.). २ क्षणमेकं त्यजाश्रूणि. ३ केनापि, केनचिन्-न स वारितः. ४ असंभावितम्, धृतराष्ट्रः—केनेदम्०-सू०-एवं इ०. ५ भूम्यां निमग्नचक्रस्तु स चक्रायुधसारथेः । संख्ये किल हतो बाणैरस्मत्सेनान्तकारिणः ॥ इ० पुस्तकान्तरे पा०. ६ अस्मत्परं क्वचित्—कष्टं भोः कष्टम् । इत्य०.

तात अम्ब प्रसीदतम् ।

ज्वलनः शोकजन्मा मामयं दहति दुःसहः ।
समानायां विपत्तौ मे वरं संशयितो रणः ॥ २० ॥

धृतराष्ट्रः—( दुर्योधनं परिष्वज्य रुदन् । )

भवति तनय सत्यं संशयः साहसेषु
द्रवति हृदयमेतद्भीममुत्प्रेक्ष्य भीमम् ।
अनिकृतिनिपुणं ते चेष्टितं मानशौण्ड
च्छलबहुलमरीणां सङ्गरं हा हतोऽस्मि ॥ २१ ॥

गान्धारी—जात तेनैव सुतशतकृतान्तेन वृकोदरेण समं समरं मार्गयसे । ( क )

दुर्योधनः—तिष्ठतु तावद् वृकोदरः ।

पापेन येन हृदयस्थमनोरथो मे
सर्वाङ्गचन्दनरसो नयनामलेन्दुः ।
पुत्रस्तवाम्ब तव तात नयैकशिष्यः
कर्णो हतः सपदि तत्र शराः पतन्तु ॥ २२ ॥

सूत अलमिदानीं कालातिपातेन । सज्जं मे रथमुपाहर । भयं चेत्पाण्डवेभ्यस्तिष्ठ । गदामात्रसहाय एव समरभुवमवतरामि ।

---

( क ) जाद तेण एव्व सुदसदकदन्तेण वि ओदलेण समं समलं मग्गासि ।

---

मम शोकसागरः वाडवेन वाडवाजातेन शिखिनाग्निना और्वेण इव मे क्रोधजातेन शिखिना पीयते ॥ १९ ॥ ज्वलन इति । समानायां तुल्यायां दाहमरणयोर्विपदि सत्याम् । संशयितोऽपि जये भङ्गे च संदिग्धोऽपि । रणो वरं श्रेष्ठ इत्यर्थः । वरं शब्दो मनागर्थे वा ॥ २० ॥ भवतीति । हे तनय पुत्र ईदृशेषु लक्ष्मीर्भवति । तदुक्तम्— न साहसमनारुह्य नरो भद्राणि पश्यति इति । द्रवति चपलं भवति । भीमं भयानकम् । उत्प्रेक्ष्य विचिन्त्य । हे मानशौण्डाभिमानख्यात ते चेष्टितमनिकृतिनिपुणं परक्षेपाकुशलं परभर्त्सनाकुशलं वा अस्तीति शेषः । निकृतिर्भर्त्सने क्षेपे इति विश्वः । अरीणां सङ्गरं युद्धं छलबहुलमस्ति । अतो हा कष्टम् । हतोऽस्मि ॥ २१ ॥ समरं प्रार्थयेथाः । पापेनेति । हे अम्ब तव पुत्रः कर्णः । हे तात तव नये एकः मुख्यः शिष्यः नयैकशिष्यः कर्णः । येन

---

१ शोकज्वलनजन्मा मां तापो दहति दुःसहः इति क्वचित्पाठः. २ वरं संशयितुं, संशयनं रणे; वरं संशयतो रणः-रणम्. ३ पुत्रं परिष्वजन्. ४ नित्यं; लक्ष्मीः साहसेष्वीदृशेषु (टी.)५दहति च हृदयं मे. ६अनिकृत. ७बहलम. ८हृदयस्य. ९ममैकमित्रं.१० त्वं चेद्बिभेषि.

**सूतः**—अलमन्यथा संभावितेन । अयमहमागत[1] एव । ( इति निष्क्रान्तः । )[2]

**धृतराष्ट्रः**—वत्स दुर्योधन यदि स्थिर[3] एवास्मान्दग्धुमयं ते व्यवसायस्तत्संनिहितेषु वीरेषु सेनापतिः कश्चिदभिषिच्यताम् ।

**दुर्योधनः**—नन्वभिषिक्त एव ।

**गान्धारी**—जात कतरः पुनः स यत्रेमां हताशामवलम्बिष्ये । (क)

**धृतराष्ट्रः**—किं वा शल्य उत वाश्वत्थामा ।

**संजयः**—हा कष्टम् ।

> **गते भीष्मे हते द्रोणे कर्णे च विनिपातिते ।**
> **आशा बलवती राजञ्शल्यो जेष्यति पाण्डवान् ॥ २३ ॥**

**दुर्योधनः**—किं वा शल्येनोत वाश्वत्थाम्ना ।

> **कर्णालिङ्गनदायी वा पार्थप्राणहरोऽपि वा ।**
> **अनिवारितसंपातैरयमात्माश्रुवारिभिः ॥ २४ ॥**

( नेपथ्ये कलकलं कृत्वा । )

भो भोः कौरवबलप्रधानयोधाः अलमस्मानवलोक्य भयादितस्ततो गमनेन । कथयन्तु भवन्तः कस्मिन्नुद्देशे सुयोधनस्तिष्ठतीति ।

( सर्वे ससंभ्रममाकर्णयन्ति । )

( प्रविश्य संभ्रान्तः । )

**सूतः**—आयुष्मन्

> **प्राप्तावेकरथारूढौ पृच्छन्तौ त्वामितस्ततः ।**

**सर्वे**—कश्च कश्च ।

**सूतः**—

---

(क) जाद कदरो उण सो जहिं एदं हदासं ओलम्बिस्सम् ।

---

पापेन हत इत्यन्वयः ॥ २२ ॥ अतिपातोऽतिक्रमः । यस्मिन्नाशां समवलम्बिष्ये । अत्र कतरः क इत्यर्थः । आशां प्रत्याशाम् ॥ गत इति । गते शरशय्यामिति शेषः । विनिपातिते घातिते ॥ २३ ॥ कर्णेति । अयं ममात्मा कर्णालिङ्गनदायी कर्णानुयायीत्यर्थः । अश्रुवारिभिर्लक्षितः । लक्षणे तृतीया । कीदृशैः । अनिवारितासारैः । धारासंपात आसारः इत्यमरः । तथा च मर्तव्यं वा

---

१ आगतोऽस्मि. २ अस्मात्परं–( नेपथ्ये कलकलः । ) दुर्योधनः—अनुमादध्वमनुमोदध्वम् । पराङ्मुखोऽस्माकं विधिः । इत्यधिकं क्वचित्. ३ स्थिर एवायं निश्चयः; स्थिर एष ते समराध्यवसायः –तदथासंनिहितेषु इ० पा०. ४ हत. ५ अस्र. ६ एतन्नास्ति क्वचित्. ७ गन्तुम्. ८ जस्सिं आसं.

**स कर्णारिः स च क्रूरो वृकंकर्मा वृकोदरः ॥ २५ ॥**

**गान्धारी**—( सभयम् । ) जात किमत्र प्रतिपत्तव्यम् । ( क )

**दुर्योधनः**—नैनु संनिहितैवेयं गदा ।

**गान्धारी**—हा हस्तास्मि मन्दभागिनी । ( ख )

**दुर्योधनः**—अम्ब अलमिदानीं कार्पण्येन । संजयं रथमारोप्य पितरौ शिबिरं प्रतिष्ठस्व । प्राप्तोऽस्मच्छोकापनोदप्रणयी जनः ।

**धृतराष्ट्रः**—वत्स क्षणमेकं प्रतीक्षस्व यावदनयोर्भावमुपलभे ।

**दुर्योधनः**—तात किमनेनोपलब्धेन ।

( तथा प्रविशतो रथारूढौ भीमार्जुनौ । )

**भीमः**—भो भोः सुयोधनानुजीविनः किमिति संभ्रमादयथायथं चरन्ति भवन्तः । अलमावयोः शङ्कया ।

**कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽतिमानी**
**कृष्णाकेशोत्तरीयव्यपनयनमरुत्पाण्डवा यस्य दासाः ।**
**राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं**
**क्वास्ते दुर्योधनोऽसौ कथयत न रुषा द्रष्टुमभ्यागतौ स्वः ॥२६॥**

---

( क ) जाद किं एत्थ पडिपज्जिदव्वम् ।
( ख ) हा हदह्मि मन्दभाइणी ।

---

मयार्जुनवधो वा कर्तव्य इति भावः ॥ २४ ॥ **प्राप्ताविति** । इतस्ततः सर्वत्र । कर्णारिरर्जुनः । वृको हुण्डार इति ख्यातः । तद्वद्युद्धकर्म यस्य स वृककर्मा । वृको मृगविशेषो वा । कोकस्त्वीहामृगो वृकः । इत्यमरः । वृको मृगे तथोरगे इति धराणिः ॥ २५ ॥ कर्तव्यम् । प्रतिपत्तव्यम् इत्यपि पाठः । प्रतीक्षस्व क्षमस्व । अनयोर्भीमार्जुनयोः । भावमभिप्रायम् । अयथायथमितस्ततः । **कर्तेति** । असौ स दुर्योधनः क्वास्ते तत्कथयत । [ कीदृशः द्यूतसम्बन्धिनां छलानां कर्ता । जतुमयं लाक्षानिर्मितं यत् शरणं गृहं तस्य उद्दीपनः दाहकः । कृष्णायाः केशाश्च उत्तरीयं च तेषां व्यपनयने मरुत् वायुरिव । ] रुषा तं द्रष्टुं नाभ्यागतौ स्वः । सदनं [शरणं]

---

१ कर्णस्यारिः. २ भीम. ३ अम्ब ननु. ४ संजय संजय. ५ प्रस्थापय; प्रवेशय. ६ समागतोऽस्माकं शोकापनोदी जनः. ७ उपलभामहे. ८ उपलम्भेन । तद्गम्यताम् । ( धृतराष्ट्रो गान्धारी च किंचिद्गत्वा तिष्ठतः । ). ९ जीविनो योधाः. १० संभ्रमात्संचरन्ति; ससंभ्रममयथायथं–तथं. ११ अस्मात्परं--कथयत तावदिदमावयोरागमनं स्वामिनस्तस्य कुरुपतेः । इत्य०. १२ सदनो ( टी. ). १३ अभिमानी. १४ पटुः. १५ पुरुषाः १६ एत्थ संपदं०; कादव्वम्.

**धृतराष्ट्रः**—संजय दारुणः खल्[1]पक्षेपः पापस्य ।

**संजयः**—तात कर्मणा कृतनिःशेषविप्रियौ[2] संप्रति वाचा व्यवस्यन्ति ।

**दुर्योधनः**—सूत क[3]थय गत्वोभयोरयं तिष्ठतीति ।

**सूतः**—यथाज्ञापयति देवः । ( तावुपसृत्य । ) [4]भो वृकोदरार्जुनौ एष महाराजस्तातेनाम्बया च सह न्यग्रोधच्छायायामुपविष्टस्तिष्ठति ।

**अर्जुनः**—आर्य प्रसीद । न युक्तं पुत्रशोक[5]पीडितौ पितरौ पुनरस्मद्दर्शनेनोद्वेजयितुम् । तद्गच्छावः ।

**भीमः**—मूर्[6]ढ अनु[7]ल्लङ्घनीयः सदाचारः । न युक्तमनभिवाद्य गुरून् गन्तुम् । ( उपसृत्य । ) संजय पित्रोर्नमस्कृतिं श्रावय । अथ वा तिष्ठ । [8]स्वयं विश्राव्य नामकर्मणी वन्दनीया गुरवः । ( इति रथादवतरतः । )

**अर्जुनः**—( उप[9]गम्य । ) तात अम्ब

> **सकलरिपुजयाशा यत्र बद्धा सुतैस्ते**
> **तृणमिव परिभूतो यस्य गर्वेण लोकः ।**
> **रणशिरसि निहन्ता तस्य राधासुतस्य**
> **प्रणमति पितरौ वां मध्यमः पा[10]ण्डवोऽयम् ॥ २७ ॥**

**भीमः**—

> **चू[11]र्णिताशेषकौरव्यः क्षीवो दुःशासनासृजा ।**
> **भङ्क्ता सुयोधनस्योर्वोर्भीमोऽयं शिरसा[12]ञ्चति ॥ २८ ॥**

**धृतराष्ट्रः**—[13]दुरात्मन्वृकोदर न खल्विदं भवतैव केवलं सपत्ना-

---

गृह्णम् ! व्यपनयनं दूरीकरणम् । मरुद्वातः । मित्रं स इत्यत्र मित्रशब्दस्याजहल्लिङ्ग-तयान्वयः ॥ २६ ॥ उद्वेजयितुमित्यत्र ण्यन्तत्वाद्गुणः । सदाचारः शिष्टाचारः । समुदाचारः इति पाठे सद्व्यवहार इत्यर्थः । नमस्कृतिं नमस्कारम् । सकलेति । [यत्र यास्मिन् कर्णे ते पुत्रैः सकलानां रिपूणां जयस्याशा बद्धा । यस्य यत्सम्बन्धिना गर्वेण लोकः तृणमिव परिभूतः तस्य राधासुतस्य रणशिरसि निहन्ता ] वां पितरावयं मध्यमः पाण्डवोऽर्जुनः प्रणमति । वाम् इति द्वितीयाद्विवचनान्तम् ॥ २७ ॥ **चूर्णितेति** । [ चूर्णिता अशेषाः कौरव्या येन । दुःशासनस्य असृजा रक्तेन ] क्षीवो मत्तः । भङ्क्ता भङ्गकर्ता । [ अञ्चति पूजयति । नमस्करोतीत्यर्थः ] ॥ २८ ॥

---

१ खाल्वक्षेपः पापयोः. २ ०विप्रियौ व्यवस्यतः; कृतनिःशेषेऽपि संप्रति विप्रियं...। ३ ब्रूहि. ४ ननु भो. ५ पुत्रशोकोपपीडितौ...भृशमु०. ६ पण्डितंमन्य: अयि पण्डित ७ अलङ्घनीयः;—समुदाचारः. ८ स्वयमेव श्रावयावः, भीमः—विश्राव्य स्वकर्म नाम च वन्दनीया गुरवः इ० पा०. ९ उपसृत्य. १० पाण्डुपुत्रः; फाल्गुनः पाण्डवोऽयम् । इ० पा०. ११ निहता. १२ नतः. १३ अस्मात्परं—मा तावद्विकत्थयात्मानाम् इत्य० कश्चित्.

मपकृतम् । यावत्क्षेत्रं तावत्समरविजयिनो जिता हताश्च वीराः । तत्किमेवं विकत्थनाभिरस्मानुद्वेजयसि ।

भीमः—तात अलं मन्युना ।

कृष्टा केशेषु कृष्णा तव सदसि पुरः पाण्डवानां नृपैर्यैः
सर्वे ते क्रोधवह्नौ कृतशलभकुलावज्ञया येन दग्धाः ।
एतस्माच्छ्रावयेऽहं न खलु भुजबलश्लाघया नापि दर्पा-
त्पुत्रैः पौत्रैश्च कर्मण्यतिगुरुणि कृते तात साक्षी त्वमेव ॥२९॥

दुर्योधनः—अरे रे मरुत्तनय किमेवं वृद्धस्य राज्ञः पुरतो निन्दितव्यमात्मकर्म श्लाघसे । अपि च ।

कृष्टा केशेषु भार्या तव तव च पशोस्तस्य राज्ञस्तयोर्वा
प्रत्यक्षं भूपतीनां मम भुवनपतेराज्ञया द्यूतदासी ।
अस्मिन्वैरानुबन्धे वद किमपकृतं तैर्हता ये नरेन्द्रा
बाह्वोर्वीर्यातिरेकद्रविणगुरुमदं मामजित्वैव दर्पः ॥ ३० ॥

आः दुरात्मन् एष न भवसि । ( इति सक्रोधमुत्थाय हन्तुमिच्छति । )

धृतराष्ट्रः—( धृत्वा उपवेशयति । )

भीमः—( क्रोधं नाटयति ।)

अर्जुनः—आर्य प्रसीद । किमत्र क्रोधेन ।

अप्रियाणि करोत्येष वाचा शक्तो न कर्मणा ।
हतभ्रातृशतो दुःखी प्रलापैरस्य का व्यथा ॥ ३१ ॥

---

अपकृतमपकारः कृतः । वीरा जयिनो हताश्च भवन्तीति क्षात्रधर्मोऽयम् । विकत्थनोपहासः । कृष्टेति । पुरः पाण्डवानामेव । पाण्डवानां वधूः कृष्णा । [कृता या शलभकुलसम्बन्धिनी अवज्ञा तया । येन यस्माद् दग्धाः । ] कृशं यच्छलभकुलं तद्वदवज्ञयापमानेनेत्यर्थः । तेनाहं त्वां श्रावये । खलु निश्चये । न भुजबलश्लाघया श्रावये । नापि दर्पाच्छ्रावये ॥२९॥ कृष्टेति । तव भीमस्य । तव चार्जुनस्य । तस्य राज्ञो युधिष्ठिरस्य । तयोर्नकुलसहदेवयोः । एतेषां प्रत्यक्षं भूपतीनां च प्रत्यक्षम् । अनुबन्धे प्रकरणे । ये नरेन्द्रा हतास्तैः किमपकृतमित्यन्वयः । [बाह्वोः वीर्यस्यातिरेकः अतिशयः एव द्रविणं घनं तेन गुरुर्महान् मदो यस्य तं माम् । अजित्वैव दर्पः भ्रियते किमिति शेषः ।]॥३०॥ अप्रियाणीति । एष वाचा प्रियाणि करोति । कर्मणा न शक्तोऽसमर्थ इत्यन्वयः । यद्वा । अशक्त एष वाचा अप्रियाणि करोति न कर्मणेत्यन्वयः । प्रलापोऽनर्थकं वचः

---

१ क्षात्रं. २ अलमलं मन्युना; अलमिदानीं मन्युना. ३ कृष्णा...कृष्टा. ४ वधूः. ५ कृश ( टी. ). ६ अनेन. ७ तेन त्वां. ८ पुरः. ९ निन्दितमपि. १० क्ष्मा. ११ तव; कथमनपकृतं इ०. १२ अर्जुनः—( निवारयन् । ) आर्य प्रसीद प्रसीद । १३ कथा.

**भीमः**—अरे रे भरतकुलकलङ्क

**अत्रैव किं न विशसेयमहं भवन्तं**
**दुःशासनानुगमनाय कटुप्रलापिन्।**
**विघ्नं गुरू न कुरुतो यदि मद्गदाग्र-**
**निर्भिद्यमानरणितास्थनि ते शरीरे॥ ३२॥**

अन्यच्च मूढ

**शोकैः स्त्रीवन्नयनसलिलं यत्परित्याजितोसि**
**भ्रातुर्वक्षःस्थलविघटने यच्च साक्षीकृतोऽसि।**
**आसीदेतत्तव कुनृपतेः कारणं जीवितस्य**
**क्रुद्धे युष्मत्कुलकमलिनीकुञ्जरे भीमसेने॥ ३३॥**

**दुर्योधनः**—दुरात्मन् भरतकुलापसद द्यूतदास पाण्डवपशो नाहं भवानिव विकत्थनाप्रगल्भः। किं तु

**द्रक्ष्यन्ति न चिरात्सुप्तं बान्धवास्त्वां रणाङ्गणे।**
**मद्गदाभिन्नवक्षोऽस्थिवेणिकाभीमभूषणम्॥ ३४॥**

**भीमः**—(विहस्य।) यद्येवं नाश्रद्धेयो भवान्। तथापि प्रत्यासन्नमेव कथयामि।

**पीनाभ्यां मद्भुजाभ्यां भ्रमितगुरुगदाघातसंचूर्णितोरोः**
**क्रूरस्याधाय पादं तव शिरसि नृणां पश्यतां श्वः प्रभाते।**

---

इत्यमरः॥ ३१॥ **अत्रैवेति**। अहं भवन्तं किमत्रैव न विशसेयं य विनाशयामि। यदि ते शरीरे गुरू विघ्नं न कुरुत इत्यन्वयः। विशसेयमिति शसु हिंसायाम् लिङि उत्तमपुरुषैकवचने रूपम्। हे कटुप्रलापिन्। कीदृशे शरीरे। मत्कराग्रैर्निर्भिद्यमानान्यत एव रणितानि शब्दितान्यस्थीनि यत्र तादृशे। कीकसं कुल्यमस्थि च इत्यमरः॥ ३२॥ **शोकमिति**। शोकैर्यथा स्त्री रोदिति तथा यत्त्वं नयनसलिलं त्याजितोऽसि। शोकम् इति पाठे नेत्रजलैर्यथा स्त्री शोकं त्याज्यते तथा त्वमपि त्याजित इत्यर्थः। यथा स्त्री रुदित्वा शोकं त्यजति तथा त्वयापि कृतमिति भावः। भीमसेने क्रुद्धे सति तव कुनृपस्य जीवितस्यैतत्कारणमासीद्यद्रोदनं भ्रातृवधदर्शनं च नाम। उभयं चेद्वृत्तं तदा मया त्वमपि घातयितव्य इतिभावः॥ ३३॥ [अपसदेति नीचेत्यर्थे। बहुशः समासोऽत्र प्रयुज्यते] **द्रक्ष्यन्तीति**। न चिरादचिरम्। श्रेणिका परंपरा। वेणिका इति पाठे वेणिका प्रवाहः। वेणी तु केशवेशे स्यात्प्रवाहेऽपि निगद्यते। इति धरणिः अत एव त्रिवेणीति। कणिका इति पाठस्तु सुगम एव। सैव भयानकालंकरणं यत्र तम्। नृणां पुर इति शेषः॥ ३४॥ **पीनाभ्यामिति**। श्वः। ह्यो गतेऽनागतेऽह्नि श्वः इत्यमरः। [प्रभाते नृणां पश्यतां पीनाभ्यां पुष्टाभ्याम्। ओप्यायी वृद्धौ इत्यतो गत्यर्थेत्यादिना क्तः।

---

१ विसृजेयम्. २ मत्कराग्र (टी.) ३ शोकं--०सलिलैः. ४ विदलने. ५ कुलाधम. ६ असृग्वं०. भीम--भद्र. ७ यद्येवं न श्रद्धेयो, यद्येवं श्रद्धत्ते, यदि न श्रद्धत्ते तदा प्रत्या०.

**त्वन्मुख्यभ्रातृचक्रोद्दलनगलदसृक्चन्दनेनानखाग्रं**
**स्त्यानेनार्द्रेण चाक्तः स्वयमनुभविता भूषणं भीममस्मि ॥ ३५॥**

( नेपथ्ये । )

भो भो भीमसेनार्जुनौ एष खलु निहताशेषौ[1]रातिचक्र[2] आक्रान्त-परशुरामाभिरामयशाः प्रतापतापितदिङ्मण्ड[3]लैस्थापितस्वजनः श्रीमानजातशत्रुर्देवो युधिष्ठिरः समाज्ञापयति ।

**उभौ**—किमाज्ञापयत्यार्यः ।

( पुनर्नेपथ्ये । )

**कुर्वन्त्वाप्ता हतानां रणशिरसि जना वह्निसाद्देहभारा-**
**नश्रून्मिश्रं कथंचिद्ददतु जलममी बान्धवा बान्धवेभ्यः ।**
**मार्गन्तां ज्ञातिदेहान्हतनरगहने खण्डितान्गृध्रकङ्कै-**
**रस्तं भास्वान्प्रयातः सहरिपुभिरयं संह्रियन्तां बलानि ॥३६॥**

**उभौ**—यदाज्ञापयत्यार्यः । ( इति निष्क्रान्तौ । )

( नेपथ्ये । )

अरे रे गाण्डीवाकर्षणबाहुशालिन् अर्जुन अर्जुन केदानीं गम्यते ।

**कर्णक्रोधेन युष्मद्विजयि धनुरिदं त्यक्तमेतान्यहानि**
**प्रौढं विक्रान्तमासीद्वन इव भवतां शूरशून्ये रणेऽस्मिन् ।**

---

ओदितश्च इति नत्वं प्यायः पी इति च पीभावः । मद्भुजाभ्यां भ्रमिता या गुरुः गदा तस्य आघातेन संचूर्णिते ऊरू यस्य तस्य क्रूरस्य तव शिरसि पादमाधाय । स्त्यानेन घनीभूतेन । स्त्यैष्ट्यै शब्दसंघातयोः इत्यतो निष्ठायां संयोगादेरातोधातोर्यण्वत इति निष्ठातस्य नः । आर्द्रेण च । ] त्वं मुख्यो यत्र तादृशं यद्भ्रातृचक्रं तस्योद्दलनेन खण्डनेन गलत्स्रवद्यदसृग्रक्तं तदेव चन्दनं तेन । मुख्येत्यनेन तस्यापि वधः सूचितः । तथा च त्वदादिसर्वभ्रातृवध इति भावः । आनखाग्रं नखाग्रपर्यन्तमक्तः स्वयं भीमं भूषणमनुभवितास्मि ॥३५॥ उद्धृतो दुर्वृत्तः ॥ कुर्वन्त्विति । आप्ता बान्धवादयः । वह्निसात्कार्त्स्न्येन वह्निदेयान् । सातिः कार्त्स्न्ये इति देयार्थे सातिप्रत्ययः । भारान्संघान् । उन्मिश्रं युक्तम् । मार्गन्तां प्रार्थयन्ताम् । जना इति शेषः । रणशिरसि गहने व्याप्ते । असौ सूर्यो मम रिपुभिः सहास्तं गतः । यथा शत्रवोऽस्तं गतास्तथा रविरपीति भावः । अत्र यद्यपि शत्रुपक्षेऽस्तगमनं विनाशः सूर्यपक्षेऽदृश्यत्वं तथापि शब्दसाम्यात्प्रयोगः । यद्वा उभयत्राप्यस्तगमनमदृश्यत्वमात्रं विवक्षितम् । तच्चैकत्र मरणेनान्यत्रान्यगमनेनेत्यन्यदेतत । संह्रियन्तामुपसंह्रियन्ताम् ॥ ३६ ॥ **कर्णेति** । [ युष्मान् विजेतुं शीलमस्य तद् युष्मद्विजयि इदं धनुः कर्णक्रोधेन

---

१ उद्धृताराति. २ विक्रमाक्रांत—. ३ ण्डलः. ४ कुर्वन्त्वत्राहत नां. ५ नृणां. ६ असैः. ७ केद्दमधुना गम्यते. ८ भवता.

**स्पर्शं स्मृत्वोत्तमाङ्गे पितुरनवजितन्यस्तहेतेरुपेतः**
**कल्पाग्निः पाण्डवानां द्रुपदसुतचमूघस्मरो द्रौणिरस्मि ॥ ३७ ॥**

**धृतराष्ट्रः**—( आकर्ण्य सहर्षम् । ) वत्स दुर्योधन द्रोणवधपरिभवो-द्दीपित[2]क्रोधपावकः पितुरपि समधिकबलः शिक्षावानमरोपमश्चाय[3]मश्व-त्थामा प्राप्तः । तत्प्रत्युपगमनेन तावदयं संभाव्यतां वीरः ।

**गान्धारी**—जात प्रत्युद्गच्छैनं महाभागम् । ( क )

**दुर्योधनः**—तात अम्ब किमनेनाङ्गराजवधाशंसिना वृथा[4]यौवन-शस्त्रबलभरेण ।

**धृतराष्ट्रः**—वत्स न खल्वस्मिन्काले पराक्रमवतामेवंविधानां वाङ्मात्रेणापि विरा[5]गमुत्पादयितुमर्हसि ।

( प्रविश्य । )

**अश्वत्थामा**—विजयतां कौरवाधिपतिः ।

**दुर्योधनः**—( उत्थाय । ) गुरुपुत्र इत आस्यताम् । ( इत्युपवेशयति । )

**अश्वत्[6]थामा**—राजन्दुर्योधन

**कर्णेन कर्णसु[7]भगं बहु यत्तदुक्त्वा**
**यत्सङ्गरेषु विहितं विदितं त्वया तत् ।**

( क ) जाद पच्चुग्गच्छ एदं महाभाअम् ।

एतानि अहानि त्यक्तम् । ] अहानीत्यत्र कालाध्वनोरत्यन्तसंयोगे इति द्वितीया । तेनाहानि व्याप्येत्यर्थः । अस्मिन् रणे भवतां [प्रौढं स्फीतामिति परिहासोक्तिः । ] विक्रान्तं पराक्रम आसीत् । विक्रान्तमिति भावे क्तः । कीदृशे । वन इव शूरशून्ये । [ अधुना तु न अवजितः अनवजितः चासौ न्यस्ता हेतयो येन स न्यस्तहेतिश्च तस्यानवजितन्यस्तहेतेः पितुः उत्तमाङ्गे स्पर्शं स्मृत्वा उपेतः अहं पाण्डवानां कल्पाग्निः द्रुपदसुतस्य धृष्टद्युम्नस्य घस्मरः नाशकरः । सृघस्यदः क्मरच् इति घसेः क्मरच् । द्रौणिः अस्मि । ] द्रौणिर्द्रोणस्यापत्यम् । अत इञ् इति इञ् प्रत्ययः । किं कृत्वा । पितुरुत्तमाङ्गे स्पर्शं स्मृत्वा । अहं कीदृशः । अनवजितो न केनापि जितः । हेतिरस्त्रम् । कल्पः प्रलयः । घस्मरो नाशकः ॥ ३७ ॥ [ संभाव्यतां संमान्यतां । ] इत आगम्यतामिहोपविशतु ॥ कर्णेनेति । [ कर्णेन यत् कर्णयोः सुभगं तद् बहु उक्त्वा संगरेषु यद्विहितं तत्त्वया विदितम् । हे नृप एष द्रौणिः । अधिरूढा ज्या यत्तदधिज्यं धनुर्यस्य सः अधिज्यधनुः । समासान्तविधेरनित्यत्वान्न अनङ् । अधुना अभ्यमित्रं अमित्राणामभिमुखम् । लक्षणे नाभिप्रती इत्यव्ययीभावः । ]

१ अनवहित. २ वोद्दीत. ३ अयं महात्माश्व०...महावीरः. ४ अस्त्रशिक्षाबललाभ-भारेण; वृथायोधेन समालोकितेन. ५ विरागतामु०. ६ अश्व०—( सास्रम् । ) राज-न्कौरवाधिपते. ७ सुखदं.

द्रौणिस्त्वधिज्यधनुरापतितोऽभ्यमित्र-
मेषोऽधुना त्यज नृप प्रतिकारचिन्ताम्[1] ॥ ३८ ॥

दुर्योधनः—( साभ्यसूयम् । ) आचार्यपुत्र

अवसानेऽङ्गराजस्य योद्धव्यं भवता किल ।
ममाप्यन्तं प्रतीक्षस्व कः कर्णः कः सुयोधनः ॥ ३९ ॥

अश्वत्थामा—( स्वगतम् । ) कथमद्यापि स एव कर्णपक्षपातः अस्मासु च परिभवः । ( प्रकाशम् । ) राजन्कौरवेश्वर एवं भवतु । ( इति निष्क्रान्तः । )

धृतराष्ट्रः—वत्स क एष ते व्यामोहो यदस्मिन्नपि काले एवं-विधस्य महाभागस्याश्वत्थाम्नो वाक्पारुष्येणापरागमुत्पादयसि ।

दुर्योधनः—किमस्याप्रियमनृतं च मयोक्तम् । किं वा [2]नेदं क्रोधस्थानम् । पश्य ।

अकलितमहिमानं क्षत्रियैरात्तचापैः
समरशिरसि युष्मद्भाग्यदोषाद्विपन्नम् ।
परि[3]वदति समक्षं मित्रमङ्गाधिराजं
मम खलु कथयास्मिन्को विशेषोऽर्जुने वा ॥ ४० ॥

धृतराष्ट्रः—[4]वत्स तवापि कोऽत्र दोषः । अवसानमिदानीं भरत-कुलस्य । संजय किमिदानीं करोमि मन्दभाग्यः । ( विचिन्त्य । ) भवत्वेवं तावत् । संजय मद्वचनाद् ब्रूहि भारद्वाजमश्वत्थामानम् ।

स्मरति न भवान्पीतं स्तन्यं विभज्य सहामुना
मम च [5]मृदितं क्षौमं बाल्ये त्वदङ्गविवर्तनैः ।

---

अरातिं लक्ष्यं कृत्वाधुना पतित आगतः । अतो हे नृप प्रतिकारचिन्तां त्यज । मयैव सर्वत्र प्रतीकारः कर्तव्य इति भावः । कीदृशोऽहम् । अधिगता ज्या यत्रेदृशं धनुर्यस्य सः । अत्र धनुषश्च इति विकल्पेनानङ् [ चिन्त्यमेतत् । ] ॥ ३८ ॥ **अवसान इति** । किल निश्चये । कः कर्ण इति । तथा च कर्णसुयोधनयोर्न विशेष इति भावः ॥ ३९ ॥ [ अपरागं विमनस्कत्वम् । ] **अकलितेति** । [ आत्तः चापः यैस्ते आत्तचापास्तैः क्षत्रियैः अकलितः न यथार्थतया ज्ञातः महिमा यस्य तं युष्मद्भाग्यदोषात् । न तु असामर्थ्यादकौशलाद्वा । समरशिरसि विपन्नं नष्टं मृतमित्यर्थः । मम मित्रमङ्गाधिराजं कर्णं समक्षं प्रत्यक्षं परिवदति निन्दति । अतः ] अस्मिन्नश्वत्थामन्यर्जुने वा मम खलु को विशेषः । हे तात तं विशेषं कथय । खलु निश्चयेन तयोः कृत्या न भेद इति भावः ॥ ४० ॥ **स्मरतीति** [ भवानमुना दुर्योधनेन सह विभज्य पीतं स्तनयोर्भवं स्तन्यं गान्धार्याः स्तनपयः ।

---

१ अप्रतिकारदुःखम्. २ नायं. ३ परिभवति. ४ अथवा वत्स. ५ चिराय. ६ मलिनं.

अनुजनिधनस्फीताच्छोकादतिप्रणयाच्च यं-
द्वचनविकृतिष्वस्य क्रोधो मुधा क्रियते त्वया ॥ ४१ ॥

संजयः—यदाज्ञापयति तातः । ( इत्युत्तिष्ठति । )

धृतराष्ट्रः—अपि चेदमन्यत्त्वया वक्तव्यम् ।

यन्मोचितस्तव पिता वितथेन शस्त्रं
यत्तादृशः परिभवः स तथाविधोऽभूत् ।
एतद्विचिन्त्य बलमात्मनि पौरुषं च
दुर्योधनोक्तमपहाय विधास्यसीति ॥ ४२ ॥

संजयः—यदाज्ञापयति तातः । ( इति निष्क्रान्तः । )

दुर्योधनः—सूत साङ्ग्रामिकं मे रथमुपकल्पय ।

सूतः—यदाज्ञापयत्यायुष्मान् । ( इति निष्क्रान्तः । )

धृतराष्ट्रः—गान्धारि इतो वयं मद्राधिपतेः शल्यस्य शिबिरमेव गच्छावः । वत्स त्वमप्येवं कुरु ।

( इति परिक्रम्य निष्क्रान्ताः सर्वे । )

इति पञ्चमोऽङ्कः ।

---

शरीरावयवाच्च इति यत् । तथा च बाल्ये तवाङ्गस्य विवर्तनैः ] त्वदङ्गविवर्तनै-स्त्वच्छरीरपरिवर्तनैः । मृदितं [ लुलितं ] मम क्षौमं पट्टवस्त्रं न स्मरति किम् । यदस्य सुयोधनस्य [ अनुजानां वधेन स्फीतात् वृद्धिं गतात् । स्फायी वृद्धौ इत्यतः स्फायः स्फी निष्ठायामिति स्फीभावः । ] कनिष्ठवधदीप्तात् शोकादतिप्रणयादति-प्रश्रयाच्च तद्वचनविकृतिषु सतीषु त्वया मुधा विफलं क्रोधः क्रियते । न कर्तुमर्ह-सीत्यर्थः ॥४१॥ यदिति । [ यत् तव पिता पाण्डवैः वितथेन असत्येन । गजे मृते त्वं मृत इति भाषणेन शस्त्रं मोचितस्त्याजितः । यत् च तादृशः तथास्थितस्य तथाविधः परिभवः अभूत एतद् विचिन्त्य आत्मनि बलं पौरुषं च विचिन्त्य । यद्वा ] तादृशः प्रसिद्धः । तथाविधस्तत्प्रकारकः । एतद्विचिन्त्यात्मनि बलं सामर्थ्यं पौरुषं च विधास्यसीति वक्तव्यमित्यन्वयः । किं कृत्वा । दुर्योधनोक्तं त्यक्त्वा । केचित्तु विधास्यसीत्यत्र प्रतीकारमिति शेष इत्यूचुः ॥ ४२ ॥

असूत यं रत्नधरो गुणीशो नानागुणाढ्या दमयन्तिकापि ।
जगद्धरं तस्य कृतौ प्रयातो ग्रन्थे मनोहारिणि पञ्चमोऽङ्कः ॥

इति पञ्चमोऽङ्कः ।

---

१ यद्--तद्--विकृतवचने मास्मिन्क्रोधश्चिरं क्रियतां त्वया; यद्वचनविकृतिस्तस्य क्रोधो मुधा क्रियते त्वया. २ यथा.

## षष्ठोऽङ्कः ।

( ततः प्रविशत्यासनस्थो युधिष्ठिरो द्रौपदी चेटी पुरुषश्च । )

**युधिष्ठिरः**—( विचिन्त्य निःश्वस्य च । )

तीर्णे भीष्ममहोदधौ कथमपि द्रोणानले निर्वृते
कर्णाशीविषभोगिनि प्रशमिते शल्ये च याते दिवम् ।
भीमेन प्रियसाहसेन रभसात्स्वल्पावशेषे जये
सर्वे जीवितसंशयं वयममी वाचा समारोपिताः ॥ १ ॥

**द्रौपदी**–( सबाष्पम् । ) महाराज पाञ्चाल्येति किं न भणितम् । (क)

**युधिष्ठिरः**—कृष्णे ननु मया । ( पुरुषमवलोक्य । ) बुधक

**पुरुषः**—देव आज्ञापय ।

**युधिष्ठिरः**—उच्यतां सहदेवः—क्रुद्धस्य वृकोदरस्यापर्युषित-दारुणां प्रतिज्ञामुपलभ्य प्रनष्टस्य मानिनः कौरवराजस्य पदवीमन्वेष्टुमतिनिपुणमतयस्तेषु तेषु स्थानेषु परमार्थाभिज्ञाश्चराः सुसचिवाश्च भक्तिमन्तः पटुपटहरवव्यक्तघोषणाः सुयोधनसंचारवेदिनः प्रतिश्रुत-धनपूजाप्रत्युपक्रियाश्चरन्तु समन्तात्समन्तपञ्चकम् । अपि च ।

---

( क ) महाराअ पञ्चालिए त्ति किं ण भणिदं ।

---

तीर्ण इति । [ भीष्म एव महोदधिस्तस्मिन् कथमपि महता प्रयासेन ] तीर्णेऽतिक्रान्ते । द्रोण एव अनलस्तस्मिन् निर्वृते उपशान्ते । कर्ण एव आशी सर्प-दंष्ट्रा तत्र विषं यस्य तादृशो यो भोगी सर्पस्तमिन् । आशीराश्यहिदंष्ट्रायाम् इति शब्दभेदः । भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः । इति विश्वः [ अमरः । ] यद्यप्यत्रैकपदेनैवापरं गतार्थं तथापि विषोल्वणविषधरज्ञापनार्थं तदुक्तम् । यद्वा । आश्यां विषं यत्र भोगे शरीरे सोऽस्यास्तीत्याशीविषभोगी विषधरः इति व्युत्पत्तिः। न चात्रापि गतार्थता । विशिष्टनाम्नो विवक्षाया अपर्यनुयोज्यत्वादिति दिक् । दिवं स्वर्गम् । स्वल्पावशेषेऽपि जये सति [ प्रियं साहसं यस्य स प्रियसाहसस्तेन ] भीमेनामी सर्वे वयं रभसात् वाचा प्रतिज्ञारूपया जीवितसंशयं समारोपिता इत्य-न्वयः ॥ १ ॥ [ पाञ्चाल्येति मन्निमित्तादेवास्य संग्रामस्य । ननु मया मत्कृतद्यूत-मूलकत्वादस्यानर्थस्येति भावः । ] अपर्युषितां नान्यदिनगामिनीम् । प्रनष्टस्य गुप्तस्य । पटुपटहघोषणाः निपुणं पटहं वादयन्तः । [ पटुः यः पटहस्य दुन्दुभिविशेषस्य रवस्तेन व्यक्ता घोषणा येषां ते तथोक्ताः।] प्रतिश्रुता देयत्वेन प्रतिज्ञाता धनेन पूजया च प्रत्युपक्रिया येषां ते । यद्वा धनं पूजा बहुमानश्च प्रत्युपक्रिया च येषां ते तथोक्ताः।

---

१ ( सचिन्तं निःश्वस्य । ) कष्टं भोः कष्टम् । तीर्णे भीष्ममहार्णवे. २ शल्येपि. ३ अल्पावशेषे; अल्पावशिष्टे. ४ अतःपरं ( पुरुषमवलोक्य । भद्र बुधक उच्यतां सहदेवो यथा इति केचित पठन्ति. ५ अपर्युषितां; प्रतिज्ञां दारुणाम्. ६ मन्त्रिणश्च यथार्था-भिज्ञाश्चराः. ७ पदसंचार. ८ भणासि.

पङ्के वा सैकते वा[1] सुनिभृतपदवीवेदिनो यान्तु दाशा[2]ः
कुञ्जेषु[3] क्षुण्णवीरुन्निचयपरिचया बल्लवाः संचरन्तु ।
व्याधा[4] व्याघ्राटवीषु स्वपरपदविदो ये च रन्ध्रेष्वभिज्ञा
ये सिद्धव्यञ्जना वा प्रतिमुनिनिलयं ते च[5] चाराश्चरन्तु ॥ २ ॥

**पुरुषः**—य[6]थाज्ञापयति देवः ।

**युधिष्ठिरः**—तिष्ठ । ए[7]वं च वक्तव्यः सहदेवः ।

ज्ञेया रहः शङ्कितमालपन्तः सुप्ता रु[8]गार्ता मदिराविधेयाः ।
त्रासो मृगाणां वयसां विरावो नृपाङ्कपादप्रतिमाश्च यत्र ॥ ३ ॥

**पुरुषः**—यदाज्ञापयति देवः । ( इति निष्क्रम्य पुनः प्रविश्य सहर्षम् । ) देव पाञ्चालकः प्राप्तः ।

**युधिष्ठिरः**—त्वरितं प्रवेशय ।

**पुरुषः**—( निष्क्रम्य पाञ्चालकेन सह प्रविश्य । ) एष देवः । उपसर्पतु पाञ्चालकः ।

**पाञ्चालकः**—जयतु जयतु देवः । प्रियमावेदयामि महाराजाय देव्यै च ।

---

समन्तपञ्चकं कुरुक्षेत्रासन्नवर्ती देशभेदः । पङ्क इति । पङ्के कर्दमे [ पङ्कमयदेशे इत्यर्थः । सैकते वालुकामयप्रदेशे वा । सिकताशर्कराभ्यामित्यण् मत्वर्थे । सुनिभृतामतिगूढां पदवीं पद्धतिं विदन्तीति वेदिनः दाशाः धीवराः यान्तु दुर्योधनान्वेषणायेति शेषः । कैवर्ते दाशधीवरौ इत्यमरः । कुञ्जेषु लतादिपिहितेषु स्थानेषु क्षुण्णः क्षतः यः] वीरुन्निचयो लतासंघस्तस्य परिचयो ज्ञानं येषां ते । बल्लवा गोपाः संचरन्तु । [ ये व्याधाः स्वेषां परेषां च पदानि विदन्ति इति स्वपरपदविदः ये च रन्ध्रेषु गुहादिविषये अभिज्ञाः ते । व्याघ्रप्रचुरा अटव्यः व्याघ्राटव्यस्तासु । शाकपार्थिवादिवत्समासः । चरन्तु । ये वा ये च चाराः सिद्धानां योगिनां व्यञ्जनं येषां ते तथा । मुनिनिलये मुनिनिलये प्रतिमुनिनिलयं चरन्तु । ]नागव्याघ्रप्रधाना अटव्यो वनानि । तासु श्वपचपुरविदश्चाण्डालपुरवेदिनः संचरन्तु । नागो हस्ती । निषादश्वपचावन्तेवासिचाण्डालपुक्कसाः । इत्यमरः । रन्ध्रेषु परच्छिद्रेषु । सिद्धव्यञ्जनाः सिद्धपुरुषचिह्नवन्तः । चरा एव चाराः । प्रज्ञादित्वात्स्वार्थेऽण तथा च यत्र ये निपुणास्तत्र ते गच्छन्त्विति भावः ॥२॥ ज्ञेया इति । रह एकान्ते शङ्कितं शंकास्पदमालपन्तो जना ज्ञेयाः । एवं सुप्ता ज्ञेयाः [रुजा आर्ता ज्ञेयाः मदिराया विधेया दासाः]मदिराविधेया मत्ताः च ज्ञेयाः । [यत्र यस्मिन् स्थाने मृगाणां त्रासः भीतिः । तत्कृताः चेष्टा इत्यर्थः । यत्र वयसां विरावः । मानुषप्रवेशात् । स च मानुषः कदाचिद्दुर्योधनः स्यादितिहेतोस्तदपि ज्ञेयम् । ] नृपांको राजचिह्नं मत्स्यादि यत्र पादप्रतिमायां ताश्च यत्र तानि स्थानानि ज्ञेयानीत्यन्वयः । वयः पक्षिणि बाल्ये च इति विश्वः । प्रतिमा प्रतिकृतिः ॥ ३ ॥

---

१ वाप्सु च परपदवी. २ दासाः. ३ कुञ्जेष्वाक्रान्तवीरुन्निचय--कर--परिचयाः; कक्षेषु ( टी. ) ४ नागव्या० स्वपचपरविदो ( टी. );--स्वपरपदविदो ब्रह्मदेशे च संस्थाः. ५ तेषु. ६ यदा०. ७ इदमपरं. ८ रुगार्ताश्च वने विचेयाः.

**युधिष्ठिरः**—भद्र पाञ्चालक कच्चिदासादिता तस्य दुरात्मनः कौ[1]रवाधमस्य पदवी ।

**पाञ्चालकः**—देव न केवलं पदवी । स एव दुरात्मा देवीकेशा[2]म्बराकर्षणमहापातकप्रधानहेतुरुपलब्धः ।

**युधिष्ठि[3]रः**—साधु । भद्र प्रियमावेदितं । अथ दर्शनगोचरं गतः ।

**पाञ्चालकः**—देव समरगोचरं पृच्छ ।

**द्रौपदी**—( सभयम् । ) कथं समरगोचरो वर्तते मे नाथः । (क)

**युधिष्ठिरः**—( साशङ्कम् ) सत्यं समरगोचरो मे वत्सः ।

**पाञ्चालकः**—सत्यम् । किमन्यथा वक्ष्यते महाराजाय ।

**युधिष्ठिरः**—

> **त्रस्तं विनापि विषयादुरुविक्रमस्य**
> **चेतो विवेकपरिमन्थरतां प्रयाति ।**
> **जानामि चो[4]द्यतगदस्य वृकोदरस्य**
> **सारं रणेषु भुजयोः परिशङ्कि[6]तश्च ॥ ४ ॥**

( द्रौपदीमवलोक्य[7] । ) अयि सुक्षत्रिये

> **गुरूणां बन्धूनां क्षितिपतिसहस्रस्य च पुरः**
> **पुराभूदस्माकं नृपसदसि योऽयं परिभवः ।**
> **प्रिये प्रायस्तस्य द्वितयमपि पारं गमयति[8]**
> **क्षयः प्राणानां नः कुरुपतिपशोर्वा[9]यं[10] निधनम् ॥ ५ ॥**

---

( क ) कहं समरगोअरो वट्टइ मे णाहो ।

---

[ देव्याः केशाश्च अम्बराणि च तेषामाकर्षणं एव महापातकं तस्य]प्रधानहेतुर्मुख्यनिमित्तम् ॥ अथ प्रश्ने । दर्शनगोचरं दृष्टिविषयम् ]॥ **त्रस्तमिति** ॥ प्रियस्य चेतो विवेकमान्द्यमुपैति । कीदृशम् । उरुः विक्रमो यस्य तस्य पुरुषस्य विषयात्त्रासहेतोर्विनापि त्रस्तमिति वस्तुस्थितिः । प्रकृते तां योजयति—जानामीति । परिशङ्कितं सावधानम् । विषयादिति विनायोगे पञ्चमी । भ्रातुर्विनापि विजयादुरुविक्रमस्य इति पाठे मम चेतो विवेकपरिमन्थरतामुपैत्युरुविक्रमस्य भ्रातुर्विजयाद्विनापि । शत्रुणा यद्यपि मम भ्राता न जितस्तथापि स्नेहान्मम चित्तमांद्यमित्यर्थः ॥ ४ ॥ **गुरूणामिति** । हे प्रिये तस्य परिभवस्य द्वितयमेव कर्म पारं गमयति । अपिरेवार्थे । तदेवाह-

---

१ कौरवापसदस्य दुरात्मनः पदवी. २ केशपाशस्पर्शपातक; केशस्पर्शमहापातक. ३ सहर्षं पाञ्चालकं परिष्वज्य; सहर्षं परिष्वज्य पारितोपिकं भूषणं प्रयच्छति । साधु भद्र साधु भवता प्रियमावेदितं । अपि दर्शनगोचरं गतः. ४ उद्धतगदस्य. ५ विजये. ६ परिशङ्कितंच. ७ लोक्य मुखादस्या बाष्पमपनयति । ८ गमयितुं; गमयतु. ९ वा. १० तस्य निधनम्; वापि समरे.

अथवा कृतं संदेहेन ।

नूनं तेनाद्य वीरेण प्रतिज्ञाभङ्गभीरुणा ।
बध्यते केशपाशस्ते स चास्या[1]कर्षणक्षमः ॥ ६ ॥

पाञ्चालक [2]कथय कथय कथमुपलब्धः स दुरात्मा कस्मिन्नुद्देशे किं वाधुना प्रवृत्तमिति ।

**द्रौपदी**—भद्र कथय कथय । (क)

**पाञ्चालकः**–शृणोतु देवो देवी च । अस्तीह देवेन हते [3]मद्राधिपतौ शल्ये गान्धार[4]राजकुलशलभे सहदेवशस्त्रानलं प्रविष्टे सेनापतिनिधन-नि[5]राक्रन्दविरलयोधोज्झितासु समरभूमिषु रिपु[6]बलपराजयोद्धतवल्गित-विचित्रपराक्रमासादितविमुखारातिचक्रासु धृष्टद्युम्नाधिष्ठितासु च युष्म-त्सेनासु प्रनष्टेषु कृपकृतवर्माश्वत्थामसु तथा [7]दारुणामपर्युषितां प्रतिज्ञामुप-लभ्य कुमारवृकोदरस्य न ज्ञायते क्वापि प्रलीनः स दुरात्मा कौरवाधमः ।

**युधिष्ठिरः**—ततस्ततः ।

**द्रौपदी**—अयि परतः कथय । (ख)

**पाञ्चालकः**—अवधत्तां देवो देवी च । ततश्च भगवता वासु-देवेनाधिष्ठितमेकरथमारूढौ कुमा[8]रभीमार्जुनौ समन्तात्समन्तपञ्चकं पर्यटितुमारब्धौ तमनासादितवन्तौ च । अनन्तरं दैवमनुशोचति

(क) भद्द कहेहि कहेहि । (ख) अयि परदो कहेहि ।

क्षय इति । नोऽस्माकं प्राणविनाशः कुरुपतिपशोः प्राणविनाशो वा । तदुभय-मित्यर्थः ॥ ५ ॥ **नूनमिति** । [नूनमद्य प्रतिज्ञाभङ्गभीरुणा तेन वीरेण भीमेन ते केशपाशः केशकलापः बध्यते । स च अस्य केशपाशस्य आकर्षणक्षमो दुर्योधनो वध्यते] नाश्यते च । बन्ध बन्धने । वध हिंसायाम् । इत्येतयो रूपम् ॥ ६ ॥ [गान्धारराजकुलं शकुनिकुलं तत्र शलभ इव तस्मिन् । नितरामत्यन्तमाक्रोशो येषां ते निराक्रन्दाश्च ते विरलाश्च योधाः शत्रुपक्ष्यास्तैः उज्झितासु । रिपुबलपराजयेन उद्धतं वल्गितं यासां ताः । विचित्रपराक्रमेण आसादितं विमुखं समरपराङ्मुखं अरातिचक्रं याभिस्तास्तथाभूतास्तासु ।] वल्गितं गतिविशेषः । आसादित आक्रान्तः । तथा दारुणां प्रतिज्ञापूरणाभावे निजवधरूपाम् । [अपर्युषितामनन्यदिन-गामिनीम् ।] इतः परतः । पर्यटितुं भ्रमितुम् । [बीभत्सुरर्जुनः ।] खद्योतो

१ आकर्षणे क्षमः; प्रभुः. २ कथमुपलब्धः कस्मिन्नुद्देशे किमधुना प्रवृत्तं कथय. ३ मद्राधिपे; मद्रपतौ. ४ राजशलभकुले सहदेवानलं सहदेवशस्त्रानलमनुप्रविष्टे गान्धारराजशलभे. ५ निरानन्द–; नराक्रन्द–. ६ रिपुपरा०–वेल्लित्-चलित. ७ दारुणां प्रतिज्ञा०. ८ अर्जुनौ वयं च समन्तात्समन्तपञ्चकं पर्यटितुमारब्धास्तमनार्यमनासादितवन्तश्च इ पा. ९ अगदो.

मादृशे भृत्यवर्गे दीर्घमुष्णं च निश्वसति[1] कुमारे बीभत्सौ जलधर-समयनिशासंचारित[2]तडित्प्रकरपिङ्गलैः कटाक्षैरादीपयति गदां वृकोदरे यत्किंचनकारितामधिक्षिपति विधेर्भगवति नारायणे कश्चित्संविदितः कुमारस्य मारुतेरुज्झितमांसभारः प्रत्यग्रविशसितमृगै[3]र्लोहितचरण-निवसनस्त्वरमाणोऽन्तिक[4]मुपेत्य पुरुषः परुषश्वासग्रस्तार्धश्रुतवर्णा-नुमेयपदया[5] वाचा कथितवान्—देव कुमार अस्मिन्महतोऽस्य सरसस्तीरे द्वे पदपद्धती समवतीर्ण[6]प्रतिबिम्बे। तयोरेका स्थलमुत्तीर्णा न द्वितीया[7]। परत्र कुमारः प्रमाणम् इति। ततः ससंभ्रमं प्रस्थिताः सर्वे वयं तमेव[8] पुरस्कृत्य। गत्वा च सरस्तीरं परिज्ञायमानसुयोधन-पदलाञ्छनां पदवीमासाद्य भगवता वासुदेवेनोक्तम्—भो वीर वृकोदर जानाति किल सुयोधनः सलिलस्तम्भनीं विद्याम्। तन्नूनं तेन त्वद्भयात्सरसीमेनामधिशयितेन भवितव्यम्। एतच्च वचनमुप-श्रुत्य रामानुजस्य[9] सकलदिङ्निकुञ्जपूरितातिरिक्तमुद्भ्रान्तसलिलचर-शकुन्तकुलं त्रासोद्धतनक्रग्राहमालोड्य सरःसलिलं भैरवं च गर्जित्वा कुमारवृकोदरेणाभिहितम्—अरे रे वृथाप्रख्यापितालीकपौरुषाभि-मानिन् पाञ्चालराजतनया[10]केशाम्बराकर्षणमहापातकिन् धार्तराष्ट्रापसद

---

ज्योतिरिङ्गणः इत्यमरः। पिङ्गला कपिशा। आदीपयत्युद्योतयति सति। [ यत्किंच-नकारितां यत्किंचन कर्तुं शीलं यस्य तस्य भावो यत्किंचनकारिता ताम्।] यत्र तत्रा-नुसंधानादिकम्। [अधिक्षिपति निन्दति।] संविदितः ख्यातः पुरुषः कुमारमारुते-रन्तिकमुपेत्य वाचा कथितवानित्यन्वयः। लोहितं रक्तम्। श्वासग्रस्तोऽर्धश्रुतो यो वर्णोऽक्षरं तेनानुमेयं पदं यस्यास्तथा। [समवतीर्णानि प्रतिबिम्बानि ययोस्ते तथा।] प्रमाणमग्रिमतर्के कुमार एव कर्तेत्यर्थः। सरसीमिति अधिशीङ्स्थासां कर्म इत्याधारे कर्म। रामानुजः कृष्णः। [सकलासु दिक्षु ये निकुञ्जा गह्वराणि तेषु पूरितं च तदति-रिक्तं च। उद्भ्रान्तं सलिलचराणां शकुन्तानां पक्षिणां कुलं यत्र यस्मिन्कर्मणि तद्यथा तथा इति वा। त्रासेन उद्धता नक्रा ग्राहाश्च यस्मात्—यस्मिन् कर्णामि तद्यथा तथा इति वा।] नक्रो जलजन्तुभेदः। ग्राहो गोह इति प्रसिद्धः। वृथा प्रख्यापितं यदलीकं

---

१ निश्वसति बन्धुवर्गे. २ ०रितखद्योत. ३ मृगा०; मृगलोहितलोहित. ४ अस्मदन्तिकं. ५ ०मेयसमुदाचारः कथितवान्. ६ जलमवतीर्णे. ७ द्वितीया लक्षिता; समवतीर्णपद प्रति-बिम्बे। तयोरेका जलोत्तीर्णा न द्वितीया. ८ तमेव पुरुषं पुरस्कृत्य सरसस्तीरम्। परिज्ञाय सुयोधनपदलाञ्छितां पदवीं कथितं भगवता वासुदेवेन. ९ सकलनिकुञ्जपूरिताशा-तिरिक्तमुद्भ्रान्तसलिलचरशतसंकुलं त्रासोद्वृत्तनक्र०; बलानुजस्य सकलदिक्प्रपूरिता-तिरिक्तमुद्भ्रान्तसकलसलिलचारिचक्रं त्रासोद्धतनक्रमालोडितं सरःसलिलं; त्रासोद्भ्रान्तम-त्स्यग्राहमालोडितं सरः. १० द्रुपदसुता.

जन्मेन्दोरमले[1] कुले व्यपदिशस्यद्यापि धत्से गदां
मां दुःशासनकोष्णशोणितमधुक्षीवं रिपुं मन्यसे[2] ।
दर्पान्धो मधुकैटभद्विषि हरावप्युद्धतं चेष्टसे
मात्त्रासान्नृपशो[3] विहाय समरं पङ्केऽधुना लीयसे ॥ ७॥

अपि च । भो मानान्ध[4]

पाञ्चाल्या मन्युवह्निः स्फुटमुपशमितप्राय एव[6] प्रसह्य
व्यासक्तैः[7] केशपाशैर्हतपतिषु मया कौरवान्तःपुरेषु ।
भ्रातुर्दुःशासनस्य स्त्रवदसृगुरसः पीयमानं निरीक्ष्य
क्रोधात्किं[5] भीमसेने विहितमसमये यत्त्वयास्तोऽभिमानः ॥ ८॥

**द्रौपदी**——नाथ अपनीतो मे मन्युर्यदि पुनरपि सुलभं दर्शनं भविष्यति । (क)

**युधिष्ठिरः**——कृष्णे नामङ्गलानि व्याहर्तुमर्हस्यस्मिन्काले । भद्र ततस्ततः ।

**पाञ्चालकः**——देव ततश्चैवं भाषमाणेन वृकोदरेणावतीर्य क्रोधोद्धतभ्र्[8]मितभीषणगदापाणिना सहसैवोल्लङ्घिततीरमुत्सन्ननलिनीवनम-

(क) णाह अवणीदो मे मण्णु जइ पुणो वि सुलहं दंसणं भविस्सदि ।

पौरुषं तस्याभिमानो विद्यतेऽस्य ।] जन्मेति [व्यपदिशासि कथयसि । दुःशासनस्य कोष्णं किंचिदुष्णं शोणितमेव मधु तेन तत्पानेन क्षीबं मत्तम् । कोष्णमित्यत्र ईषदर्थे इति कोः कादेशः ।] क्षीबं मत्तम् । [दर्पेणान्धो विवेकशून्यः । मधुकैटभद्विषि तन्नामकदैत्यारौ । उद्धतमविनयेन भाषसे ।] नृपशो जनाधम । इह क्षतिनामावमर्शसंधिः । यदाह——अधिक्षेपोक्तिः क्षतिर्मता इति ॥ ७ ॥ पाञ्चाल्या इति । कौरवान्तःपुरेषु मया [प्रसह्य बलाद् हताः पतयो येषां तेषु] हतपतिषु सत्सु तदीयकेशपाशैर्व्यासक्तैः संबद्धैः [व्यस्यस्तैः] द्रौपद्या मन्युवह्निरुपशमितप्राय एवेत्यन्वयः । दुःशासनवक्षसः स्रवद्रक्तं मया पीयमानमालोक्य त्वया मयि भीमसेने किं विहितं यदसमयेऽकाले [प्रतिकारोचिते काले सत्यपीत्यर्थः ।] एव मानोऽस्तस्त्यक्तस्त्वया । इदानीं स कर्तुमर्हतीति भावः ॥ ८ ॥ अपनीतो नाथेन मम मन्युर्यदि पुनरपि सुलभदर्शनः स भविष्यति । [क्रोधेनोद्धतमुद्भटं यथा तथा भ्रामिता या भीषणा गदा सा पाणौ यस्य । उत्सन्नमुध्वस्तं नलिनीवनं यस्मिन् । अपविद्धा विक्षिप्ता अत एव मूर्छिता ग्राहा यस्मिन् ।] परिघोऽस्त्रभेदः । परिघः परिघातनः इत्यमरः ।

१ विमले. २ सुराक्षीवं रिपुं भाषसे. ३ त्रासान्मे. ४ कौरवाधम. ५ क्रोध. ६ एव. ७ व्यामुक्तैः, प्रोन्मुक्तैः. ८ भ्रमितभीषणगदापरिशकपाणिना–मुत्सन्नफुल्लनलिनीवनमाविद्ध... वारववेगभ्रमितवारि–; वीर्यक्रोधोद्धत...नलिनमाविद्धमूर्च्छितग्राहमुद्भ्रान्तसमस्तशकुन्तमतिभैरवं वेगभ्रमित; वीर्यक्रोधोद्धतभीमगदा सहसोल्लासिततीर०...क्रोधोद्धतं गदापरिघपाणिना (टी.)

पविद्धमूर्च्छितग्राहमुद्भ्रान्तमत्स्यशकुन्तमतिभैरवा(व)भ्रमितवारिसंचयमायतमपि तत्सरः समन्तादालोडितम् ।

**युधिष्ठिरः**——भद्र तथापि किं नोत्थितः ।

**पाञ्चालकः**——देव कथं नोत्थितः ।

> त्यक्त्वोत्थितः सरभसं सरसः स मूल-
> मुद्भूतकोपदहनोग्रविषस्फुलिङ्गः ।
> आयस्तभीमभुजमन्दरवेल्लनाभिः
> क्षीरोदधेः सुमथितादिव कालकूटः ॥ ९ ॥

**युधिष्ठिरः**——साधु सुक्षत्रिय साधु ।

**द्रौपदी**——प्रतिपन्नः समरो न वा । (क)

**पाञ्चालकः**——उत्थाय च तस्मात्सलिलाशयात्करयुगलोत्तम्भित-तोरणीकृतभीमगदः कथयति स्म——अरे रे मारुते किं भयेन प्रलीनं दुर्योधनं मन्यते भवान् । मूढ अनिहतपाण्डुपुत्रः प्रकाशं लज्जमानो विश्रमितुमध्यवसितवानस्मि पातालम् । एवं चोक्ते वासुदेवकिरीटिभ्यां द्वावप्यन्तःसलिलं निषिद्धसमरसमारम्भौ स्थलमुत्तारितौ भीमसुयोधनौ । आसीनश्च कौरवराजः क्षितितले गदां निक्षिप्य विशीर्णरथसहस्रं निहतकुरुशतगजवाजिनरसहस्रकलेवरसंमर्दसंपतद्गृ-

(क) पडिवण्णो समरो ण वा ।

वृकोदरेण सर आलोडितमित्यन्वयः । उल्लङ्घितमतिक्रान्तम् । अपविद्धः परित्यक्तः । [अतिभैरवो य आरवो जलास्फालनशब्दस्तेन भ्रमितः वारिसंचयो यस्य ।] आयतं दीर्घम् ॥ त्यक्त्वेति । सलीलं सहेलम् । कालकूटो विषम् । दुर्योधनकालकूटयोः साम्यमाह——उद्भूतेति । उद्भूतो यः कोपाग्निः स एवोग्रविषस्य स्फुलिङ्गो यत्र स तथा । आयस्तः क्षिप्तः [आयस्तौ विक्षिप्तौ भीमस्य भुजावेव मन्दरस्तस्य वेल्लनाभिः] वेल्लना चालनम् ॥ ९ ॥ अत्र प्रतिपन्नो लग्नः [करयुगलेन] उत्तम्भितोत्तोलितात एव तोरणसदृशी कृता गदा येन स तथा । [विशीर्णानि भग्नानि विदलितानि वा रथानां तत्संज्ञक-

१ सलिलं सलीलं (टी);--उद्भ्रान्तकोप०; ०दहनो विषविस्फुलिङ्गः. २ आयत्त--. ३ क्षीराम्बुधेः सुमथनादिव, क्षीरोदधिप्रमथनादिव. ४ घोर. ५ भवतो भयेन...समर्थयसे--कथयसि. ६ विश्रामार्थम्; विश्रान्तिमध्यवसितवानहमस्मि । अतोऽलमलम् । ७ तीर. ८ शत...संपतित...जम्बुकमुत्सन्नसुयोधनबलमस्मद्वीरमुक्तसिंहनादसंवालितसमरतूर्यमबान्धवममित्रबान्धवं कौरवसंग्रामस्थानमवलोक्य; जम्बुकमुत्सन्नयोधमस्मद्वीर...तूर्यमबान्धवममित्रमकौरवं.

भकङ्कजम्बूकमुत्सन्नसुयोधमस्मद्वीरमुक्तसिंहनादमपमित्रबान्धवमकौरवं रणस्थानमवलोक्यायतमुष्णं च निःश्वसितवान् । ततश्च वृकोदरेणाभिहितम्—अयि भोः कौरवराज कृतं [1]बन्धुनाशदर्शनमन्युना । मैवं [2]विषादं कृथाः पर्याप्ताः [3]पाण्डवाः समरायाहमसहाय इति ।

**पञ्चानां मन्यसेऽस्माकं यं सुयोधं सुयोधन ।**
**[4]दंशितस्यात्तशस्त्रस्य तेन तेऽस्तु रणोत्सवः ॥ १० ॥**

इत्थं च [5]श्रुत्वासूयान्वितां दृष्टिं कुमारयोर्निक्षिप्योक्तवान्धार्तराष्ट्रः ।

**कर्णदुःशासनवधात्तुल्यावेव युवां मम ।**
**अप्रियोऽपि प्रियो योद्धुं त्वमेव प्रियसाहसः ॥ ११ ॥**

इत्युत्थाय परस्पर[6]क्रोधाधिक्षेपपरुषवाक्कलहप्रस्तावितघोरसङ्ग्रामौ [7]विचित्रविभ्रमभ्रमितगदापरिभासुरभुजदण्डौ मण्डलैर्विचरितुमारब्धौ भीमदुर्योधनौ । [8]अहं च देवेन चक्रपाणिना देवसकाशमनुप्रेषितः । आह च देवो देवकीनन्दनः । अपर्युषितप्रतिज्ञे च मारुतौ प्रनष्टे कौरवराजे महानासीन्नो विषादः । संप्रति [9]पुनर्भीमसेनेनासादिते सुयोधने

---

योधानां वा सहस्राणि यस्मिन् । निहतं यत्कुरुशतं तस्य गजवाजिनरसहस्राणां च कलेवराणि तेषां संमर्दस्तस्मिन् पतन्तो गृध्राश्च इ० यस्मिन् । ] कलेवरं शरीरम् । जंबूकः शृगालः । [ अपगता मित्राणि बान्धवाश्च यस्मात् । पर्याप्ता आगताः [ समर्थाः । ] **पञ्चानामिति** । अस्माकं मध्ये । [ सुयोधं योद्धुं समर्थं । ] दंशितस्य कृतसन्नाहस्य । तेन सह तव रणोत्सवोस्त्विति संबन्धः । तेनेति सहार्थे तृतीया ॥ १० ॥ कुमारयोर्भीमार्जुनयोः । **कर्णेति** । हे भीम त्वमेव योद्धुं प्रियः । कीदृशः । अमित्रः साहसी च ॥ ११ ॥ [ परस्परस्य यः क्रोधेनाधिक्षेपो निन्दा तत्र या परुषवाक् तया कलहस्तेन प्रस्तावितो घोरसंग्रामो याभ्याम् । विचित्रो विविधो यो विभ्रमस्तेन भ्रमिता गदा तया परिभासुरौ भुजदण्डौ ययोस्तौ । ] विभ्रमो विलासः । मण्डलं करणविशेषः । [ अपर्युषिता प्रतिज्ञा यस्य तादृशे ।

---

१ बन्धुजननाशजेन; --अलं बन्धुजनमन्युना; ०जननाश— ०दर्शनजात--मन्युना. २ विषादं मा कृथाः. ३ पाण्डवाः सोऽहमसहाय इति । किं च । ४ वर्मितस्य. ५ किंचिदश्रुपातान्वितां; इत्थं श्रुत्वासूयात्मिकां निक्षिप्य कुमारयोर्दृष्टिमिति दशरूपके पाठः. ६ क्रोधाक्षेप...प्रसारितघोर०; परस्पराक्षेपप्रवर्तितघोर--. ७ चित्रगदापरिघभासुरभुजभरौ मण्डलैर्विहर्तुमारब्धौ; चिरभ्रामितगदापरिघभासुरभुजपञ्जरौ मण्डलैश्चरितुमारब्धौ. ८ अत्रान्तरेऽहं. ९ पुनरस्मिन्दुरात्मनि सुयोधने भीमसेनेना--.

निष्कण्टकीभूतं भुवनतलं परिकलयतु भवान्। अभ्युदयोचिताश्चा-नवरतं प्रवर्त्यन्तां मङ्गलसमारम्भाः। कृतं संदेहेन।

पूर्यन्तां सलिलेन रत्नकलशा राज्याभिषेकाय ते
कृष्णात्यन्तचिरोज्झिते च कबरीबन्धे करोतु क्षणम्।
रामे शातकुठारभासुरकरे क्षत्रद्रुमोच्छेदिनि
क्रोधान्धे च वृकोदरे परिपतत्याजौ कुतः संशयः॥ १२॥

**द्रौपदी**—(सबाष्पम्।) यद्देवस्त्रिभुवननाथो भणति तत्कथ-मन्यथा भविष्यति। (क)

**पाञ्चालकः**—न केवलमियमाशीः। असुरनिषूदनस्यादेशोऽपि।

**युधिष्ठिरः**—को हि नाम भगवता संदिष्टं विकल्पयति। कः कोऽत्र भोः।

(प्रविश्य।)

**कञ्चुकी**—आज्ञापयतु देवः।

**युधिष्ठिरः**—देवस्य देवकीनन्दनस्य बहुमानाद्वत्सस्य मे विजय-मङ्गलाय प्रवृत्यन्तां तदुचिताः समारम्भाः।

**कञ्चुकी**—यथाज्ञापयति देवः। (सोत्साहं परिक्रम्य।) भो भोः संविधातॄणां पुरःसराः यथाप्रधानमन्तर्वेश्मिका दौवारिकाश्च एष

---

(क) जं देवो त्तिहुअणणाहो भणादि तं कहं अण्णहा भविस्सदि।

---

प्रतिज्ञाया अपर्युषितत्वादित्यर्थः। ] प्रनष्टेऽदृष्टे । समारम्भा मङ्गलादिक्रियाः । पूर्यन्तामिति । [ रत्नखचिताः कलशा रत्नकलशाः सलिलेन तीर्थजलेन। तस्यैव तत्रोपयोगित्वात् ] कबरी केशवेशः। क्षणो मुहूर्तोत्सवयोः इति शाश्वतः। कबरी-बन्ध इति निमित्तसप्तमी। रामे परशुरामे। [ शातः तेजितः। शाणादिना तीक्ष्ण-धारः कृत इत्यर्थः। निशितक्ष्णुतशातानि तेजिते। इत्यमरः। कुठारस्तेन भासुरः करः यस्य तस्मिन्। ] शातं निशितम्। परिपतति गच्छति सति॥ १२॥ आज्ञा निदेशः। [ विकल्पयति अनुष्ठेयं नवानुष्ठेयमिति विचारयति। न कोपीत्यर्थः। ] संविधाता [समारंभविधायी]पुरोहितादिः। [प्रधानमनतिक्रम्य] यथाप्रधानं प्रधानपुरुषानुक्रमेण। अन्तर्वेश्मिका अन्तःपुरचारिणः। [ अन्तर्वंशिका इति पाठे अन्तराभ्यन्तरौ वंशः गृहमन्तर्वंशः। तत्र नियुक्ताः। संज्ञापूर्वकत्वान्न वृद्धिः। ] दौवारिका द्वारनियुक्ताः।

---

१ प्रवर्त्यन्तामनवरतमङ्गलसमारम्भाः २ राज्ये. ३ घोर...द्रुमच्छेदिनि. ४ किमन्यथा संभावितेन। मधुसूदनस्यादेश एवायम् इ. क्वचित्पा. ५ मङ्गलाशंसया; देवकीनन्दन-स्यादेशाद्वत्सस्य मे मङ्गलविजयाय; कञ्चुकिन् देवस्य... ०वत्सस्य भीमसेनस्य... तत्रोपचिताः. ६ अन्तर्वासिकाः; अन्तर्वेश्मनि. ७ आणवेदि.

खलु भुजबलपरिक्षेपोत्तीर्णकौरैवपरिभवसागरस्य निर्व्यूढदुर्वहप्रतिज्ञा-भारस्य सुयोधनानुजशतोन्मूलनप्रभञ्जनस्य दुःशासनोरःस्थलविदलन-नारसिंहस्य दुर्योधनोरुस्तम्भभङ्गविनिश्चितविजयस्य बलिनः प्राभञ्जने-र्वृकोदरस्य स्नेहपक्षपातिना मनसा मङ्गलानि कर्तुमाज्ञापयति देवो युधिष्ठिरः । ( आकाशे । ) किं ब्रूथ—सर्वतोऽधिकतरमपि प्रवृत्तं किं नालोकयसि इति । साधु पुत्रकाः साधु । अनुक्तहितकारिता हि प्रकाशयति मनोगतां स्वामिभक्तिम् ।

**युधिष्ठिरः**—आर्य जयंधर ।

**कञ्चुकी**—आज्ञापयतु देवः ।

**युधिष्ठिरः**—गच्छ प्रियख्यापकं पाञ्चालकं पारितोषिकेण परितोषय ।

**कञ्चुकी**—यदाज्ञापयति देवः । ( इति पाञ्चालकेन सह निष्क्रान्तः । )

**द्रौपदी**—महाराज किंनिमित्तं पुनर्नाथभीमसेनेन स दुराचारो भणितः—पञ्चानामप्यस्माकं मध्ये येन ते रोचते तेन सह ते सङ्ग्रामो भवतु इति । यदि माद्रीसुतयोरेकतरेण सह सङ्ग्रामस्तेन प्रार्थितो भवेत्ततोऽस्याहितं भवेत् । ( क )

---

(क) महाराअ किंणिमित्तं उण णाहभीमसेणेण सो दुराआरो भणिदो—पञ्चाणं वि अह्माणं मज्झे जेण दे रोअदि तेण सह दे संगामो होदु त्ति । जइं मद्दीसुदाणं एकदरेण सह संगामो तेण पत्थिदो भवे तदो अच्चाहिदं भवे ।

---

[भुजयोर्बलेन परिक्षेपस्तेनोत्तीर्णः कौरवेभ्यो यः परिभवोवमानना स एव सागरो येन। निर्व्यूढः [ नितरामूढः दुर्वहो दुःखेन वोढुं शक्यः प्रतिज्ञारूपो भारो येन तस्य । सुयो-धनानुजशतस्योन्मूलने प्रभञ्जनस्तस्य । ] प्रभञ्जनो वायुः । प्रभञ्जकस्य भञ्जयितुः । [ दुर्योधनस्य ऊरुभङ्गे भङ्गेन वा विनिश्चितो विजयो यस्य । ] प्राभञ्जनेर्वायुपुत्रस्य-भीमस्य । अत इञ् इत्यपत्यार्थे इञ् । [ अधिकतरमुक्तसविशेषम् । ] मङ्गलकर्मेति शेषः । हितं करोतीति हितकारी तस्य भावो हितकारिता । अनुक्ता स्वाम्यादेशं विना कृता हितकारिता । ] पारितोषिकेण परितोषहेतुना धनेन । अथ किंनिमित्तं ...एवं भणितः—यदि पुनर्माद्री०...सङ्गरस्तेन...। अत्र माद्रीसुतौ नकुलसहदेवौ ।

---

१ कौरवार्णवस्य. २ दुर्धर. ३ शतोद्धूनन. ४ भञ्जनाय कृतनिश्चितविजयस्य सहोदर-पक्षपातिना. ५ सर्वमधिकमपि प्रवृत्तमालोकयतु. ६ किंवा. ७ अनुक्तहित. ८ अस्मा-दनन्तरं क्वचित् ( राजानमुपगम्य । ) देव प्रथमत एव सर्वमनुष्ठितम् । इत्याधिकं क्वचित. ९ समरं. १० कहं णाम एदाणं मद्दीसुदाणं एकदरेण पत्थिदो तेण संगामो.

**युधिष्ठिरः**—कृष्णे [1]एवं मन्यते जरासंधघाती। हतसकलसुहृद्बन्धुवीरानुजराजन्यासु कृपकृतवर्माश्वत्थामशेषास्वेकादशस्वक्षौहिणीष्वबान्धवः शरीरमात्रविभवः कदाचिदुत्सृष्टनिजाभिमानो धार्तराष्ट्रः [2]परित्यजेदायुधं तपोवनं वा व्रजेत्सन्धिं वा पितृमुखेन याचेत। एवं सति सुदूरमतिक्रान्तः प्रतिज्ञाभारो भवेत्सकलरिपुजयस्येति। समरं प्रतिपत्तुं पञ्चानामपि पाण्डवानामेकस्यापि नैव क्षमः सुयोधनः। शङ्के चाहं गदायुद्धं वृकोदरस्यैवानेन। अयि सुक्षत्रिये पश्य।

> **[3]क्रोधाद्गूर्णगदस्य नास्ति सदृशः सत्यं रणे मारुतेः**
> **कौरव्ये कृतहस्तता पुनरियं [4]देवे यथा सीरिणि।**
> **स्वस्त्यस्तू[5]द्धतधार्तराष्ट्रनलिनीनागाय वत्साय मे**
> **शङ्के तस्य सुयोधनेन समरं नैवेतरेषामहम्॥ १३॥**

(नेपथ्ये।)

तृषितोऽस्मि भोस्तृषितोऽस्मि। संभावयतु कश्चित्सलिलच्छायासंप्रदानेन माम्।

**युधिष्ठिरः**—(आकर्ण्य।) कः कोऽत्र भोः।

([6]प्रविश्य।)

**कञ्चुकी**—आज्ञापयतु देवः।

**युधिष्ठिरः**—ज्ञायतां किमेतत्।

---

[हताः सकलाः सुहृद्बन्धुवीराः अनुजाः राजन्याः क्षत्रियाश्च यासु तथाभूतासु। शरीरमेव शरीरमात्रं विभवो यस्य स तथा। सकलान् रिपून् जेष्याम इति प्रतिज्ञाया भारः सुदूरमत्यन्तमतिक्रान्तो निर्वाहयितुमशक्यो भवेत्। एकस्यापि पाण्डवस्य एकेनापि पाण्डवेनेत्यर्थः। समरं प्रतिपत्तुं सुयोधनः न क्षमो न समर्थः। वृकोदरस्य पाण्डवेषु बलिष्ठस्य [एव अनेन सुयोधनेन गदायुद्धं शङ्के। गदायुद्धे तु भीममपि अनेन सह योद्धुं पर्याप्तं न मन्ये इत्यर्थः।] **क्रोधेति**। क्रोधेन उद्गूर्णा उद्यमिता गदा येन स तथा तस्य। उद्गूर्णोद्यते इत्यमरः। [कृतः शस्त्रविक्षेपणे अभ्यस्तः हस्तः यस्य स कृतहस्तः। तस्य भावः कृतहस्तता।] सीरिणि बलभद्रे। [तदुक्तं भारते—उपदेशोनयोस्तुल्यो भीमस्तु बलवत्तरः। कृती यत्नपरस्त्वेष धार्तराष्ट्रो वृकोदरात्॥ गदा० ५८. ३. उद्धता दृप्ता धार्तराष्ट्रा एव नलिन्यः कमलिन्यस्तासां विदलने नागो हस्ती। यद्वा उद्धता धार्तराष्ट्रा एव नलिन्यो येन स चासौ नागः तस्य मङ्गलं कल्याणं भूयात्। यतः तस्य भीमस्य सुयोधनेन समरं गदायुद्धं शङ्के। भीमः तेन सह गदायुद्धे विजयी भवेन्नवेति शङ्के इत्यर्थः। इतरेषां तु गदायुद्धं न भवतीति क्षमा एव ते सुयोधनं जेतुमिति तेषां समरं न शङ्के इति भावः॥ १३॥

---

१ एवं मन्ये तस्य जरासंधघातिनोऽभिप्रायः. २ परित्यज्य. ३ क्रोधाद्; क्रोधाद्गूर्णगदस्य. ४ देवस्य या सीरिणः. ५ उद्धत. ६ प्रविश्य सत्वरं.

**कञ्चुकी**—यदाज्ञापयति देवः। (इति निष्क्रम्य पुनः प्रविश्य।) देव क्षुन्मानतिथिरुपस्थितः।

**युधिष्ठिरः**—शीघ्रं प्रवेशय।

**कञ्चुकी**—यदाज्ञापयति देवः। (इति निष्क्रान्तः।)

(ततः प्रविशति मुनिवेषधारी चार्वाको नाम राक्षसः।)

**राक्षसः**—(आत्मगतम्।) एषोऽस्मि चार्वाको नाम राक्षसः सुयोधनस्य मित्रं पाण्डवान्वञ्चयितुं भ्रमामि। (प्रकाशम्।) तृषितोऽस्मि। संभावयतु मां कश्चिज्जलच्छायाप्रदानेन। (इति राज्ञः समीपमुपसर्पति।)

(सर्व उत्तिष्ठन्ति।)

**युधिष्ठिरः**—मुने अभिवादये।

**राक्षसः**—अकालोऽयं समुदाचारस्य। जलप्रदानेन संभावयतु माम्।

**युधिष्ठिरः**—मुने इदमासनम्। उपविश्यताम्।

**राक्षसः**—(उपविश्य।) ननु भवतापि क्रियतामासनपरिग्रहः।

**युधिष्ठिरः**—(उपविश्य।) कः कोऽत्र भोः। सलिलमुपनय।

(प्रविश्य गृहीतभृङ्गारः।)

**कञ्चुकी**—(उपसृत्य।) महाराज शिशिरसुरभिसलिलसंपूर्णोऽयं भृङ्गारः पानभाजनं चेदम्।

**युधिष्ठिरः**—मुने निर्वर्त्यतामुदन्याप्रतिकारः।

**राक्षसः**—(पादौ प्रक्षाल्योपस्पृशन्विचिन्त्य) भोः क्षत्रियस्त्वमिति मन्ये।

**युधिष्ठिरः**—सम्यग्वेदी भवान्। क्षत्रिय एवास्मि।

**राक्षसः**—सुलभश्च स्वजनविनाशः सङ्ग्रामेषु प्रतिदिनमतो नादेयं

---

[क्षुन्मान् बुभुक्षितः। महाभारते तु अयं राक्षसः युद्धसमाप्त्यनन्तरं महाराजयुधिष्ठिरे राजधानिं प्रविष्टे परिव्राजकरूपत्वेन ब्राह्मणैः सह प्रवेशितः। तदुक्तं शान्तिपर्वणि ३८ शेऽध्याये–ब्राह्मणा ऊचुः–एष दुर्योधनसखश्चार्वाको नाम राक्षसः। परिव्राजकरूपेण हितं तस्य चिकीर्षति॥ इति। अकालः अयुक्तः कालः। समुदाचारस्य शिष्टाचारस्य।] भृङ्गारः कनकालुका इत्यमरः॥ उदन्या तु पिपासा तृट् इत्यमरः। [स्वजनविनाशः अतोऽशौचसम्भावनयेति भावः।

---

१ क्षुधा म्लानो. २ मुनिवेषः. ३ एषोऽस्मि सुयोधनस्य. ४ युधि०—(सहसोत्थाय।) मुने. ५ मां भवान्. ६ उपविश्यतामासने. ७ तथा कृत्वा. ८ अस्मात्परं (सर्व उपविशन्ति।) युधि०—कः कोऽत्र. ९ भो भोः १० सम्यग्वेत्ति. ११ यद्येवं प्रतिदिनसुलभस्वजनविनाशेषु सङ्ग्रामेषु युष्मत्तो नादेयं सलिलादिकम्; सुलभस्वजनविनाशेभ्यः प्रतिदिनमनादेयं भवद्भ्यः सलिलम्.

भवद्भ्यो जलादिकम्। भवतु। छाययैवानया सरस्वतीशिशिरतरङ्ग-स्पृशा मरुता चानेन विगतक्लमो भविष्यामि।

**द्रौपदी**—बुद्धिमतिके वीजय महर्षिमनेन तालवृन्तेन। (क)

(चेटी तथा करोति।)

**राक्षसः**—भवति अनुचितोऽयमस्मासु समुदाचारः।

**युधिष्ठिरः**—मुने कथय कथमेवं भवान्परिश्रान्तः।

**राक्षसः**—मुनिजनसुलभेन कौतूहलेन तत्र भवतां महाक्षत्रियाणां द्वन्द्वयुद्धमवलोकयितुं पर्यटामि समन्तपञ्चकम्। अद्य तु बलेवत्तया शरदातपस्यापर्याप्तमेवावलोक्य गदायुद्धमर्जुनसुयोधनयोरागतोऽस्मि।

(सर्वे विषादं नाटयन्ति।)

**कञ्चुकी**—मुने न खल्वेवम्। भीमसुयोधनयोरिति कथय।

**राक्षसः**—आः अविदितवृत्तांत एव कथं मामाक्षिपसि।

**युधिष्ठिरः**—महर्षे कथय कथय।

**राक्षसः**—[3]क्षणमात्रं विश्रम्य सर्वं कथयामि भवतो न पुनरस्य वृद्धस्य।

**युधिष्ठिरः**—[4]कथय किमर्जुनसुयोधनयोरिति।

**राक्षसः**—ननु पूर्वमेव कथितं मया प्रवृत्तं गदा[5]युद्धमिति।

**युधिष्ठिरः**[6]—न भीमसुयोधनयोरिति।

**राक्षसः**—[7]वृत्तं तत्।

(युधिष्ठिरो द्रौपदी च मोहमुपगतौ।)

---

(क) बुद्धिमादिए वीएहि महेसिं इमिणा तालविन्तेण।

---

सरस्वत्याः शिशिरांस्तरङ्गान्स्पृशतीति तेन।] सरस्वती नदीभेदः। हञ्जे बुद्धिमतिके वीजयैनं महर्षिमेतेन तालवृन्तकेन। व्यजनं तालवृन्तकम् इत्यमरः। [द्वन्द्वयुद्धमिति जातावेकवचनम्। शरदातपस्य शरत्सूर्यातपस्य। अपर्याप्तमसमाप्तम्।] यद्भट्टिनी समाज्ञापयति। बलवत्तर इति स्वार्थिकस्तरप्॥ भवतः

---

१ मुने सर्वं तावत्तिष्ठतु। कथं. २ अत्यन्तबलवत्तया. ३ मुहूर्तं तिष्ठ। ...कथयिष्यामि--; कथयामि भवते।;—भवतो न पुनरस्य वृद्धापसदस्य पुरतः। ४ भगवन् एतावदेव कथय किं पुनरर्जुनसुयोधनयोरिति. ५ ॰युद्धमर्जुनसुयोधनयोरिति। ६ युधि॰—(सास्रम्।) ननु भीमसुयोधनयोः. ७ वृत्तं तदेव। राजा—हा वत्स भीमसेन क्वासि प्रयच्छ मे प्रतिवचनम्। द्रौपदी--णाह भीमसेण कहिं सि। देहि मे पडिवअणम्। (इति मोहमुपागतौ।) कञ्चुकी—महाराज समाश्वसिहि समाश्वसिहि। प्रकृतिमापद्यताम्। चेटी—(देवीं प्रति।) समस्ससदु समस्ससदु देवी। राजा—(संज्ञां लब्ध्वा।) भगवन् किं कथयसि इ. पा.

कञ्चुकी--(सलिलेनासिच्य।) समाश्वसितु देवो देवी च।
चेटी--समाश्वसितु समाश्वसितु देवी। (क)
(उभौ संज्ञां लभेते।)
युधिष्ठिरः--किं कथयसि मुने वृत्तं भीमसुयोधनयोर्गदायुद्धमिति।
द्रौपदी--भगवन् कथय कथय किं वृत्तमिति। (ख)
राक्षसः--कञ्चुकिन् कौ पुनरेतौ।
कञ्चुकी--ब्रह्मन् एष देवो युधिष्ठिर इयमपि पाञ्चालराजतनया।
राक्षसः--आः दारुणमुपक्रान्तं मया नृशंसेन।
द्रौपदी--हा नाथ भीमसेन। (इति मोहमुपगता।) (ग)
कञ्चुकी--किं नाम कथितम्।
चेटी--समाश्वसितु समाश्वसितु देवी। (घ)
युधिष्ठिरः--(सास्रम्) ब्रह्मन्

**पदे संदिग्ध एवास्मिन्दुःखमास्ते युधिष्ठिरः**
**वत्सस्य निश्चिते तत्त्वे प्राणत्यागादयं सुखी ॥ १४ ॥**

राक्षसः--(सानन्दमात्मगतम्।) अत्रैवै[2] मे यत्नः। (प्रकाशम्) यदि[3] त्ववश्यं कथनीयं तदा संक्षेपतः कथयामि। न युक्तं बन्धुव्यसनं विस्तरेणावेदयितुम्।

युधिष्ठिरः--(अश्रूणि मुञ्चन्।)

**सर्वथा कथय ब्रह्मन्संक्षेपाद्विस्तरेण वा।**
**वत्सस्य किमपि श्रोतुमेव[4] दत्तः क्षणो मया ॥ १५ ॥**

---

(क) समस्ससदु समस्ससदु देवी।
(ख) भअवं कहेहि कहेहि किं वुत्तं त्ति।
(ग) हा णाह भीमसेण। (घ) समस्ससदु समस्ससदु देवी।

---

कृते इति शेषः। कथय किं वर्तत इति। [ उपक्रान्तं प्रस्तुतं। नृशंसेन क्रूरेण। ] पद इति। संदिग्धे [ अस्फुटार्थे ] एव पदे भवदुक्ते युधिष्ठिरो दुःखं यथा स्यादेवमास्ते तिष्ठति। [ तत्त्वे निश्चिते यथार्थावस्थायां निश्चयेन ज्ञातायाम्। ] ॥ १४ ॥ सर्वेथेति। किमपीत्यनेनामङ्गल्यं निवारयति। क्षणोवसरः सर्वथा श्रोष्यामीत्यर्थः ॥ १५ ॥

---

१ अहं. २ अयमेव, ममाप्ययमेव. ३ यद्येवमवश्यकथनीयं; यदि वावश्यमेव, यद्येवमेव० संक्षेपेण. ४ एतद्दत्तं मनो मया.

**राक्षसः**—श्रूयताम् ।

तस्मिन् कौरवभीमयोर्गुरुगदाघोरध्वनौ संयुगे

**द्रौपदी**—( सहसोत्थाय ) ततस्ततः । ( क )

**राक्षसः**—( स्वगतम् । ) कथं पुनरनयोर्लब्धसंज्ञतामपनयामि ।

सीरी सत्वरमागतश्चिरमभूत्तस्याग्रतः सङ्गरः ।
आलम्ब्य प्रियशिष्यतां तु हलिना संज्ञा रहस्याहिता
यामासाद्य कुरूत्तमः प्रतिकृतिं दुःशासनारौ गतः ॥ १६ ॥

**युधिष्ठिरः**—हा वत्स वृकोदर । ( इति मोहमुपगतः । )

**द्रौपदी**—हा नाथ भीमसेन हा मम परिभवप्रतीकारपरित्यक्तजीवित जटासुरबकहिडिम्बकिर्मीरकीचकजरासंधनिषूदन सौगन्धिकाहरणचाटुकार देहि मे प्रतिवचनम् । (इति मोहमुपगता । ) ( ख )

**कञ्चुकी**—( सास्रम् । ) हा कुमार भीमसेन धार्तराष्ट्रकुलकमलिनीप्रालेयवर्ष । ( ससंभ्रमम् ) समाश्वसितु महाराजः । भद्रे समाश्वासय स्वामिनीम् । महर्षे त्वमपि तावदाश्वासय महाराजम् ।

**राक्षसः**—( स्वगतम् । ) आश्वासयामि प्राणान्परित्याजयितुम् । (प्रकाशम् । ) भो भीमाग्रज क्षणमेकमाधीयतां समाश्वासः । कथाशेषोऽस्ति ।

---

( क ) तदो तदो ।

( ख ) हा णाह भीमसेण हा मह परिभवपडिआरपरिच्चत्तजीविअ जडासुरबअहिडिम्बाकिम्मीरकीचअजरासंधाणिसूदण सोअन्धिआहरणचाडुआर देहि मे पडिवअणम् ।

---

तस्मिन्निति । घोरं भयानकं [ गुर्व्योर्गदयोः गदाप्रहाराणामिति यावत् । घोरः ध्वनिर्यस्मिन् । सीरी बलभद्रः । ] प्रियः शिष्यो यस्येति प्रियशिष्यः । तस्य भावः प्रियशिष्यता ताम् । [ संज्ञा हस्तचालनेन प्रहारस्थानसूचनम् । ] प्रतिकृतिं प्रतीकारम् । अर्थाद्दुःशासनवधस्य । दुःशासनारौ भीमे । तथा च भीमस्तेन हत इति भावः ॥ १६ ॥ हा नाथ मदीयपरिभवं०—हा जटासुर०—हा सौगन्धिकाहरणात्मचाटुकार क्वासि । अत्र जटासुरो दैत्यभेदः । बको दैत्यभेदः । सौगन्धिकं कमलम् । गङ्गायाः सुवर्णकमलाहरणाद्यद् द्रौपद्या आराधनं तत्र चाटुकारः प्रेम यस्य । [ यद्वा तेन चाटुकार । धार्तराष्ट्रे धार्तराष्ट्रानां वा कुलं तदेव कमलिनी तस्याः प्रालेयवर्ष हिमवर्ष । तद्वन्नाशकर । हिमवृष्ट्या कमलानि विनश्यन्तीति प्रासिद्धिः । तथा च—हिमसेकविपत्तिरत्र मे नलिनी पूर्वनिदर्शनं मता । इति रघौ कालिदासः ]

---

१ भीम. २ द्रौपदी—( लब्धसंज्ञा ) अयि--. ३ मुसलिना. ४ संज्ञा रहः सा कृता. ५ महाराज समाश्वसिहि समाश्वसिहि । ६ अत्रभवतीम

**युधिष्ठिरः**—( समाश्वस्य। ) महर्षे किमस्ति कथाशेषः।

**द्रौपदी**—( प्रतिबुद्ध्वा। ) भगवन् कथय कीदृशः कथाशेष इति।(क)

**कञ्चुकी**—कथय कथय।

**राक्षसः**—ततश्च हते तस्मिन्सुक्षत्रिये वीरसुलभां गतिमुपगते समग्रसंगलितं भ्रातृवधशोकजं बाष्पं प्रमृज्य भ्रातृवधशोकादपहाय गाण्डीवं प्रत्यग्रक्षतजच्छटाचर्चितां तामेव गदां भ्रातृहस्तादाकृष्य[2] निवार्यमाणोऽपि संधित्सुना वासुदेवेन[3] आगच्छागच्छेति सोपहासं भ्रमितगदाझङ्कारमूर्च्छितगम्भीरवचनध्वनिनाहूयमानः[4] कौरवराजेन तृतीयोऽनुजस्ते किरीटी योद्धुमारब्धः। अकृतिस्तनस्य[5] गदाघातान्निधनमुत्प्रेक्षमाणेन कामपालेनार्जुनपक्षपाती देवकीसूनुरतिप्रयत्नात्स्वरथमारोप्य द्वारकां नीतः।

**युधिष्ठिरः**—साधु भो अर्जुन तदेवं[6] प्रतिपन्ना वृकोदरपदवी गाण्डीवं परित्यजता। अहं पुनः केनोपायेन प्राणोपगममहोत्सवमुत्सहिष्ये[7]।

**द्रौपदी**—हा नाथ भीमसेन न युक्तमिदानीं ते कनीयांसं भ्रातरमशिक्षितं गदायां दारुणस्य शत्रोरभिमुखं गच्छन्तमुपेक्षितुम्।[8] ( ख )

( मोहमुपगता। )

---

( क ) भअवं कहेहि कीदिसो कहासेसो त्ति।

( ख ) हा णाह भीमसेण ण जुत्तं दाणिं दे कणीअसं भादरं असिक्खिदं गदाए दारुणस्स सत्तुणो अहिमुहं गच्छन्तं उवेक्खिदुम्।

---

गतिं मरणरूपाम्। [ समग्रं यथा तथा संगलितम्। प्रत्यग्रं नूतनं यत्क्षतजं रक्तं तस्य छटया समूहेन चर्चितां लिप्ताम्। ] संधित्सुना संधिं कर्तुमिच्छुना। [ भ्रमिता या गदा तस्या झङ्कारेण मूर्च्छितो वृद्धिं प्राप्तो यः गम्भीरवचनध्वनिस्तेन। अकृतिनो गदायुद्धेऽलब्धपाटवस्य। अकृतहस्तस्येति यावत्। उत्प्रेक्षमाणेनापेक्षमाणेन। कामपालेन बलभद्रेण। वृकोदरस्य वृकोदरेण भीमेन गता पदवी परलोकमार्ग इत्यर्थः। गाण्डीवं परित्यजता—सति हि गाण्डीवे दुर्योधनकृतस्य पराभवस्याशक्यत्वान्भीमानुमरणस्य दुर्घटत्वादिति भावः। ]हे नाथ भीमसेन युक्तमिदानीं ते कनीयांसं

---

१ भगवन् कथय किं कथाशेषोऽप्यस्त्येव। द्रौप०...किं कहसिसा। कञ्चुकी--कथय कथय। चेटी—कहेहि कहेहि. २ हस्तायत्नाद्. ३ भगवता वासु०. ४ गम्भीरवाद०...—राजेन सह. ५ तथाऽकृति०; तथा कृतिनस्तस्य. ६ एतावत्प्रतिपन्ना वृकोदरानुगमनपदवी. ७ प्राणपरित्यागाद्धृदयमुत्साहयिष्ये. ८ हा णाह भादुवच्छल ण जुत्तं भादरं असिक्खिदं गदाए सत्तुणो मुहं गच्छतं उवेक्खिदुम् इ. पा.

**राक्षसः**—ततश्चाहं—

**युधिष्ठिरः**—भवतु मुने किमतःपरं श्रुतेन। हा[1] तात भीमसेन कान्तारव्यसनबान्धव हा मच्छरीरस्थितिविच्छेदकातर[2] जतुगृह[3]विपत्समुद्रतरणयानपात्र हा किर्मीरहिडिम्बासुरजरासंधविजयैकमल्ल हा कीचकसुयोधनानुज[4]कमलिनीकुञ्जर हा द्यूतपण[5]प्रणयिन् हा मदाज्ञासम्पादक हा कौरववनदावानल

निर्लज्जस्य दुरोदरव्यसनिनो वत्स त्वया सो[6] तदा
भक्त्या मे समदद्विपायुतबलेनाङ्गीकृता दासता।
किं नामापकृतं मया[7]ऽधिकमतस्त्वय्यद्य यद्गम्यते
त्यक्त्वा[8] नाथ सबान्धवं सपदि मां प्रीतिः क्व ते साऽधुना॥१७॥

**द्रौपदी**—(संज्ञामुपलभ्योत्थाय च।) महाराज किमेतद्वर्तते। (क)

**युधिष्ठिरः**—कृष्णे किमन्यत्।

स कीचकनिषूदनो बकहिडिम्बकिर्मीरहा
मदान्धमगधाधिपद्विरदसन्धिभेदाशनिः[9]।

---

(क) महाराअ किं एदं वट्टइ।

---

भ्रातरं धनुर्धरं गदाशिक्षाविमुखं दारुणस्य शत्रोरभिमुखं गच्छन्तं निवारयितुम्। अत्र कनीयांसं कनिष्ठम्। कान्तारो वर्त्म दुर्गमम् इत्यमरः। [तत्र यानि व्यसनानि आपदस्तत्र बान्धव साहाय्यकारिन्।] शरीरस्थितिर्जीवनम्। [तस्य विच्छेदात्कातर।] यानपात्रं तु पोतः इत्यमरः। किर्मीरो दैत्यभेदः। [०नुजा एव कमलिन्यांस्तासां कुञ्जर उन्मूलनयितः। **निर्लज्जस्येति**। हे वत्स। दुरोदरं द्यूतं। पणे द्यूते दुरोदरम् इत्यमरः। तत्र व्यसनिनः आसक्तिमतः मे भक्त्या। समदानां द्विपानामयुतं तस्येव चलं यस्य तेन। दशसहस्रसमदहस्तिप्राणसारेणेत्यर्थः।] त्वया तदा सा प्रसिद्धा दासताङ्गीकृतासीत्। [सीदतेति पाठे क्लेशमनुभवता त्वया।] **किं नामेति**। अतोऽधिकं त्वयि मयाद्य किमपकृतं तत्प्रकाशयेत्यर्थः॥१७॥ **किं नामैतद्वर्तते**। **स इति**। मगधाधिपो जरासंधः। [मदान्धो दर्पोद्धतो मगधाधिप एव द्विरदो

---

१ हा कीचनसुयोधनानुजद्रुमोन्मूलनप्रभञ्जन हा द्यूतपण०. २ मम शरीरस्थितिपरिखेदशङ्कासूदन. ३ गृहसंतरणपोतपते हा बकहिडिम्बकिर्मीरजटासुरजरासंधजयमल्ल. ४ ०नुजशतकुल-कमलिनी-,—नुजकमलवनप्रालेय; ०नुजद्रुमोन्मूलनप्रभञ्जन. ५ द्यूतपण. परिणतकान्तारबन्धो हा मम शरीरस्थिति परिच्छेदशङ्कानिषूदन. ६ सीदता. ७ तदधिकं त्व०. ८ निर्वत्सलं त्यक्त्वाऽनाथमबान्धवं सपदि मां येनासि दूरं गतः॥ ९ भङ्गा.

गदापरिघशोभिना भुजयुगेन तेनान्वितः
प्रियस्तव ममानुजोऽर्जुनगुरुर्गतोऽस्तं किल ॥ १८ ॥

द्रौपदी—नाथ भीमसेन त्वया किल मे केशाः संयमितव्याः । न युक्तं वीरस्य क्षत्रियस्य प्रतिज्ञातं शिथिलयितुम् । तत्प्रतिपालय मां यावदुपसर्पामि । (पुनर्मोहमुपगता ।) (क)

युधिष्ठिरः—(आकाशे) अम्ब पृथे श्रुतोऽयं तव पुत्रस्य समुदाचारः । मामेकमनाथं विलपन्तमुत्सृज्य क्वापि गतः । तात जरासंधशत्रो किं नाम वैपरीत्यमेतावता कालेनाल्पायुषि त्वयि समालोकितं जनेन । अथवा मयैव बहूपलब्धम् ।

दत्वा मे करदीकृताखिलनृपां यन्मेदिनीं लज्जसे
द्यूते यच्च पणीकृतोऽपि हि मया न क्रुध्यसि प्रीयसे ।
स्थित्यर्थं मम मत्स्यराजभवने प्राप्तोऽसि यत्सूदतां
वत्सैतानि विनश्वरस्य सहसा दृष्टानि चिह्नानि ते ॥ १९ ॥

मुने किं कथयसि । (तस्मिन्कौरवभीमयोः ६।१६ इत्यादि पठति ।)

राक्षसः—एवमेतत् ।

---

(क) णाह भीमसेण तुए किल मे केसा संजमिदव्वा । ण जुत्तं वीरस्स खत्तिअस्स पडिण्णादं सिढिलेदुम् । ता पडिवालेहि म जाव उवसप्पामि ।

---

हस्ती तस्य सन्धिभेदे अशनिर्वज्र इव । गदा परिघ इव तेन शोभते तादृशेन । ] [०पाठान्तरे] गदापरिघः पाणौ यत्र तादृशेन । पाणिः करः । भुजयुगेनेति लक्षणे तृतीया । किल प्रसिद्धौ ॥ १८ ॥ हा नाथ न युक्तमिदानीं भवतो वीरस्य [न तु निर्बलस्य] मां क्षणमात्रं...यावत्त्वामनुगच्छामि । पृथे पृथानामधेयि । तात मान्य । जरासंधशत्रो भीम । बहु स्वल्पायुःसूचकम् । तदेवाह—दत्वेति । करदो राजभागदाता । [न करदा अकरदाः । अकरदाः करदाः सम्पद्यमानाः कृताः करदीकृता अखिला नृपा यस्यां तां । लज्जसे इति यत्तदेकं विनश्वरस्य ते चिह्नमित्यर्थः । बहुगुणस्य शीघ्रं [विनश्वरत्वात् । एवमन्यत्र । ] प्रीयसे प्रीतो भवसि । स्थित्यर्थं वासार्थम् । मत्स्यराजो विराटः । सूदस्तु सूपवत्सूपकारेऽपि व्यञ्जनेऽपि च । इति विश्वः । हे वत्स एतानि चिह्नानि ते विनाशशीलस्य दृष्टानि । तथा च मम भाग्यदोषाद्गुणा एव ते दोषा वृत्ता इति भावः ॥ १९ ॥ कामपालो हलायुधः

---

१ पाणिना (टी.). २ द्रौपदी—(आकाशे दत्तदृष्टिः ।) ३ इति पुनर्मोह०, ४ (आकाशे दत्तदृष्टिः ।) ५ ननु श्रुतो. ६ तस्यैतानि. ७ स्पष्टानि. ८ सअं (स्वयं) किल तु ए.

**युधिष्ठिरः**—धिगस्मद्भागधेयानि[1] । भगवन्कामपाल कृष्णाग्रज सुभद्राभ्रातः

> ज्ञातिप्रीतिर्मनसि न कृता क्षत्रियाणां न धर्मो
> रूढं सख्यं तदपि गणितं नानुजस्यार्जुनेन[2] ।
> तुल्यः कामं भवतु भवतः शिष्ययोः स्नेहबन्धः[3]
> कोऽयं पन्था यदसि विमुखो मन्दभाग्ये मयीत्थम्[4] ॥२०॥

(द्रौपदीमुपगम्य ।) अयि पाञ्चालि उत्तिष्ठ[5] । समानदुःखावेवावां भवावः । मूर्छया किं मामेवमतिसंधत्से[6] ।

(क) **द्रौपदी**—(लब्धसंज्ञा) बध्नातु नाथो दुर्योधनरुधिरार्द्रेण हस्तेन दुःशासनविमुक्तं मे केशहस्तम् । हञ्जे बुद्धिमतिके तव प्रत्यक्षमेव नाथेन प्रतिज्ञातम् । (कञ्चुकिनमुपेत्य ।) आर्य किं संदिष्टं तावन्मे देवेन देवकीनन्दनेन पुनरपि केशरचनारभ्यतामिति । तदुपनय मे

---

(क) बन्धेदु णाहो दुज्जोहणरुधिलाद्देण हत्थेण दुस्सासणविमुक्कं मे केसहत्थम् । हञ्जे बुद्धिमदिए तव पच्चक्खं एव्व णाहेण पडिण्णादम् । अज्ज किं संदिट्ठं दाव मे देवेण देवकीनन्दणेण पुणो वि केसरअणा[7] आरम्भीअदु त्ति । ता उवणेहि मे पुप्फदामाइं[8] । विरएहि दाव कवरीम् । करेहि भअवदो णाराअणस्स[9] । वअणम् णं[10] क्खु सो अलीअं संदिसदि[11] । अहवा किं मए संतत्ताए[12] भणिदम् । अचिरगदं[13] अज्जउत्तं अणुगामिस्सम् । महाराअ आदीवअ मे चिदाम् । तुमं वि खत्तधम्मं अणुवट्टन्तो[14] एव्व णाहस्स जीविदहरस्स अहिमुहो होहि । अहवा जं दे रोअदि ।[15]

---

इत्यमरः । ज्ञातीति । सुभद्राभ्रातृत्वेन विशेषणात्सुभद्राद्वारा [ ज्ञातिप्रीतिर्मनसि न कृता चिन्तिता । क्षत्रियाणां धर्मो मनसि न कृतः । स च वीरयोः समदृष्टिता । अनुजस्य श्रीकृष्णस्य अर्जुनेन सह रूढमुपचितं सख्यं न गणितं मनस्या हितम् । शिष्ययोर्भीमसुयोधनयोः । [ मन्दभाग्ये मयि विमुखोऽस्मदहितकरणात्प्रतिकूलः असीति कोयं पन्थाः । न शिष्टसंमत इति भावः । ] ॥२०॥ अतिसंधत्से अनन्वितं करोषि । [ केशहस्तं केशकलापम् । ] तवापि प्रत्यक्षमेव तेन......देवकीनन्दनेन पुनरपि केशबन्धनमारभ्यतामिति । [ केशरचना केशसंस्करणम् । ] तदुपनय मे पुष्पदामानि तावत् । विरचय मे कवरीम् । [ अलीकं मिथ्या ] आदीप्यत

---

१ अथवा धिग०; धिङ्मम विगलन्ति भागधेयानि ।...( आकाशमवलोकयन् ) भगवन्सुभद्राद्भ्रातः कामपाल. २ स्यानुजे मे. ३ प्रेम. ४ मयि त्वम्; विगुणो०--५ उत्तिष्ठोत्तिष्ठ. ६ अभिसंधत्से. ७ मोइदं. ८ बन्धणं. ९ पुल्लपुप्फ. १० पुरिसोत्तमस्स. ११ णहि अलीहं मन्तेदि सो. १२ अदिसंतत्ताए. १३ अदूर. १४ अनुबन्धन्तो. १५ एतदादि कचिन्नास्ति.

पुष्पदामानि । विरचय तावत्कबरीम् । कुरु भगवतो नारायणस्य वचनम् । न खलु सोऽलीकं संदिशति । अथवा किं मया संतप्तया भणितम् । अचिरगतमार्यपुत्रमनुगमिष्यामि । ( युधिष्ठिरमुपगम्य । ) महाराज आदीपय मे चिताम् । त्वमपि क्षत्रधर्ममनुवर्तमान एव नाथस्य जीवितहरस्याभिमुखो भव । अथवा यत्ते रोचते ।

**युधिष्ठिरः**—युक्तमाह पाञ्चाली[1] । कञ्चुकिन् क्रियतामियं तपस्विनी चितासंविभागेन सह्यवेदना[2] । ममापि सज्जं धनुरुपनय । अलमथवा धनुषा ।

> **तस्यैव देहरुधिरोक्षितपाटलाङ्गी-**
> **मादाय संयति गदामपविध्य चापम् ।**
> **भ्रातृप्रियेण कृतमद्य यदर्जुनेन**
> **श्रेयो ममापि हि तदेव कृतं जयेन ॥ २१ ॥**

**राक्षसः**—राजन् रिपुजयविमुखं ते यदि चेतस्तदा यत्र तत्र वा प्राणत्यागं कुरु । वृथा तत्र गमनम् ।

**कञ्चुकी**—धिङ् मुने राक्षससदृशं हृदयं भवतः ।

**राक्षसः**—( सभयं स्वगतम् । ) किं ज्ञातोऽहमनेन । ( प्रकाशम् । ) भोः कञ्चुकिन् तयोर्गदया खलु युद्धं प्रवृत्तमर्जुनदुर्योधनयोः । जानामि च तयोर्गदायां भुजसारम् । दुःखितस्य पुनरस्य राजर्षेरपरमनिष्ट-श्रवणं परिहरन्नेवं ब्रवीमि ।

---

चिता । त्वमपि क्षत्रियधर्माननुबध्नन्नेव तस्य नाथजीवितहरस्य शत्रोरभिमुखो भव । [ तपस्विनी वराकी । संविभागेन संप्रदानेन । चिताविरचनेनेति यावत् । सज्यमिति पाठे ज्यया मौर्व्या सहितम् । ] तस्येति । तस्यैव भीमस्यैव । [ देहरुधिरेण उक्षितं सिक्तमत एव भ्रातृप्रियेणार्जुनेनाद्य संयति युद्धे । पाटलं रक्तमङ्गं यस्याः सा ताम् । ] अपविध्य त्यक्त्वा । [ यत् कृतं तद् गदामादाय युध्वा जीवितत्यागः इत्यर्थः । तन्ममापि श्रेयः । ] जयेन कृतमलम् ॥ २१ ॥ भुजसारमित्यन्तं कञ्चुकिने कथनम् [ गदायां गदायुद्ध इति यावत् । भुजबलं जानामि । तथाहि अर्जुनस्य हीनबलत्वात्तद्वधो निश्चित

---

१ याज्ञसेनी. २ चितासंविधानेन हृतवेदना. ३ संप्रति. ४ अपहाय; अपविद्धचाप. ५ रा०:–( सविषादमात्मगतम् । ) कथं गच्छति । भवत्वेवं तावत् । ( प्रकाशम् ) राजन् रिपुजयविमुखं यदि ते चेतस्तदा वरमत्रैव प्राणत्यागः । किं तत्र गमनेन । इ.पा. ६ कञ्चुकी–( सकोपम् । ) ब्रह्मन् अलं कथितेन । निश्चितं नृशंसं राक्षसमत्रभवतो हृदयम्; ( सरोपम् । ) धिङ्मुनिजनासदृशं राक्षसस्य सदृशं भवता व्याहृतम्. ७ गदायुद्धे.

**युधिष्ठिरः**—( बाष्पं विसृजन्[1] । ) साधु महर्षे साधु । सुस्निग्धम[2]-भिहितम् ।

**कञ्चुकी**—महाराज किं नाम शोकान्धतया देवेन देवकल्पेनापि प्राकृतेनेव त्यज्यते क्षात्त्रधर्मः[3] ।

**युधिष्ठिरः**—आर्य जयंधर

> शक्ष्यामि[4] नो परिघपीवरबाहुदण्डौ
> वित्तेशशक्रपुरदर्शितवीर्यसारौ[5] ।
> भीमार्जुनौ क्षितितले प्रविचेष्टमानौ[6]
> द्रष्टुं तयोश्च निधनेन रिपुं कृतार्थम् ॥ २२ ॥

अयि पाञ्चालराजतनये मद्दुर्नयप्राप्तशोच्यदशे यथा संदीप्यते पावकस्तथा सहिताविव बधुजनं संभावयावः ।

**द्रौपदी**—आर्य कुरु दारुसंचयम् । प्रज्वाल्यतां चिता । त्वरते मे हृदयं नाथं प्रेक्षितुम् । ( सर्वतोवलोक्य । ) कथं न कोऽपि महाराजस्य वचनं करोति । हा नाथ भीमसेन तदेवेदं राजकुलं त्वया विरहितं परिजनोऽपि सांप्रतं परिहरति । ( क )

---

( क ) अज्ज करेहि दारुसंचअम् । पज्जलीअदु चिदा । तुवरदि मे हिअअं णाधं पेक्खिदुम् । कहं णं को वि महाराअस्स वअणं करेदि । हा णाह भीमसेण तं एव्व एदं राअउलं तुए विरहिदं पडिअणो वि संपदं परिहरदि ।

---

इत्यर्थः । ] सुस्निग्धं हितम् । देवकल्पेन देवतुल्येन । **शक्ष्यामीति** । [ परिघवदर्गला इव पीवरौ बाहू दण्डाविव बाहुदण्डौ ययोस्तौ । वित्तेशः कुबेरः शक्रश्च तयोः पुरयोः दर्शितं वीर्यसारं याभ्यां तौ । कुबेरपुरे सौगन्धिकाहरणकाले भीमेन अस्त्राधिगमार्थं शक्रपुरीं गतेन शक्राज्ञया निवातकवचान् नाम दैत्यान् हतवतार्जुनेन च ।] [ क्षितितले प्रविचेष्टमानौ मरणव्यथाकुलौ भूम्यां लुठन्तौ । ] भीमार्जुनौ रिपुं च द्रष्टुं कृतार्थंकृतकृत्यं शक्ष्यामि । शल्यामितौ इति पाठे तौद्रष्टुं शस्यामि । प्रीत्यर्थं न शक्ष्यानि ॥ २२ ॥ [ मम दुर्नयः ] मद्दुर्नयस्तेन प्राप्ता शोच्या दशा यां तथाभूते । सहिताविकत्र देहत्यागेनेत्यर्थः । ] महाराज महाराज आनाय्यतां तावद्दारुसंचयः । संप्रज्वाल्यतां चिता । तदेव राजकुलमिदानीं त्वया विरहितं । परिजनोऽपि महाराजं परिभवति ।

---

१ उत्सृज्य; विमुञ्चन. २ सुश्लिष्टं. ३ क्षत्रधर्मः. ४ शक्ष्यामि–शक्नोमि तौ. ५ वित्तेशशक्रवरुणाधिकवीर्यवन्तौ; वित्तेशशक्रवरुणाधिकवज्रसारौ. ६ परिवर्तमानौ. ७ ण को वि णाधेन विना ( टी. ). ८ हा णाह अज्ज तुए–एसो तुऐ–विणा महाराओ परिअणेण वि परिहवअिदि ( परिभूयते ). ९ यत्पत्युरनुमरणम; पत्यनुसरणम्.

**युधिष्ठिरः**—महर्षे न कैश्चिच्छृणोति तावदावयोर्वचनम् तदिन्धनप्रदानेन प्रसीदः क्रियताम् ।

**राक्षसः**—मुनिजनविरुद्धमिदम् । (स्वगतम् ।) पूर्णो मे मनोरथः । यावदनुपलक्षितः समिन्धयामि वह्निम् । (प्रकाशम् ।) राजन् न शक्नुमो वयमिह स्थातुम् । (इति निष्क्रान्तः ।)

**युधिष्ठिरः**—कृष्णे न कश्चिदस्मद्वचनं करोति । भवतु । स्वयमेवाहं दारुसंचयं कृत्वा चितामादीपयामि ।

**द्रौपदी**—त्वरतां त्वरतां महाराजः । (क)

(नेपथ्ये कलकलः ।)

**द्रौपदी**—(सभयमाकर्ण्य ।) महाराज कस्याप्येष बलदर्पितस्य विषमः शङ्खनिर्घोषः श्रूयते । अपरमप्यप्रियं श्रोतुमस्ति निर्बन्धस्ततो विलम्ब्यते । (ख)

**युधिष्ठिरः**—न खलु विलम्ब्यते । उत्तिष्ठ ।

(इति सर्वे परिक्रामन्ति ।)

**युधिष्ठिरः**—अयि पाञ्चालि अम्बायाः सपत्नीजनस्य च किंचित्संदिश्य निवर्तय परिजनम् ।

**द्रौपदी**—महाराज अम्बायै एवं संदेक्ष्यामि—यः स बकहिडिम्बकिर्मीरजटासुरजरासंधविजयमल्लस्ते मध्यमपुत्रः स मम हताशायाः पक्षपातेन परलोकं गत इति । (ग)

---

(क) तुवरदु तुवरदु महाराओ ।

(ख) महाराअ कस्स वि एसो बलदप्पिदस्स विसमो सङ्खणिग्घोसो सुणीअदि । अवरं वि अप्पिअं सुणिदुं अत्थि णिब्बन्धो तदो विलम्बीअदि ।

(ग) महाराअ अम्बाए एव्वं संदिसिस्सं—जो सो बअहिडिम्बाकिम्मीरजडासुरजरासंधविजअमल्लो दे मज्झमपुत्तो सो मम हदासाए पक्खवादेण परलोअं गदो त्ति ।

---

समिन्धयामि दीपयामि । [ दर्पः अस्य संजातः असौ दर्पितः । बलेन दर्पितः बलदर्पितस्तस्य । विषमः कर्णकठोरः । निर्घोषः शब्दः । निर्बन्धः आग्रहः । दृढाभिलाष इत्यर्थः । ततो विलम्ब्यते इति प्रश्नकाकुः । विजये मल्लः

---

१ कश्चिदिनानीं. २ प्रसादं कर्तुमर्हसि. ३ पूर्णा मे मनोरथाः. ४ समीपेऽहमिन्धनमादीपयामि. ५ हेव, हैवं. ६ कश्चिदिदानीमेतत्करिष्यति । भवतु । स्वयमेव शुष्कादारुसंचयं कृत्वा चितानलेनात्मानमात्मनादीपयामि. ७ तत्रभवत्या अम्बायाः. ८ विवार्यतां परिजनः. ९ तेजोबल; ०दस्स णिग्घोसो; बहलदप्पिदस्स णिग्घोसो. १० विलम्बीअदु.

**युधिष्ठिरः**——भद्रे बुद्धिमतिके उच्यतामस्मद्वचनादम्बा ।

**येनासि तत्र जतुवेश्मनि दीप्यमाने**
**निर्वाहिता[1] सह सुतैर्भुजयोर्बलेन ।**
**तस्य प्रियस्य बलिनस्तनयस्य पाप-**
**माख्यामि[2] तेऽम्ब कथयेत्कथमीदृगन्यः ॥ २३ ॥**

आर्य जयंधर त्वयापि[3] सहदेवसकाशं गन्तव्यम् । वक्तव्यश्च तत्रभवान्पाण्डुकुलबृहस्पतिर्माद्रेयः[4] कनीयानस्माकं सकल[5]कुरुकुलकमलाकरदावानलो[6] युधिष्ठिरः परलोकमभिप्रस्थितः प्रियानुज[7]मप्रतिकूलं सततमाशंसनीयमसंमूढं व्यसनेऽभ्युदये च धृतिमन्तं भवन्तमविरलमालिङ्ग्य शिरसि चाघ्रायेदं प्रार्थयते——

**मम हि वयसा दूरेणाल्पः[8] श्रुतेन समो भवा-**
**न्सहजकृतया[9] बुद्ध्या ज्येष्ठो मनीषितया गुरुः ।**
**शिरसि मुकुलौ पाणी कृत्वा भवन्तमतोऽर्थये**
**मयि विरलतां नेयः स्नेहः पितुर्भव वारिदः ॥ २४ ॥**

अपि च । बाल्ये[10] संवर्धितस्य नित्याभिमानिनोऽसमत्सदृशहृदय-

---

विजयमल्लः । ] एतत्संदेष्टव्यम्——योऽसौ मल्लो मध्यमपुत्रस्ते स मम... । येनेति । [ तत्र वारणावते । तथा च भारतं——भीमसेनस्तु राजेन्द्र भीमवेगपराक्रमः । जगाम भ्रातॄनादाय सर्वान्मातरमेव च ॥ आ. अ. १४८ श्लो. २० ] निर्वाहिता रक्षिता । ते आख्यामि तुभ्यं कथयामि । अन्यो मत्त इति शेषः । मदन्यः क ईदृशं दुःखं कथयेत् । किं तु न कोऽपीत्यर्थः ॥ २३ ॥ [ सकलं कुरुकुलमेव कमलाकरस्तस्य दावानलः । अनेन आत्मनोऽसमीक्ष्यकारिता क्रूरता चोक्ता । न ह्यमूढचेताः कमलानि दावानले प्रक्षिपेदिति भावः । ] प्रियश्चासावनुजश्चेति विग्रहः । वह्वच्यनियमः इति प्रियस्यैव पूर्वनिपातः । अर्थात्सहदेवम् । अप्रतिकूलमायत्तम् । आशंसनीयं प्रत्याशार्हम् । विपत्तावमूढममुग्धम् । [ अभ्युदये धृतिमन्तं क्षमावन्तम् । ] आघ्राय परिचुम्ब्य । **ममेति** । दूरेणाधिकेन [ अल्पः कनिष्ठः । ] श्रुतेनाध्ययनेन । सहजा स्वाभाविकी [ कृता संस्कारेण वर्धिता । ०कृपयेति पाठे ] कृपा दया यस्यां तया । धीरो मनीषी ज्ञः प्राज्ञः इत्यमरः । अतः मुकुलौ [ मुकुलाकारौ ] पाणी कृत्वाऽञ्जलिं बद्ध्वा । भवन्तमर्थय इदं याचे । मयि स्नेहो विरलतां कृशत्वं नेयः । अस्मदर्थे प्राणान्मा त्यजेत्यर्थः वारिदः निवापोदकस्य दाता ॥ २४ ॥

---

१ निर्वासिता. २ कदनं कथमीदृशस्य; कोऽन्यस्तवाम्ब कथयेत्कथमीदृशस्य. ३ त्वमपि सहदेवसकाशं गच्छ; त्वयापि...गत्वा. ४ वैमात्रेयः. ५ स कुरुकुल०. ६ वाडवानलः. ७ प्रियमनुजमनुकूलं. ८ दूरेण त्वं. ९ कृपया; कृतसहजया. १० बालिशचरितस्य ( टी. );–अश्मसदृश०; मद्बधूदयसारस्य.

सारस्यापि नकुलस्य ममाज्ञया वचने स्थातव्यम्। तदुच्यतां नकुलः । नानुगन्तव्यास्मत्पदवी । त्वया हि वत्स

**विस्मृत्यास्मान्श्रुतिविशदया प्रज्ञया सानुजेन**
**पिण्डान्पाण्डोरुदकपृषतानश्रुगर्भान्प्रदातुम् ।**
**दायादानामपि तु भवने यादवानां कुले वा**
**कान्तारे वा कृतवसतिना रक्षणीयं शरीरम् ॥ २५ ॥**

गच्छ जयंधर अस्मच्छरीरस्पृष्टिकया शापितेन भवताऽकालहीनमिदमवश्यमावेदनीयम् ।

**द्रौपदी**—हला बुद्धिमतिके भण मम वचनेन प्रियसखीं सुभद्राम्। अद्य वत्साया उत्तरायाश्चतुर्थो मासः प्रतिपन्नस्य गर्भस्य त्वमेवैतं कुलप्रतिष्ठापकं सावधानं रक्ष कदापीतः परलोकगतस्य श्वशुरकुलस्यास्माकमपि सलिलबिन्दुदो भविष्यति इति । ( क )

**युधिष्ठिरः**—( सास्रम् । ) भोः कष्टम् ।

**शाखारोधस्थगितवसुधामण्डले मण्डिताशे**
**पीनस्कन्धे सुसदृशमहामूलपर्यन्तबन्धे ।**

---

( क ) हला बुद्धिमदिए भणाहि मह वअणेण पिअसहीं सुभद्दाम्—अज्ज वच्छाए उत्तराए चउत्थो मासो पडिवण्णस्स गब्भस्स । तुमं एव्व कुलपडिट्ठावअं सावहाणं रक्ख । कदा वि इदो परलोअगदस्स ससुरउलस्स अह्माणं वि सलिलबिन्दुदो भविस्सदि त्ति ।

---

**विस्मृत्येति** । सानुजेन त्वयाऽस्मान्प्रज्ञया विस्मृत्य पाण्डोरुदकपृषतान्प्रदातुं शरीरं रक्षणीयमित्यन्वयः । पृषन्ति बिन्दुपृषताः पुमांसः । इत्यमरः । श्रुतिरध्ययनम् । वसतिर्वासः ॥ २५ ॥ [ स्पृष्टिका स्पर्शः । ] शापितेन मदङ्गशपथवता । अकालहीनं कालः योग्यसमस्तेन हीनं यथा न भवेत्तथा। कदाप्येतेनापि परलोकगतस्यास्माकं श्वशुरकुलस्योदकबिन्दुर्भविष्यति । अत्रापन्नसत्त्वा गर्भवती । नाभिकुलं पितृकुलम् । [ निक्षिपसि निधापयिष्यासि । अत्रस्थस्य विनाशसम्भवात् । ] **शाखेति** । रोधोऽवरोधः । आधिक्यमिति यावत् [ शाखारोधेन निरन्तरप्ररूढशाखाविस्तारेण स्थगितमाच्छादितं वसुधामण्डलं येन तस्मिन् । मण्डिता अलंकृता आशा दिशो येन । पीनः स्कन्धः प्रकाण्डः यस्य तस्मिन् सुसदृशः तरोरनुरूपः महामूलस्य पर्यन्तः परितो बन्धो यस्य तस्मिन् । ईदृशि सुमहति तरौ दग्धे सति तस्या

---

१ श्रुतविशदया स्वाग्रजौ चात्मबुद्ध्या क्षीणे पाण्डावुदक॰ प्रज्ञया सानुजांश्च. २ शापितोऽसि । त्वयाऽकालहीन. ३ रोह— ४ पर्यङ्क. ५ आवण्णसत्ताए चाउत्थो मासो वट्टदि । सव्वधा णाविउले तं णिक्खिवेसि ( नाभिकुले तां निक्षिपसि ). ६ लोआदो सुरलो अगदाणं अह्माणं अ सलि॰. ७ गुरुउलस्स.

दग्धे दैवात्सुमहति तरौ तस्य सूक्ष्माङ्कुरेऽस्मि-
न्नाशाबन्धं कमपि कुरुते छाययार्थी जनोऽयम् ॥ २६ ॥

साधु । इदानीमध्यवसितं करणीयम् । ( कञ्चुकिनमवलोक्य । ) आर्य जयंधर स्वशरीरेण शापितोऽसि तथापि न गम्यते ।

कञ्चुकी—( साक्रन्दम् । ) हा देव पाण्डो तव सुतानामजातशत्रुभीमार्जुननकुलसहदेवानामयं दारुणः परिणामः । हा देवि कुन्ति भोजराजभवनपताके

भ्रातुस्ते तनयेन शौरिगुरुणा श्यालेन गाण्डीविन-
स्तस्यैवाखिलधार्तराष्ट्रनलिनीव्यालोलने दन्तिनः ।
आचार्येण वृकोदरस्य हलिनोन्मत्तेन मत्तेन वा
दग्धं त्वत्सुतकाननं ननु मही यस्याश्रयाच्छीतला ॥ २७ ॥

( इति रुदन्निष्क्रान्तः । )

युधिष्ठिरः—जयंधर जयंधर ।

( प्रविश्य )

कञ्चुकी—आज्ञापयतु देवः ।

युधिष्ठिरः—वक्तव्यमिति ब्रवीमि । न पुनरेतावन्ति भागधेयानि नः । यदि कदाचिद्विजयी स्याद्वत्सोऽर्जुनस्तद्वक्तव्योऽस्मद्वचनाद्भवता

हली हेतुः सत्यं भवति मम वत्सस्य निधने
तथाप्येष भ्राता सहजसुहृदस्ते मधुरिपोः ।

---

सूक्ष्माङ्कुरे अस्मिन् अयं छायया अर्थी । छायामिच्छन्नित्यर्थः अनं जयः कमपि दुष्पूरमित्यर्थः । आशाबन्धं दैवाद् कुरुते । ] आशाबन्धः समाश्वासे तथा मर्कटजालके । इति विश्वः । छाययार्थी छायाप्रार्थकः । [ तद्वत्पाण्डुवंशाङ्कुरेस्मिन् सलिलबिन्द्वादिलाभाशेत्यर्थः । ] ॥ २६ ॥ भ्रातुरिति । ते भ्रातुर्वसुदेवस्य । शौरिगुरुणा [ शौरेः कृष्णस्य गुरुणा ज्यायसा भ्रात्रा । अर्जुनस्य श्यालेन सुभद्राया भ्रातृत्वात् । अखिला धार्तराष्ट्रा एव नलिन्यः कमलिन्यः तासां । ] व्यालोलनं व्याघट्टना । तत्र दन्तिनः तस्य भीमस्य आचार्येण गुरुणा । हलिना बलेनाथ च हलवाहकेन । [ उन्मत्तेन उन्मादवता अथवा मत्तेन क्षीवेण । ननु यस्याश्रयादाश्रयं प्राप्य मही शीतला शान्तिमती आसीत्तत् त्वत्सुतकाननं दग्धम् । ॥ २७ ॥ [ एतावन्ति अर्जुनविजयावहानीति यावत् । ] हलीति । हेतुः कारणम् । [ तथाप्येष हली ते सुहृदः भ्राता भवति । अतस्तस्मिन् क्रोधो

---

१ द्रौपदि साधये—य—इदानीमध्यवसितम्. २ अस्मच्छरीरेण. ३ दशापरिणामः. ४ भोजकुलपताके. ५ नलिन०; —व्यालोडनादन्तिनः. ६ तव पुरी—मही—यच्छायया; तत्सुत० तव--; दग्धं तत्सुतकाननं समभवद्यस्याश्रयः शीतलः. ७ आर्य जयंधर. ८ वक्तुमिच्छामि । न पुनरेतावन्ति भागधेयानि युष्माकम्. ९ तदासौ.

अतः क्रोधः कार्यो न खलु यदि च प्राणिषि ततो
वनं गच्छेर्मा गाः पुनरकरुणां क्षात्रपदवीम् ॥ २८ ॥

**कञ्चुकी**—यथाज्ञापयति देवः । ( इति निष्क्रान्तः । )

**युधिष्ठिरः**—( अग्निं दृष्ट्वा सहर्षम् । ) कृष्णे ननूद्धतशिखाहस्तैर्हूतास्मद्विधव्यसनिजनः समिद्धो भगवान्हुताशनस्तत्रेन्धनीकरोम्यात्मानम् ।

**द्रौपदी**—प्रसीदतु प्रसीदतु महाराजो ममानेनापश्चिमेन प्रणयेन । अहं तावदग्रतः प्रविशामि । ( क )

**युधिष्ठिरः**—यद्येवं सहितावेवाभ्युदयमुपभोक्ष्यावहे ।

**चेटी**—हा भगवन्तो लोकपालाः परित्रायध्वं परित्रायध्वम् । एष खलु सोमवंशराजर्षी राजसूयसंतर्पितहव्यवाहः खाण्डवसंतर्पितहुतवहस्य किरीटिनो ज्येष्ठो भ्राता सुगृहीतनामधेयो महाराजयुधिष्ठिरः । एषापि पाञ्चालराजतनया देवी यज्ञवेदिमध्यसंभवा याज्ञसेनी । द्वावपि निष्करुणज्वलनस्य प्रवेशेनेन्धनीभवतः । तत्परित्रायध्वमार्याः परित्रायध्वम् । कथं न कोऽपि परित्रायते । ( तयोरग्रतः पतित्वा । ) किं व्यवसितं देव्या देवेन च । ( ख )

---

( क ) पसीदहु पसीदहु महाराओ मम इमिणा अपश्चिमेण पणएण । अहं दाँव अग्गदो पाविसामि ।

( ख ) हा भगवन्तो लोअवाला परित्ताअह परित्ताअह । एसो क्खु सोमवंसराएसी राअसूअसंतप्पिदहव्ववाहो खण्डवसंतप्पिहुदवहस्स किरीडिणो जेट्ठो भादा सुगिहीदणामहेओ महाराअजुहिट्ठिरो । एसा वि पञ्चालराअतणआ देवी जण्णवेदिमज्झसंभवा जण्णसेणी । दुवे वि णिक्करुणजलणस्स प्पवेसेण इन्धणीहोन्ति । ता परित्ताअह अज्जा परित्ताअह । कधं ण को वि परित्ताअदि । किं ववसिदं देवीए देवेण अ ।

---

न कार्यः । ] प्राणिसि जीवसि । गच्छेर्गमिष्यसि । क्षात्रपदवीं क्षत्रियपथं [ शत्रुहननरूपम् । ] पुनर्मा गा न गमिष्यसि । मा गाः इति माङ्योगे आशंसायां लुङ् । न माङ्योगे इत्यटो निषेधः ॥ २८ ॥ [ शिखा एव हस्ताः शिखाहस्ताः । उद्धूता ये शिखाहस्तास्तैः आहूतः अस्मद्विधः व्यसनिजनः येन स तथोक्तः । ] अत्र पश्चिमेन प्रथमेन सत्येन वा । [ नास्ति पश्चिमो यस्मात्तेन चरमेणेत्यर्थः । ] प्रणयः प्रेम्णि याञ्चायाम् । इति धरणिः । [ राजा सोमः सूयते अत्र इति राजसूयः तेन सन्तर्पितः हव्यवाहः येन सः । सुगृहीतं प्रातः स्मृतं नामधेयं यस्य स तथोक्तः । तदुक्तं—

---

१ मयि च प्रेम भवतः. २ नन्वयमुद्धत--;. शिखाहूता० भगवान्हव्यभुग्. ४ तत्रेन्धनमात्मानं करिष्ये. ५ ०भ्युदयमपि भोक्ष्यावहे. ६ एव्व दाव;—गमिस्सम्. ७ सोमवंसराएसी अअं क्खु राआ. ८ एसा देवी पञ्चालराअकुलदेवदा. ९ जण्ण इति नास्ति क्वचित्. १० दुवे वि सरीरेण णिक्करुणस्स कालाणलस्स इन्धणीहोन्ति ।

**युधिष्ठिरः**—अयि बुद्धिमतिके यद्वत्सलेन[1] प्रियानुजेन विना सदृशं[2] तत् । उत्तिष्ठोत्तिष्ठ भद्रे उदकमुपनय ।

**चेटी**—यद्देव आज्ञापयति ( इति निष्क्रम्य पुनः प्रविश्य च । ) जयतु जयतु महाराजः । (क)

**युधिष्ठिरः**—पाञ्चालि त्वमपि तावत्स्वपक्ष[3]पातिनो वृकोदरस्य प्रियस्यार्जुनस्योदकक्रियां कुरु ।

**द्रौपदी**—महाराज एव करोतु । अहं पुनर्ज्वलनं प्रवेक्ष्यामि । (ख)

**युधिष्ठिरः**—अनतिक्रमणीयं लोकवृत्तम् । भद्रे उदकमुपनय ।

**चेटी**—( तथा करोति । )

**युधिष्ठिरः**—( पादौ प्रक्षाल्योपस्पृश्य च । ) एष तावत्सलिलाञ्जलि-र्गाङ्गेयाय भीष्माय गुरवे । अयं प्र[4]पितामहाय शान्तनवे । अयमपि[5] पितामहाय विचित्रवीर्याय । ( सास्रम् । ) तात[6]स्याधुनावसरः । अयमपि तत्रभवते सुगृहीतनाम्ने पित्रे पाण्डवे ।

> अद्यप्रभृति वारि[7]दमस्मत्तो दुर्लभं पुनः
> तात माद्यम्बया[9] सार्धं मया[8] दत्तं निपीयताम् ॥ २९ ॥
> एतज्जलं[10] जलजनील[11]विलोचनाय
> भीमाय तस्य मम चाप्यविभक्तमस्तु[12] ।
> एकं क्षणं विरम[13] वत्स पिपासितोऽपि
> पातुं त्वया सह जवादयमा[14]गतोऽस्मि ॥ ३० ॥

---

(क) जं देवो आणवेदि । जेदु जेदु महाराओ ।

(ख) महाराओ एव्व करेदु । अहं उण जलणं पविसिस्सम् ।

---

स सुगृहीतनामा स्याद्यः प्रातः स्मर्यते बुधैः ।] खाण्डववनादीपनजननस्य किरीटिनो.. द्वावप्येतौ... । उपस्पृश्याचम्य । गाङ्गेयाय भीष्माय । शान्तनवे शान्तनुनाम्ने । अद्येति । हे तात मया दत्तमेतज्जलं माद्यम्बया सह निपीयताम् ॥ २९ ॥ एत-दिति । [ जलजं कुवलयमिव नीले विलोचने यस्य तस्मै ] जलजस्य लीला विलासो यत्र तत् । भीमप्रियस्य प्रीतिविषयभीमस्य । अविभक्तं साधारणम् । हे वत्स भीम । [ पिपासितः संजाततृष्णोपि एकं क्षणं ] विरम मां प्रतिपालय अयमहं एतज्जलं त्वया सह पातुं जवाद्वेगादागतोस्मि । [ वर्तमानसामीप्ये भविष्यति लट् ] ॥ ३० ॥

---

१ नाथेन. २ सदृशम् । तदुत्तिष्ठोत्तिष्ठ । सलिलमुपानय. ३ त्वपक्ष. ४ मुख. ५ अयमिति क्वचिन्नास्ति. ६ तात तवाधुना. ७ अयं तावत्; स्वर्गस्थाय गुरवे. ८ वां दत्तं. ९ त्वयाम्बया. १० एतद्दत्तं. ११ लील. ( टी. );--विलोचनस्य. १२ भीमप्रियस्य ( टी. ); भीमस्य भोस्तव ममाप्य. १३ तु विषहस्व. १४ अहं.

अथवा सुक्षत्रियाणां गतिमुपगतं वत्समहमुपैगतोऽप्यकृती द्रष्टुम् । वत्स भीमसेन

**मया पीतं पीतं तदनु भवताम्बास्तनयुगं**
**मदुच्छिष्टैर्वृत्तिं जनयसि रसैर्वत्सलतया ।**
**वितानेष्वप्येवं तव मम च सोमे विधिरभू-**
**न्निवापाम्भः पूर्वं पिबसि कथमेवं त्वमधुना ॥ ३१ ॥**

कृष्णे त्वमपि देहि सलिलाञ्जलिम् ।

**द्रौपदी**—हञ्जे बुद्धिमतिके उपनय मे सलिलम् । ( क )

( चेटी तथा करोति । )

**द्रौपदी**—( उपसृत्य जलाञ्जलिं पूरयित्वा । ) महाराज कस्मै सलिलं ददामि । ( ख )

**युधिष्ठिरः**—

**तस्मै देहि जलं कृष्णे सहसा गच्छते दिवम् ।**
**अम्बापि येन गान्धार्या रुदितेन सखी कृता ॥ ३२ ॥**

**द्रौपदी**— नाथ भीमसेन परिजनोपनीतमुदकं स्वर्गगतस्य ते पादोदकं भवतु । ( ग )

---

( क ) हञ्जे बुद्धिमदिए उवणेहि मे सलिलम् ।
( ख ) महाराअ कस्स सलिलं देह्मि ।
( ग ) णाह भीमसेण परिअणोवणीदं उदअं सग्गगदस्स दे पादोदअं भोदु ।

---

गतिं स्वर्गम् । [ अकृती असमर्थः । ] मयेति । [ मया अम्बास्तनयुगं लक्षणया स्तनयुगजं पयः पीतं तदनु भवता पीतम् । वत्सलतया मयि स्नेहात् मदुच्छिष्टै रसैः रसवद्भिः भोज्यविशेषैः वृत्तिं जनयसि । वितानेषु यज्ञेष्वपि सोमे सोमपाने एवं तव मम च विधिरभूत् । अधुना तु त्वं निवापाम्भः एवं पूर्वं कथं पिबसि । ] तदनु तत्पश्चात् । रसैर्दुग्धैः । वृत्तिं वर्तनम् । क्रतुविस्तारयोरस्त्री वितानम् । इत्यमरः । साम्यो विधिः समः प्रकारः । साम्य इति चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् । साम्ये विधिः इति पाठे साम्ये तुल्यत्वे विधिरित्यर्थः । सोमे विधिः इति पाठे सोमलता-द्रवपानेऽयं प्रकार इत्यर्थः । निवापः पितृदेयम् ॥ ३१ ॥ तस्मा इति । सहसा शीघ्रं जलं देहीत्यन्वयः । येन [ रुदितेन हेतुना अम्बापि गान्धार्याः सखी कृता ।

---

१ मृतोप्य०; किमहमुपागतोऽपि प्राप्स्यामि द्रष्टुं भीमसेनम्; न पापः प्राप्नोमि द्रष्टुं भीमम्. २ पूर्वं. ३ साम्यो; साम्यं; सोऽयं. ४ जलाअलिं; ०जलिं तत्रभवते भीमाय. ५ पूर्वं;–देवि जलं देहि सहसा यो गतो दिवम्. ६ गान्धारीरुदितेन ( टी. ); रुदितेषु; समीकृता. ७ देहि मे उदअम्. ८ एतत्कचिन्नास्ति.

**युधिष्ठिरः**—फाल्गुनाग्रज

**असमाप्तप्रतिज्ञेऽस्तं याते त्वयि महाभुजे।**
**मुक्तकेश्यैव दत्तस्ते प्रियया सलिलाञ्जलिः॥ ३३॥**

**द्रौपदी**—उत्तिष्ठ महाराज दूरं गच्छति ते भ्राता। (क)

**युधिष्ठिरः**—(दक्षिणाक्षिस्पन्दनं सूचयित्वा।) पाञ्चालि निमित्तानि मे कथयन्ति संभावयिष्यसि वृकोदरमिति।

**द्रौपदी**—महाराज सुनिमित्तं भवतु। (ख)

(नेपथ्ये कलकलः।)

(प्रविश्य संभ्रान्तः।)

**कञ्चुकी**—परित्रायतां परित्रायतां महाराजः। एष खलु दुरात्मा कौरवापसदः क्षतजाभिषेकपाटलिताम्बरशरीरः समुच्छ्रितदिग्धभीषणगदापाणिरुद्यतकालदण्ड इव कृतान्तोऽत्रभवतीं पाञ्चालराजतनयामितस्ततः परिमार्गमाण इत एवाभिवर्तते।

**युधिष्ठिरः**—हा दैव ते निर्णयो जातः। हा गाण्डीवधन्वन्

(इति मुह्यति।)

**द्रौपदी**—हा आर्यपुत्र हा मम स्वयंवरस्वयंग्राहदुर्ललित प्रियं

(क) उट्ठेहि महाराअ दूरं गच्छदि दे भादा।
(ख) महाराअ सुणिमित्तं भोदु।

पाठान्तरे] गान्धारीरुदितेनाम्बापि सखीकृता रोदनवती कृतेत्यर्थः॥ ३२॥ फाल्गुनोऽर्जुनः। असमाप्तेति। [प्रतिज्ञेपि याते इति पाठे याते दिवमिति शेषः। मुक्ता अबद्धाः केशा यस्यास्तया।]॥३३॥ महाराज उत्तिष्ठोत्तिष्ठ।...मे भर्ता। संभावयिष्यसि प्राप्स्यसि। [कौरवेषु अपसदः कौरवापसदः। क्षताज्जायते इति] क्षतजं रक्तं [तेन पाटलिते रक्तीकृते अम्बरशरीरे यस्य] अम्बरं वासः। [समुच्छ्रिता यादिग्धा रक्तालिप्ता भीषणा च गदा सा पाणौ यस्य।] गदाशक्तिः शक्तिरस्त्रभेदस्तद्वद्गदेत्यर्थः। हा मम स्वयंवरस्वयंग्राहदुर्ललित भ्रातृप्रिय परलोकमनुगतोऽसि। [स्वयंवरे यः स्वयंग्राहः मया पतित्वेन वरणं स एव दुर्ललितं यस्य। मद्ग्रहणे कृतनिश्चयेत्यर्थः। अनेन मम त्यागोत्यन्तमनुचित इति ध्वनितम्।]

१ तात फा०. २ ज्ञेपि याते,–ममानुजे. ३ प्रियया य जला०. ४ कथयन्त्यहतं वृकोदरम्। कथयन्ति स्वयं संभावयामि वृकोदरमिति। भवतु शीघ्रतरमनुगच्छामि।–संभावयसि वृकोदरमिति। भवतु। शीघ्रं दहनमुपसर्पावः। द्रौपदी—आः पज्जलिदो भअवं हुदवहो। ५ महाक०. ६ कौरवाधमः. ७ पाटलीकृताम्बरः. क्षतजाभिषिक्त–. ८ रक्तभीषणगदाशनिः–पाणिः, उद्धत--उद्यत्--कालदण्डः. ९ अन्तकः.

भ्रातरमनुगतोऽसि । पुनर्महाराजमिमं दासजनं च । ( इति मोह-मुपगता । ) ( क )

**युधिष्ठिरः**——हा[१] वत्स सव्यसाचिन् हा त्रिलोचनाङ्गनिष्पेषमल्ल हा निवातकवचोद्धरणनिष्कण्टकीकृतामरलोक हा बदर्याश्रममुनि-द्वितीयतापस हा[२] द्रोणाचार्यप्रियशिष्य हा अस्त्रशिक्षाबलपरितोषित-गाङ्गेय हा राधेयकुलकमलिनीप्रालेयवर्ष हा गन्धर्वनिर्वासितदुर्योधन[३] हा पाण्डवकुलकमलिनीराजहंस

तां वत्सलामनभिवाद्य[४] विनीतमम्बां
गाढं च मामनुपगुह्य मयाप्यनुक्तः ।
एतां स्वयंवरवधूं दयितामदृष्ट्वा[५]
दीर्घप्रवासमयि तात[६] कथं गतोऽसि ॥ ३४ ॥

( मोहमुपगतः । )

---

( क ) हा अज्जउत्त हा मम सअंवरसअंगाहदुल्ललिद[७] पिअं भादुअं अणुगदोसि । ण उण महाराअं इमं दासजणं अ ।[८]

---

[ सव्येन वामकरेण सचते दक्षिणहस्तेनेव बाणान् वर्षते असौ सव्यसाची तस्य सम्बुद्धिः ] सव्यसाचिन्नर्जुन । [ त्रिलोचनस्य किरातवेषधारिणः अङ्गानां निष्पेषे मर्दने मल्ल ।] निवातेति । निवातकवचनामकदैत्यहननेन निःशत्रूकृतसुरलोक इत्यर्थः । [ निवाचकवचा नाम दानवा मम शत्रवः । समुद्रकुक्षिमाश्रित्य दुर्गे प्रतिवसन्त्युत । तिस्रः कोट्यः समाख्यातास्तुल्यरूपबलप्रभाः । इत्यादि कथा भारते वनपर्वणि द्रष्टव्या । अ. ६८–७१, ७३ ] बदर्याश्रमो बदरिकाश्रमः । तत्र यौ मुनी नरनारा-यणौ तयोः द्वितीयः तापसः । नारायणस्य प्रथमत्वात् । मुन्योरिति निर्धारणे सप्तमी । [ तदुक्तं महाभारते—नरस्त्वं पूर्वदेहे वै नारायणसहायवान् । बदर्यां तप्तवानुग्रं तपो वर्षायुतान् बहून् ॥ इति ] राधेयकुलमेव कमलिनी तस्याः प्रालेय-वर्ष हिमपात । तस्य विनाशकेत्यर्थः गन्धर्वाच्चित्ररथान्निर्वासितो मोचितो दुर्योधनो येन तत्सम्बुद्धिः । ] तामिति । [ अयि इति कोमलामन्त्रणे । तात वत्स तां वत्सलां स्नेहवतीमम्बां मातरं कुन्तीं विनीतं सविनयं यथा तथा अनभिवाद्य मां च गाढं यथा तथा अनुपगुह्यानालिङ्ग्य मयापि अनुक्तोऽननुमतः एतां स्वयंवरवधूं दयितां अदृष्ट्वा दीर्घप्रवासं कथं गतोसि । नैतद्युक्तमिति भावः । ] तातानुकम्प्य ।

---

१ हा असदृशमल्ल हा निवातकवचोद्धरण हा निष्कण्टकी०. २ हा साहसिक हा द्रोणाचार्यवत्सल हा वत्सार्जुन. ३ सुयोधन. ४ अनभिवन्द्य. ५ सदृशी–सदृशीमपृष्ट्वा. ६ वत्स. ७ सअंगहकुटुम्बिअ. ८ संभावेसि;–विओदरं संभावेसि.

**कञ्चुकी**—भो[1]: कष्टम् । एष दुरात्मा कौरवाधमो यथेष्टमित एवाभिवर्तते । सर्वथा सम्प्रत्ययमेव[2] कालोचितः प्रतीकारः । चितां-समीपमुपनयनाम्यत्रभवतीं पाञ्चालराजतनयाम् । अहमप्येवमेवानुगच्छामि । ( चेटीं प्रति । ) भद्रे[3] त्वमपि देव्या भ्रातरं धृष्टद्युम्नं नकुल-सहदेवौ वाऽवाप्नुहि[4] । अथवा एवमवस्थिते महाराजेऽस्तमितयो-र्भीमार्जुनयोः कुतोऽत्र[5] परित्राणाशा ।

**चेटी**—परित्रायध्वं परित्रायध्वमार्याः । ( क )

( नेपथ्ये कलकलानन्तरम् । )

भो भोः समन्तपञ्चकसंचारिणः क्षतजासव[6]मत्तयक्षराक्षसपिशाच-भूतवेतालकङ्कगृध्रजम्बुकोलूकवायसभूयिष्ठा विरलयोधपुरुषाः कृतम-स्मद्दर्शनत्रासेन । कथयत कस्मिन्नुद्देशे याज्ञसेनी संनिहितेति । कथयाम्युपलक्षणं[7] तस्याः ।

> **ऊरू[8] करेण परिघट्टयतः सलीलं[9]**
> **दुर्योधनस्य पुरतोऽपहृताम्बरा या ।**
> **दुःशासनेन[10] कचकर्षणभिन्नमौलिः**
> **सा द्रौपदी कथयत क्व पुनः प्रदेशे ॥ ३५ ॥**

**कञ्चुकी**—हा देवि यज्ञवेदिसंभवे[11] परिभूयसे संप्रत्यनाथा[12] कुरुकुलकलङ्केन ।

---

( क ) परित्ताहअ परित्ताहअ अज्जा ।

---

तातोऽनुकम्प्ये जनके इति विश्वः ॥ ३४ ॥ [ अवाप्नुहि आश्रयार्थं गच्छ । ] गृध्रादीनां भूयिष्ठः प्रचुरो निलयो गृहं येषु ते तथा । [ वायसा भूयिष्ठा येषु ते । वायसादिभिर्बहुसंख्याका इत्यर्थः । ] उपलक्षणं परिचायकम् । ऊरू इति । [ सलीलं करेण ऊरू निजोरुयुगं परिघट्टयतः हस्तेन परामृशतः । तथा च भारतं— एवमुक्त्वा तु कौन्तेयमपोह्य वसनं स्वकं । अभ्युत्स्मयित्वा राधेयं भीममाधर्षयन्निव । द्रौपद्याः प्रेक्षमाणायाः सव्यमूरुमदर्शयत् ॥ दुर्योधनस्य पुरतः या दुःशासनेन अपहृतमम्बरं वस्त्रं यस्याः सा अपहृताम्बरा । या च कचानां कर्षणमाकर्षणं । कचः केशः शिरोरुहः इत्यमरः । तेन । ] भिन्नमौलिर्विदारितधम्मिल्ला । मौलिः किरीटे धम्मिले इति विश्वः । [ सा द्रौपदी पुनः क्व कस्मिन् । ] प्रदेशेऽस्तीति शेषः । कथयत तमिति शेषः ॥ ३५ ॥ हा देवि अर्थसूचनरूपा धृतिकेयम् । अन्तःपटी-

---

१ इदानीं भोः; कष्ट कष्टम् ।...सुयोधनः. २ सर्वथायं प्रवेशकालः. ३ भद्रे बुद्धिम-तिक चिता० नय. ४ ब्रूहि; यथाचारमाक्रन्द । ५ क्व नु परित्राणम्. ६ जास्वाद...छाव-शिष्टविरलाश्च योधाः. ७ किं कथ०. ८ ऊरु. ९ सलज्जा; सरोपम्. १० दुःशासनस्य— ११ याज्ञसेनि. १२ त्यनाथेवानेन; कुरुकुलकेतुना दुर्योधनहतकेन.

**युधिष्ठिरः**—( सहसोत्थाय सावष्टम्भम्। ) पाञ्चालि न भेतव्यं न भेतव्यम्। ( ससंभ्रमम्। ) कः कोऽत्र भोः सनिषङ्गं मे धनुरुपनय। दुरात्मन्दुर्योधनहतक आगच्छागच्छ। अपनयामि ते गदाकौशलसंभृतं भुजदर्पं शिलीमुखासारेण। अन्यच्च रे कुरुकुलाङ्गार

**प्रियमनुजमपश्यंस्तं जरासंधमल्लं**
**कुपितहरकिरातायोधिनं तं च वत्सम्।**
**त्वमिव कठिनचेताः प्राणितुं नास्मि शक्तो**
**ननु पुनरपहर्तुं बाणवर्षैस्तवासून्॥ ३६॥**

( ततः प्रविशति गदापाणिः क्षतजसिक्तसर्वाङ्गो भीमसेनः। )

**भीमसेनः**—( उद्धतं परिक्रामन् ) भो भोः समन्तपञ्चकसंचारिणः सैनिकाः कोऽयमावेगः।

**नाहं रक्षो न भूतो रिपुरुधिरजलप्लाविताङ्गः प्रकामं**
**निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि।**
**भो भो राजन्यवीराः समरशिखिशिखादग्धशेषाः कृतं व-**
**स्त्रासेनानेन लीनैर्हतकरितुरगान्तर्हितैरास्यते यत्॥ ३७॥**

कथयन्तु भवन्तः कस्मिन्नुद्देशे पाञ्चाली तिष्ठति।

**द्रौपदी**—( लब्धसंज्ञा। ) परित्रायतां परित्रायतां महाराजः। (क)

---

( क ) परित्ताअदु परित्ताअदु महाराओ।

---

प्रविष्टैर्थत्क्रियतेऽर्थस्य सूचनम्। धृतिकार्यप्रकाशनम्। इति भरतः। इह सादननामावमर्षसंधिः। यदाह—बीजकार्योपगमनं सादनं समुदीरितम्। [ सनिषङ्गं सतूणीरम्। संभृतमुपचितं। ] **प्रियमिति**। कुपितः हर एव किरातः हरकिरातः। किरातरूपी हर इत्यर्थः। [ तेन सहायुध्यते इति ] तं वत्समर्जुनम्। प्राणितुं जीवितुम्। त्वमिवेति व्यतिरेके दृष्टान्तः। यथा त्वं जीवितुं शक्तस्तथा नाहमित्यर्थात्। [तवासून्बाणवर्षैः पुनरपहर्तुं ननु शक्तोऽस्मि। न चेति पाठे न च नास्मि शक्त इति योज्यम्।] नः शिरश्चालने॥ ३६॥ **नाहमिति**। [ अहं रक्षो न। भूतो न। प्रकामं रिपोः रुधिरमेव जलं तेन प्लावितं सर्वतः सिक्तमङ्गं यस्य तथोक्तः। निस्तीर्णं उरु गुर्वी प्रतिज्ञा एव जलनिधिः तस्य गहनं दुस्तरो भागो येन। निस्तीर्णः उरुः प्रतिज्ञा एव गहनः जलनिधिर्येन इति वा। ] जलनिधिगहन इत्यत्र पूर्वनिपातविधेरनित्यत्वमेव समाधानम्। क्रोधनः कोपशीलः क्षत्रियः अस्मि। भो भो समरमेव शिखी तस्य शिखाभिर्दग्धास्तेभ्यः शेषा अवशिष्टाः राजन्यवीराः वः अनेन त्रासेन कृतमलं यत् हता ये करितुरगास्तैः अन्तर्हितैः तिरोहितैः अतः लीनैर्लयंगतैरिव युष्माभिः आस्यते स्थीयते। न तथा स्थातव्यामिति भावः। त्रासफलमेतत्॥ ३७॥

---

१ उपनीयतां मे सज्जं धनुः २ संभृतं. ३ शत्रुं. ४ तद्रूपिणं. ५ न च. ६ रौद्रवेशो भीम०. ७ जलाह्लादिताङ्गः ( टी. ); लाभ्युक्षिताङ्ग. ८ भुक्तशेषाः इति दर्पणकृतः पाठः. ९ किम्.

**कञ्चुकी**—देवि पाण्डुस्नुषे उत्तिष्ठोत्तिष्ठ। संप्रति झटिति चित्ताप्रवेश एव श्रेयान्।

**द्रौपदी**-(सहसोत्थाय।) कथं न संभावयाम्यद्यापि चितासमीपम्।(क)

**युधिष्ठिरः**—कः कोऽत्र भोः। सैनिषङ्गं[1] धनुरुपनय। कथं न कश्चित्परिजनः। भवतु। बाहुयुद्धेनैव दुरात्मानं[2] गाढमालिङ्ग्य ज्वलनमभिपातयामि। (परिकरं बध्नाति।)

**कञ्चुकी**—देवि पाण्डुस्नुषे संयम्यन्तामिदानीं नयनोपरोधिनो[3] दुःशासनावकृष्टा मूर्धजाः। अस्तामिता संप्रति प्रतीकाराशा। चितासमीपमेव[4] द्रुततरं संभावय।

**युधिष्ठिरः**—कृष्णे न खल्वनिहते तस्मिन्दुरात्मनि दुर्योधने संहर्तव्याः केशाः।

**भीमसेनः**—पाञ्चालि न[6] खलु मयि जीवति संहर्तव्या दुःशासन-विलुलिता वेणिरात्मपाणिभ्याम्। तिष्ठतु तिष्ठतु। स्वयमेवाहं संहरामि।

**द्रौपदी**—(भयादपसर्पति।)

**भीमसेनः**—तिष्ठ तिष्ठ भीरु क्वाधुना गम्यते। (इति केशेषु ग्रहीतुमिच्छति।)

**युधिष्ठिरः**—(वेगाद्गाढमालिङ्ग्य।) दुरात्मन् भीमार्जुनशत्रो सुयोधनहतकं[5]

**आशैशवादनुदिनं जनितापराधो**
**मत्तो[10] बलेन भुजयोर्हतराजपुत्रैः[11]।**

---

(क) कहं ण संभावेमि अज्जवि चिदासमीवम्।

---

[झटिति सत्वरम्। विलुलिता विस्खलिता। निषङ्गेन तूणीरेण सहितम् परिकरः पर्यङ्कपरिवारयोः इत्यमरः। न खलु नैवेत्यर्थः। **आशैशवादिति**। [पाप आशैशवाद्बाल्यात्प्रति अनुदिनं दिने दिने जनिताः कृताः कारिताश्च अपराधा येन स तथा। भुजयोर्बलेन मत्तः। हतौ राजपुत्रौ भीमार्जुनौ येन स तथा। त्वमद्य मे भुजौ एव पञ्जरं तस्य अन्तरमासाद्य जीवन् पदात्पदमपि न प्रयासि।]

---

१ उपनीयतां सनिषङ्गं धनुः। (परिवृत्यावलोक्य च।) कथं न कश्चिच्छृणोति परिजनः. २ संभावनविहस्तमेनं (टी.). ३ नयनपथावरोधिनः. ४ द्रुतं चितासमीपं. ५ दुर्योधनहतके. ६ न खलु न खलुः ०विरूपिता;—संयमितव्यात्मपाणिना दुःशासन-कृष्टा वेणी। ७ परिक्रामति। ८ बलात्. ९ अस्मात्परं—क्वेदानीं यास्यसीत्यधिकं क्वचित्. १० क्षीबो मदेन. ११ पुत्र.

ओंसाद्य मेऽन्तरमिदं भुजपञ्जरस्य
जीवन्प्रयासि न पदात्पदमद्य पापं ॥ ३८ ॥

**भीमसेनः**—[3]अये कथमार्यः सुयोधनशङ्कया क्रोधान्निर्दयं मामालिङ्गति[4] ।

**कञ्चुकी**—( निरूप्य[5] । सहर्षम् । ) महाराज [6]वञ्च्यसे । अयं खल्वायुष्मान्भीमसेनः सुयोधनक्षतजारुणीकृतसकलशरीराम्बरो दुर्लक्षव्यक्तिः । अलमधुना संदेहेन ।

**चेटी**—( द्रौपदीमालिङ्ग्य । ) देवि निवृत्यतां निवृत्यतां । एष खलु पूरितप्रतिज्ञाभारो नाथस्ते वेणीसंहारं कर्तुं त्वामेवान्विष्यति । (क)

**द्रौपदी**—हञ्जे किं मामलीकवचनैराश्वासयसि । ( ख )

**युधिष्ठिरः**—जयंधर[7] किं कथयसि नायमनुजद्वेषी दुर्योधनहतकः ।

**भीमसेनः**—देव[8] अजातशत्रो भीमार्जुनगुरो कुतोऽद्यापि दुर्योधनहतकः । [9]मया हि तस्य दुरात्मनः पाण्डुकुलपरिभाविनः—

( क ) [10]देवी णिवट्टीअदु णिवट्टीअदु । एसो क्खु पूरिदपडिण्णाभारो णाहो दे वेणीसंहारं कादुं तुवं एव्व अण्णेसेदि ।

( ख ) हञ्जे किं मं अलीअवअणेहिं ओंसासेसि[11] ।

[ पाटान्तरे ] संकटं मध्यम् । त्वं जीवन्सन्पदात्पदमप्यवश्यं न प्रयासि न प्रयास्यसि । वर्तमानसामीप्ये वर्तमानवद्वा इति भविष्यति लट् । यद्वा । तत्कालीन क्रियायां वर्तमानत्वाद्वर्तमाने लट् ॥३८॥ [ सुयोधनस्य क्षतजेन अरुणीकृतं रक्तीकृतं सकलं शरीरं अम्बरं च यस्य स तथोक्तः । दुर्लक्षा दुर्ज्ञेया व्यक्तिः स्पष्टाकारो यस्य स तथा ।] वेणीसंहारं वेणीबन्धनम् । अलीकवचनैः [ मिथ्याभाषणैः । ] पाण्डुकुलं परि-

१ आसाद्य संकटमिदं...पदमप्यवश्यम् ( टी. ). २ पापः. ३ ( सस्मितम् । ) अये. ४ अस्मात्परं—देव अजातशत्रो भीमार्जुनगुरो यथैवाज्ञापयसि न तथैवैतत् ।; आर्य प्रसीद प्रसीद । इ० पाठावधिकौ क्वचित्. ५ ( उपगम्य,--सृत्य । ) कथं कुमारो भीमसेनः । दिष्ट्या वर्धसि महाराज । भीमसेन एवायम् । ६ दिष्ट्या वर्धसे; वर्धसे वर्धसे । अयं खलु कुमारभीमसेनः. ७ जयंधर अपि सत्यं नायं मम वैरी--नायमनुजवैरी--; अनुजद्वेषी दुरात्मा; युधि०--( स्वैरं मुक्त्वा । भीमसेनमनवलोकयन् । ) जयंधर इ०. ८ आर्य, देव. ९ मया निहतस्य दुरात्मनस्तस्य. १० समस्ससदु समस्ससदु देवी । भट्टिणि अअं क्खु पूरिदपडिण्णाभारो णाहो दे. ११ आसासेसि इत्यस्मादनन्तरं कञ्चुकी—महाराज वञ्च्यसे । ( इति पूर्वोक्तमेवाभिधत्ते । ) इति क्वचिदधिकः पाठः.

भूमौ क्षिप्तं शरीरं निहितमिदमसृक्चन्दनाभं निजाङ्गे
लक्ष्मीरार्ये निषण्णा चतुरुदधिपयःसीमया सार्धमुर्व्या।
भृत्या मित्राणि योधाः कुरुकुलमखिलं दग्धमेतद्रणाग्नौ
नामैकं यद्ब्रवीषि क्षितिप तदधुना धार्तराष्ट्रस्य शेषम् ॥ ३९ ॥

**युधिष्ठिरः**—( स्वैरं मुक्त्वा भीममवलोकयन्नश्रूणि प्रमार्जयति। )

**भीमसेनः**—( पादयोः पतित्वा। ) जयत्वार्यः।

**युधिष्ठिरः**—वत्स बाष्पजलान्तरितनयनत्वान्न पश्यामि ते मुखचन्द्रम्। तत्कथय कच्चिज्जीवति भवान्समं किरीटिना।

**भीमसेनः**-निहतसकलरिपुपक्षे त्वयि नराधिपे जीवति भीमोऽर्जुनश्च

**युधिष्ठिरः**—( पुनर्गाढमालिङ्ग्य। )

रिपोरास्तां तावन्निधनमिदमाख्याहि शतशः
प्रियो भ्राता सत्यं त्वमसि मम योऽसौ बकरिपुः॥

**भीमसेनः**—आर्य सोऽहम्।

**युधिष्ठिरः**—

जरासंधस्योरःसरसि रुधिरासारसलिले
तटाघातक्रीडाललितमकरः संयति भवान् ॥ ४० ॥

**भीमसेनः**—आर्य स एवाहम्। तन्मुञ्चतु मामार्यः क्षणमेकम्।

**युधिष्ठिरः**—किमपरमवशिष्टम्।

---

भवतीति पाण्डुकुलपरिभावी तस्य। **भूमाविति**। [मया तस्य शरीरं भूमौ क्षिप्तम्। इदं तस्य असृक् चन्दनेन सदृशं यथा तथा चन्दनाभं निजाङ्गे निहितम्। चतुर्णामुदधीनां पयांस्येव सीमानो यस्याः सा तथोक्तया उर्व्या। भूम्या सह श्रीः आर्ये त्वयि निषण्णा स्थिता। भृत्याः कुरूणामिति शेषः। [ मित्राणि योधाः अखिलं कुरुकुलं च इत्येतद्रणाग्नौ दग्धम्। हे क्षितिप यद् नाम ब्रवीषि तदेकमधुना धार्तराष्ट्रस्य दुर्योधनस्य। शेषमवशिष्टम्।] शेषशब्दोऽयं कर्मण्यजन्तो वाच्यलिङ्ग इत्यवधेयम् ॥ ३९ ॥ **रिपोरिति**। रिपोर्निधनं तावदास्ताम्। शत्रुनाशं न पृच्छामीत्यर्थः। इदं शतशः शतं वारानाख्याहि कथय। सरसि जलधाविति व्यस्तरूपकम्। तटाघातो जलधितटहननम्। मकरो जलजन्तुभेदः। क्रीडाललितमकरोत् इति पाठे यः क्रीडाललितं क्रीडारूपं विलासं चकारेत्यर्थः ॥ ४० ॥

---

१ क्षिप्त्वा. २ चन्दनं भीमगात्रे. ३ निषिक्ता. ४ (सत्वरं मुक्त्वा भीमसेनमवलोकयन्नंसे परामृश्य।) तात भीम पृथानन्दन पाण्डुकुलप्रदीप। भीम०—आज्ञापय। इ. पाठ उपलभ्यते. ५ सस्नेहं पु०; अस्मात्परं तात भीम इत्य. क. ६ सहसा. ७ भो मम भवसि. ८ सारजलधौ; गाधसलिले. ९ मकरोयः स तु भवान्. १० आर्य मुञ्चतु मां क्षणमेकं भवान्.

**भीमसेनः**—आर्य सुमहदवशिष्टम् । संयच्छामि तावदनेन सुयो-[1]धनशोणितोक्षितेन पाणिना पाञ्चाल्या दुःशासनावकृष्टं केशहस्तम् ।

**युधिष्ठिरः**—सत्वरं गच्छतु भवान् । अनुभव[2]तु तपस्विनी वेणीसंहारमहोत्सवम् ।

**भीमसेनः**[3]—( द्रौपदीमुपसृत्य ) देवि पाञ्चालराजतनये दिष्ट्या वर्धसे रिपुकुलक्षयेण । अलमलमेवंविधं मामालोक्य त्रासेन ।

**कृष्टा येनासि राज्ञां सदसि नृपशुना तेन दुःशासनेन**
**स्त्यानान्येतानि त[4]स्य स्पृश मम करयोः पीतशेषाण्यसृञ्जि ।**
**कान्ते राज्ञः कुरूणा[6]मपि सरसमिदं मद्गदाचूर्णितोरो-**
**रङ्गेऽङ्गेऽसृङ्‌निषक्तं तव परिभवजस्यानलस्योपशान्त्यै ॥ ४१ ॥**

बुद्धिमतिके क[7]ँ सा संप्रति भानुमती योपहसति पाण्डवदारान् । भवति यज्ञवेदिसंभवे याज्ञसेनि ।

**द्रौपदी**—आज्ञापयतु नाथः । ( क )

**भीमसेनः**—स्मरति भवती यन्म[9]योक्तम् । ( चञ्चद्भुजेत्यादि १-२१ पूर्वोक्तं पठति । )

**द्रौपदी**—नाथ न केवलं स्मरामि । अनुभवामि च नाथस्य प्रसादेन । ( ख )

**भीमसेनः**—( वेणीमवधूय । ) भवति संयम्यतामिदानीं धार्तराष्ट्र-कुलकालरात्रिर्दुःशासनविलुलितेयं वेणी ।

---

( क ) आणवेदु णाहो ।

( ख ) णाह ण केवलं सुमरामि । अणुहवामि अ णाहस्स प्पसादेण ।

---

कृष्टेति । [ येन नृपशुना तेन प्रसिद्धेन दुःशासनेन राज्ञां सदसि कृष्टासि तस्य मत्पीत-शेषाणि मम करयोः स्थितानि स्त्यानानि असृंजि स्पृश । हे कान्ते मद्गदया चूर्णितौ ऊरू यस्य तस्य कुरूणां राज्ञोपि सरसं मम अङ्गे अङ्गे निषक्तं असृक् रक्तं तव परि-भवजस्य अनलस्य उपशान्त्यै भवेत् । ] ॥ ४१ ॥ निर्वहणमिह श्लोके । यदुक्तं तत्रैव—पूर्वं प्रसारितानां तु बीजादीनां समापनम् । निर्व्यूढत्वेन क्रियते तन्निर्वहण-मीरितम् ॥ नाथस्य प्रसादेन पुनरनुभवामि । [ अवधूय आस्फाल्य । धार्तराष्ट्रकुलस्य

---

१ दुर्योधनदुःशासनरुधिरोक्षितेन;—ताङ्कन. २ अनुभवतु तावत्. ३ भीम०—भवति. पाञ्चाल०—। द्रौपदी—( उपसृत्य । ) जेदु जेदु णाहो । ( इति भयादपसर्पति । ) भीम०—राजपुत्रि अलमेवं मामालोक्य त्रासेन । पश्य—कृष्टा. ४ तस्मिन्; केशेषु तस्मिन्. ५ भीरु. ६ मतिसर० । ०पि रुधिर०...रङ्गेष्वङ्गेषु सक्तं तव रिपुजनितस्या०. ७ क भा० नोपहसति पाण्डवदारान्; परिभवतु संप्रति पाण्डवदारान्. ८ एतत्कचिन्नास्ति. ९ स्मरसि पाञ्चालराजतनये यन्मया प्रतिज्ञातम्; यत्तन्मयो०.

**द्रौपदी**—नाथ विस्मृतास्म्येतं व्यापारम् । नाथस्य प्रसादेन पुनरपि शिक्षिष्ये । (क)

**भीमः**—( वेणीं बध्नाति । )

( नेपथ्ये । )

महासमरानलदग्धशेषाय स्वस्ति भवतु राजन्यकुलाय ।

**क्रोधान्धैर्यस्य मोक्षात्क्षतनरपतिभिः पाण्डुपुत्रैः कृतानि**
**प्रत्याशं मुक्तकेशान्यतुलभुजबलैः पार्थिवान्तःपुराणि ।**
**कृष्णायाः केशपाशः कुपितयमसखो धूमकेतुः कुरूणां**
**सोऽयं बद्धः प्रजानां विरमतु निधनं स्वस्ति राज्ञां कुलेभ्यः ॥४२॥**

**युधिष्ठिरः**—देवि एष ते वेणीसंहारोऽभिनन्द्यते नभस्तलसंचारिणा सिद्धजनेन ।

( ततः प्रविशतः कृष्णार्जुनौ । )

**कृष्णः**—( युधिष्ठिरमुपगम्य । ) विजयतां निहतसकलारातिमण्डलः सानुजः पाण्डवकुलचन्द्रमा महाराजो युधिष्ठिरः ।

**अर्जुनः**—जयत्वार्यः ।

---

(क) णाह विसुमरिदह्मि एदं बावारम् । णाहस्स प्पसादेण पुणो वि सिक्खिस्सेम् ।

---

कालरात्रिः प्रलयकरी । विलुलिता अवकृष्टा व्यत्यस्ता च । एतं व्यापारं केशबन्धनम् । ] नाथ विस्मृतोऽयं व्यापारो मया । सांप्रतं नाथस्य । **क्रोधान्धैरिति** । [ यस्य केशपाशस्य मोक्षान्मोचनात् क्रौधेनान्धैः क्रोधान्धैः क्षता नरपतयो यैस्तैः क्षतनरपतिभिः । अतुलं भुजयो बलं येषां तैः अतुलभुजबलैः पाण्डुपुत्रैः । आशामाशायामिति प्रत्याशं प्रतिदिशं प्रार्थिवान्तःपुराणि पृथिव्या ईश्वराः पार्थिवा नृपास्तेषामन्तःपुराणि लक्षणया तत्रस्थाः स्त्रियः । मुक्ताः केशा येषां तानि मुक्तकेशानि कृतानि । भर्तृविनाशाद्वैधव्यप्रापणादिति भावः । सः अयं कुपितस्य यमस्य सखा कुपितयमसखः । राजाहःसखिभ्यष्टच् । कुरूणां धूमकेतुः नाशहेतुत्वात् । कृष्णायाः केशपाशः केशकलापः । बद्धः । प्रजानां निधनं संग्रामे इति शेषः । विरमतु । राज्ञां कुलेभ्यः स्वस्ति भूयात् । अत्र पूर्वार्धे काव्यलिङ्गमलंकारः । उत्तरार्धे उपमा रूपकं चेत्येतयोः संसृष्टिः । ] पार्थिवोऽत्र दुर्योधनः । तथा च दुर्योधने हते तदन्तःपुरनार्यः अनिबद्धकेशाः कृता इति भावः । दिष्ट्येति आनन्दहेतुः ॥ ४२ ॥

---

१ चेटी. २ राज०; राजन्यलोकाय; महासमरानल.........इति पाठः क्वचिन्नास्ति. ३ मोक्षे हत०; कुरुनर०. ४ क्षेपान्निर्मुक्त०. ५ न्यनुदिनमधुना. ६ दिष्ट्या. ७ राजन्यकेभ्यः०. ८ मूर्धजानां संहाराभिनन्दितः; कंचुकी—कुमार एष वेणीसंहारोऽभिनन्दितः सिद्धजनेन इ० पा० क्वचित्—सिद्धचारणजनेन. ९ वासुदेवा०—केशवार्जुनौ. १० उभौ—( उपगम्य । ) कृष्णः—११ अयं भग०; कथ भगवान्वासुदेवः किरीटी च । इ० पा०

**युधिष्ठिरः**—( विलोक्य ) अये भगवान्पुण्डरीकाक्षो वत्सश्च किरीटी। भगवन् अभिवादये ( किरीटिनं प्रति। ) एह्येहि वत्स।

**अर्जुनः**—( प्रणमति। )

**युधिष्ठिरः**—( वासुदेवं प्रति। ) देव कुतस्तस्य विजयादन्यद्यस्य भगवान्पुराणपुरुषो नारायणः स्वयं मङ्गलान्याशास्ते।

**कृतगुरुमहदादिक्षोभसंभूतमूर्तिं**
**गुणिनमुदयनाशस्थानहेतुं प्रजानाम्।**
**अजममरमचिन्त्यं चिन्तयित्वापि न त्वां**
**भवति जगति दुःखी किं पुनर्देव दृष्ट्वा॥ ४३॥**

( अर्जुनमालिङ्ग्य। ) वत्स परिष्वजस्व माम्।

**कृष्णः**—महाराज युधिष्ठिर

**व्यासोऽयं भगवानमी च मुनयो वाल्मीकिरामादयो**
**धृष्टद्युम्नमुखाश्च सैन्यपतयो माद्रीसुताधिष्ठिताः।**

---

पुण्डरीकाक्ष कृष्णः। आशास्ते स्वीकरोति। [ सिद्धा देवयोनिविशेषाः। ] **कृतेत्यादि**। हे देव जगति त्वां चिन्तयित्वापि जनो दुःखी न भवति। किं पुनर्दृष्ट्वा दुःखी भवति। अपि तु न भवतीति भावः। कीदृशम्। कृता गुरोः स्थूलद्रव्यस्य महदादेर्महत्तत्त्वबुद्धितत्त्वादेः पर्वतादेर्वा क्षोभेन परिणामेन संभूता व्यापिका मूर्तिस्त्रिनयनत्वादिरूपा येन तम्। यद्वा। कृतो गुरुः पर्वतादिर्येन स तथा। महदादेराकाशादेः क्षोभेन मिलनेन महाभूतसमाधिना संभूता कृतास्मदादेर्मूर्तिः शरीरं येन स तथा। पश्चाद्विशेषणसमासः। यद्वा। कृतं गुरुकार्यं द्रव्यं येन तादृशेन महदादिना कालाकाशादिना संभूता मिलिता मूर्तिर्यस्य तम्। सामान्यकारणेन सह भगवान्वेदादिकर्तेति भावः। अत एव गुणिनं वेदादिसृष्टियोग्यप्रयत्नादिमन्तम्। यद्वा। गुणाः सत्त्वरजस्तमोरूपास्तद्योगिनं लोकसृष्टिनाशस्थैर्यकारणं च। तथा च सत्त्वरजस्तमोरूपं गुणत्रयं सहकारि समासाद्य हरिहरहिरण्यगर्भैरवतारैरयं भगवान्कार्यत्रयकर्तेति भावः। [ स्थानं स्थितिः ] अजमजन्यम्। अमरमनाश्यम्। [ अजरमिति पाठे जरारहितमविकारमित्यर्थः। ] अचिन्त्यं वाङ्मनसागोचरम्। तदुक्तम्—यतो वाचो निवर्तन्ते अप्राप्य मनसा सह इति। अथ च विरोधाभासः। यो हि संभूतमूर्तिः स कथमजः। यो ह्यचिन्त्यस्तस्य कथं चिन्तेति। अविरोधस्तु दर्शित एव॥४३॥ **व्यासोऽयमिति**। [ अयं भगवान् व्यासः अमी च वाल्मीकि-

---

१ अस्मात्परं—( केशान्बध्नाति। ) इति दशरूपके पाठः. २ किमुत मे. ३ पुण्डरीकाक्षः स्वयं. ४ संभूतिमुक्तं. ५ मजर. ६ त्वा भवन्तं. ७ जगद्दुःखं ( द. रू. ). ८ महाराज अजातारे सत्यवादिन्; कृष्णः—एते खलु भगवन्तो व्यासवाल्मीकिजामदग्न्यजाबालिप्रभृतयो महर्षयः कल्पिताभिषेकमङ्गला नकुलसहदेवसात्यकिप्रमुखाश्च सेनापतयो यादवमत्स्यमागधकुलसंभवाश्च राजकुमाराः स्कन्धोत्तम्भिततीर्थवारिकलशास्तवाभिषेकं धारयन्ति धारयन्तस्तिष्ठन्ति ( टी. )

प्राप्ता मागधमत्स्ययादवकुलैराज्ञाविधेयैः समं
स्कन्धोत्तम्भिततीर्थवारिकलशा राज्याभिषेकाय ते ॥ ४४ ॥

अहं पुनर्दुरात्मना चार्वाकेण विप्रकृतं भवन्तमुपलभ्यार्जुनेन सह त्वरिततरमायातः।

**युधिष्ठिरः**—कथं[2] चार्वाकेण रक्षसा वयमेवं विप्रलब्धाः।

**भीमसेनः**[3]—( सरोषम्। ) क्वासौ धार्तराष्ट्रसखा पुण्यजनापसदो येनार्यस्य महांश्चित्तविभ्रमः कृतः।

**कृष्णः**—नि[4]गृहीतः स दुरात्मा नकुलेन। त[5]त्कथय महाराज किमस्मात्परं समीहितं संपादयामि।

**युधिष्ठिरः**—एवं पुण्डरीकाक्ष न[6] किंचिन्न ददाति भगवान्प्रसन्नः। अ[7]हं तु पुरुषसाधारणया बुद्ध्या संतुष्यामि। न खल्वतः परमभ्यर्थयितुं क्षमः। पश्यतु देवः।

क्रो[8]धान्धैः सकलं हतं रिपुकु[9]लं पञ्चाक्षतास्ते वयं
पाञ्चाल्या मम दुर्नयोप[10]जनितस्तीर्णो निकारार्णवः[11]।
त्वं देवः पुरुषोत्तमः सुकृतिनं मामादृ[12]तो भाषसे
किं नामान्यदतः परं भगवतो याचे प्रसन्नादहम् ॥ ४५ ॥

---

रामादयः मुनयः। रामः परशुरामः। माद्रीसुताभ्यामधिष्ठिपाः धृष्टद्युम्नमुखाः धृष्टद्युम्नो मुखमाद्यो येषां ते तथा। आज्ञाविधेयैः मागधमत्स्ययादवकुलैः समं सह। स्कन्धेन उत्तम्भिता उत्तोलिता। तीर्थवारि जाह्नवीप्रभृतिजलं तस्य कलशा यैस्ते तथोक्ताः ते तव राज्याभिषेकाय प्राप्ता उपस्थिताः सन्तीति शेषः ] ॥ ४४ ॥ [ पाठान्तरे ] जाबालिनामा मुनिः। [ पुण्यजनेषु राक्षसेषु अपसदो नीचः। ] इहोच्यतां किमन्यदित्यनेन काव्यसंहाररूपकनिर्वहणसंधिः। यदाह——वरप्रदान-संप्राप्तिः काव्यसंहार उच्यते। किंचिन्न न ददासि। किं तु ददास्येव। द्वौ निषेधौ प्रकृतमर्थं गमयतः। [ पुरुषेषु साधारणी पुरुषसाधारणी ] तया। क्रोधान्धैरिति। क्रोधान्धैरर्थात्पञ्चपाण्डवैरेव। [ ते वयं ] पञ्च पाण्डवा अक्षता इत्यन्वयः। पाञ्चाल्या निकारसिन्धुः [ परिभवसागरः ] मम दुर्नयेन [ द्यूतपरिपणनादिना ] विहितस्तीर्णः। पुरुषोत्तम इति। पुरुषेभ्य उत्तम इति समासः। न तु पुरुषेषूत्तम इति। न निर्धारणे इति निषेधात्। न चानेन षष्ठी-

---

१ अहमपि; चार्वाकेण रक्षसा व्याकुलीकृतं...सत्वरमागतः; व्यास—जयंधर-मुखादुपश्रुत्यार्जुनेन. २ किं नाम चार्वाकेण विप्रलब्धा वयम्। ३ एतन्नास्ति क्वचित्. ४ गृहीतः ५ युधिष्ठिरः—प्रियं नः। वासुदेवः—उच्यतां किं ते भूयः प्रियमुपकरोमि। टी०. ६ किं न ददासि प्रसन्नः। अतःपरमपि प्रियमस्ति। ७ न खल्वतः परं प्रियमभ्यर्थये। यतः ...। पश्यतु देवः; पुरुषार्थचतुष्टयया बुद्ध्या न खल्वतः—...८ क्रोधात्तत्. ९ बलं. १० दुर्नये पातितया; दुर्नयेन विहितः. ११ निकारोदधिः. १२ मामय संभाषसे.

तथापि प्रीततरश्चेद्भगवांस्तदिदमस्तु।

अकृपणमरुक्श्रान्तं जीव्याज्जनः पुरुषायुषं
भवतु भगवन्भक्तिर्द्वैतं विना पुरुषोत्तमे।
दयितभुवनो विद्वद्बन्धुर्गुणेषु विशेषवि-
त्सततसुकृती भूयाद्भूपः प्रसाधितमण्डलः॥ ४६॥

अपि च

अवनिमवनिपालाः पान्तु वृष्टिं विधत्तां
जगति जलधराली शस्यपूर्णास्तु भूमिः।
त्वयि मुरनरकारौ भक्तिरद्वैतयोगा-
द्भवतु मम सुदीर्घं हव्यमश्नन्तु देवाः॥ ४७॥

कृष्णः—एवमस्तु।

(इति निष्क्रान्ताः सर्वे।)

**इति षष्ठोऽङ्कः।**

**समाप्तमिदं वेणीसंहारं नाम नाटकम्।**

---

समासनिषेधो न तु सप्तमीसमासनिषेध इति वाच्यम्। तथा सति षष्ठीसमास-स्याप्राप्तेरेव निषेधात्सर्वत्र सप्तमीसमासेनैव प्रयोगसिद्धेः। तस्मात्पञ्चमीसमास एवायमित्यदोषः। सुकृतिनं पुण्यवन्तम्॥ ४५॥ अकृपणमिति। अकृपणं कार्पण्यरहितमरुक्श्रान्तं न रोगेण परिश्रान्तं च यथा स्यादेवं लोकः पुरुषायुषं जीव्याज्जीवतु। पुरुषायुषमिति अचतुर–इत्यादौ साधितम्। हे भगवन् द्वैतं विनाऽद्वैतक्रमेण। पुरुषोत्तमे भक्तिर्भवतु। मम जनानां चेति शेषः। पण्डितगुणेषु पण्डितजनो विहितहृदयो दत्तचित्तः सानुरागो वा भवतु। भूपः [दयितं भुवनं यस्य तथा प्रियलोकः। विदुषां बन्धुः। विशेषविद्विशिष्टगुणज्ञः] सदा पुण्यवा-न्प्रसाधितराजचक्रश्च भूयात्॥ ४६॥ [जलधराली मेघपंक्तिः जगति वृष्टिं विधत्ताम्। भूमिः शस्यैः पूर्णा धान्यादिसमृद्धिमती अस्तु। मुरनरकयोस्तन्नामक-दैत्ययोः शत्रौ। अद्वैतयोगादनन्यमनसा भक्तिः भवतु। देवाः हव्यं होमेषु हुतमा-ज्यादि सुदीर्घं बहुकालमश्नन्तु]॥ ४७॥

---

१ प्रीतः—...मस्तु भरतवाक्यम्। २ अकृपणमतिः कामं......च भगवद्भक्तिर्द्वयं विना पुरुषोत्तम। इ० पा०. ३ अस्मात्परमिदमधिकं पद्यं क्वचिदुपलभ्यते—

स्वस्ति श्रीस्तनपत्रभङ्गमकरीमुद्राङ्कितोरःस्थलो
हेतुः सर्वजये सुरासुरवधूवक्त्राब्जचन्द्रोदयः।
क्रोडाक्रीडतनोर्नवेन्दुविशदे दंष्ट्राङ्कुरे यस्य भू-
र्भाति स्म प्रलयाब्धिपङ्किलतलोत्खातैकमुस्ताकृतिः॥ १॥

इदं च विदग्धस्निग्धवियोगदुर्मनसा विप्रलपितं तेन कविना—

काव्यालापसुभाषितव्यसनिनस्ते राजहंसा गता-
　स्ता गोष्ठ्यः क्षयमागता गुणलवश्लाघ्यास्तु वाचः सताम्।
सालंकाररसप्रसन्नमधुराकाराः कवीनां गिरः
　प्राप्ता नाशमयं तु भूमिवलये जीयात्प्रबन्धो महान्॥ ४८॥

---

विदग्धा नागराः। स्निग्धाः स्नेहवन्तः। तेषां योऽत्र वियोगो विश्लेषस्तेन दुर्मनायमानं मनो यस्य तेन कविनेदं विप्रलपितम्। तदाह—काव्यानामिति। ते राजहंसा राजश्रेष्ठा गताः। राजवंश्याः इति पाठे राजान इत्यर्थः। कीदृशाः काव्यानां किरातादीनां सुभाषिते सूक्तौ व्यसनं येषां ते तथा। ताश्च गोष्ठ्यः क्षयं नाशमागताः। तथा च सत्कविताग्राहका नरपत्यादयो न सन्त्येवाधुनेति भावः। सतां साधूनां वाचः पुनर्गुणलवैर्गुणकणैः श्लाघ्याः श्लाघाविषयाः। सत्कवीनां या गिरः सालंकारा रसोक्त्या वक्राः। अनृजवो मधुराः कोमलाश्च। तासां गुणान्तरं गुणाधिक्यमिदमस्तु। यथाकामेप्सितानां मनीषितानां गुणान्तरं भवति तथेत्यर्थः। अत्र च कवेरयमाशयः। मत्कवितायाअप्यलंकारशालिता रसयोगिता च स्वभावसिद्धैव। भगवत्प्रसादेन पुनर्गुणान्तरयोगित्वमपि भवतु। तथा च काव्यलक्षणं समस्तमिहापि स्यात्। तत्कर्तृतया च कीर्तिविवर्तलाभः प्रीतिलाभश्च स्यादिति। तदुक्तं सरस्वतीकण्ठाभरणे—निर्दोषं गुणवत्काव्यमलंकारैरलंकृतम्। रसान्वितं कविः कुर्वन्कीर्तिं प्रीतिं च विन्दति॥ इति॥ ४८॥

---

कतीह नाटकाम्बुधौ स्फुरन्ति नोज्ज्वला रसाः।
　मदीयबुद्धिरल्पिका क्व वेद तानशेषतः॥ १॥
नानादरं मम कृतौ नियतं तनुध्व-
　मत्राधुनातनतया गुणदोषविज्ञाः।
ग्राह्यं शिशोरपि सुभाषितमित्थमात्थ
　यूयं ततोऽपि मम टिप्पनमाद्रियध्वम्॥ २॥
लब्धं दुर्लभशासनं सुरगणग्रामोऽभिरामो गुणै-
　र्विद्यावंशविभूषणे अपि शुभे छत्रे उभे धारिते।
येनायं समभूद्द्विजातितिलकश्चण्डेश्वरः पण्डितो
　मीमांसैकरहस्यवश्यहृदयो दानावदाताशयः॥ ३॥

---

१ विदग्धविवेकदुर्मनसा. २ गुणलवश्लाघ्यः प्रवादः सताम्. ३ न. ४ शान्तिं प्रापुरवाप दुर्जनगणो वाक्याटवीं सांप्रतम्।

प्रासूतासावहितनगरीनागरीगीतकीर्ति
  विप्रं क्षिप्रं गुणदमधिकं वेदपूर्वं धरं तम् ।
कैवर्तानामलभत नृपाच्छासनं सोथमुच्चै-
  रापत्पुत्रं गुणमयतनुं रामपूर्वं धरान्तम् ॥ ४ ॥
सोऽयं ध्रुवामनगरे पदमाप शुद्धे
  मीमांसको विमलकीर्तिपवित्रमूर्तिः ।
पुत्रं गदाधरमवाप गुणैरगाधं
  सत्तान्त्रिकं गुणिगणप्रथिताभिमानम् ॥ ५ ॥
असूत विद्याधरमेव धीरं गुणैरनूनं सुकृताधिवासम् ।
  तं रत्नपूर्वं धरमाप पुत्रं सोऽपि प्रसिद्धं गुणिनां गुणेन ॥ ६ ॥
दमयन्त्यामयं धीरो लेभे सुतमरिंदमम् ।
  श्रीजगद्धरनामानमनर्घगुणशालिनम् ॥ ७ ॥
विद्याछत्रं कुलच्छत्रं धारितं येन धीमताम् ।
  जगद्धरः सुरगणे सोऽयं नैयायिकः कविः ॥ ८ ॥
येनापाठि कठोरगौतममतं वैशेषिकं खण्डनं
  येनाश्रावि सकोषकाव्यनिवहं तत्पाणिनीयं मतम् ।
छन्दोऽलंकरणं च शुद्धभरतं येनाध्यगायि स्थिरं
  तेनानेन जगद्धरेण कविना टीका कृतेयं मुदा ॥ ९ ॥
नानालंकृतिसुन्दरी रसवती नानागुणानां निधि-
  र्नानाभावविभावनैकचतुरा नानार्थसार्थाधिका ।
टीकेयं विमलाङ्गनेव रहिता दोषैरशेषैरत-
  स्तामेतामधिभूषयन्तु कृतिनस्तेभ्यो नमः सर्वदा ॥ १० ॥
यदि भवति मदीयग्रन्थमध्ये प्रमादः
  क्वचिदपि स महिम्ना शोधनीयो महद्भिः ।
स्खलति गमनकारी प्रायशो नात्र चित्रं
  भवति च गुरुहस्तालम्बनोऽपि प्रकारः ॥ ११ ॥
असूत यं रत्नधरो गुणीशो नानागुणाढ्या दमयन्तिकापि ।
  जगद्धरं तस्य कृतौ व्यरंसीत्षष्ठोऽयमङ्को वरटिप्पनेऽत्र ॥ १२ ॥

**इति महामहोपाध्यायधर्माधिकारिकश्रीजगद्धरकृतौ**
**वेणीसंहारटीकायां षष्ठोऽङ्कः समाप्तः ।**

**॥ शुभमस्तु ॥**

---

| वेणीसंहारस्थानि सुभाषितानि । | पृष्ठम् |
|---|---|
| अकुशलदर्शना अपि स्वप्ना देवतानां प्रशंसया सुपरिणामा भवन्ति । | ३१ |
| अनुक्तहितकारिता हि प्रकाशयति मनोगतां स्वामिभक्तिम् । | १३९ |
| अनुल्लङ्घनीयः सदाचारः । | १२३ |
| अप्रमत्तसंचरणीयानि रिपुबलानि । | २६ |
| अभिवन्दनीया गुरवः | १९ |
| उपक्रियमाणाभावे किमुपकरणेन । | ११० |
| कालानुरूपं प्रतिविधातव्यम् । | ११६ |
| दैवायत्तं कुले जन्म ( स्वायत्तं तु पौरुषम् । ) | ७५ |
| न किंचिन्न ददाति भगवान्प्रसन्नः । | १६८ |
| न घटस्य कूपपतने रज्जुरपि तत्र प्रक्षेप्तव्या । | ११० |
| न युक्तमनभिवाद्य गुरून्गन्तुम् । | १२३ |
| न युक्तं पराक्रमवतां वाङ्मात्रेणापि विरागमुत्पादयितुम् । | १२७ |
| न युक्तं बन्धुव्यसनं विस्तरेणावेदयितुम् । | १४३ |
| प्रकृतिः दुस्त्यजा । | ७० |
| मोहान्धः कथमिव जनो वेत्तु देवं पुराणम् । | २३ |
| यावत्प्राणिति तावदुपदेष्टव्यभूमिर्विजिगीषुः प्रज्ञावताम् । | ११२ |
| यावदयं संसारस्तावत्प्रसिद्धैवेयं लोकयात्रा यत्पुत्रैः पितरो लोकद्वयेप्यनुवर्तनीया इति । | ६५ |
| वक्तुं सुकरमिदं दुष्करमध्यवसितुम् । | ७४ |
| वंद्याः खलु गुरवः । ( पाठान्तरम् । ) | १९ |
| विश्राव्य नाम कर्म च वन्दनीया गुरवः । | १२३ |
| शाखारोधस्थगितवसुधामण्डले मण्डिताशे पीनस्कन्धे सुसदृशमहामूलपर्यन्तबन्धे । दग्धे दैवात्सुमहति तरौ तस्य सूक्ष्माङ्कुरेस्मिन्नाशाबन्धं कमपि कुरुते छाययार्थी जनोयम् ॥ | १५३–५४ |
| स एव स्निग्धो जनो यः पृष्टः परुषमपि हितं भणति । | ३९ |
| स्त्रीणां हि साहचर्याद्भवन्ति चेतांसि भर्तृसदृशानि । मधुरापि हि मूर्छयते विषविटपिसमाश्रिता वल्ली ॥ | २० |
| स्वप्नजनः किं न खलु प्रलपति । | ३० |

# TRANSLATION.

## Act I.

May this handful of flowers, offered ( lit scattered - at the feet of Hari, bring to us success ( in our performance ) gratifying ( or affording delight ) to the eyes of this audience–the handful of flowers, the buds whereof being full–blown the honey in which is shaken off ( or coveted ) by these bees, though again and again driven off, and which is, as it were, interspersed with the rays of the moon. (1)

Moreover:—

May the successful attempt to pacify Radhika by the enemy of Kamsa, who followed her, as she, angered in sport, walked off on the sandy bank of the Kalindi, giving up all interest in the Rasa dance and with her face sullied with tears, whose hair stood on its end as he planted his steps in her foot–prints and who was ( finally ) looked at by his beloved, then reconciled ( or well–pleased ), grant you prosperity !! (2)

May that Dhurjati ( S'iva ) protect you !–He who, at the burning of the cities constructed by Maya, was looked at with affection by the goddess ( Parvati ); with terror and flurry by the females of the demons not knowing what to make of it (lit. saying what calamity is this ); with a feeling of compassion by sages whose essence of strength is inner quiet ( tranquillity of the mind ), by Vishnu with a smile; by the demon warriors with weapons taken up in their pride, having quieted the agitation of their women-folk; and by gods with delight. * (3)

---

* The alternate Nandi. All glorious is that Damodara, the central support of the universe, from the cavity of whose navelsprang the source ( creator ) of the world ( Brahma ) and in the abyss of whose stomach the mundane egg is finally deposited.

All triumphant is that Krishna, who sleeps on the bed of the body of S'esha, in the midst of the milky ocean, himself looking like another sea of sable appearance.

*( After the recitation of the benedictory stanzas ).*

*The Manager*–Enough of any more preliminaries:–

I salute that Krishna Dwaipa'yana ( Vyasa ), who is free from all passion and taint ( or the operation of the qualities, Rajas and Tamas ) and who produced the nectar known as the Bharata, fit to be drunk in handfuls in the shape of the ears. (4)

( *Looking about* ) We have something to submit to you, worthy leaders of the audience.

This poetic composition is scattered ( exhibited ) before you, here, like another handful of flowers; may you enjoy ( appreciate ) the meagre beauties ( excellences ) it has, although rare, just as the honey-suckers ( lick up ) the drops of honey. (5)

Now then we are prepared to stage the drama, entitled 'Venisamha'ra,' the poetic work of the poet, Bhatta Na'rayana, whose emblem is Mrgara'ja ( the lion among poets ). We, therefore, solicit the attention of your worthy selves ( to this representation ) either out of regard for the labour of the poet, or reverence for the sublime story on which its plot is based, or through the curiosity of seeing a new play. ( acted. )

*( Behind the curtains. )*

Sir, quick, quick; these men by the order of the worthy Vidura speak to the body of Actors—" Let all the operations such as the playing on musical instruments ( Veena' &c. ), properly adjusted be commenced, so that nothing should be allowed to be wanting. Verily, it is the time ( fixed ) for the entering of that revered son of Devaki, holder of a wheel in his hand ( as weapon ), wishing to enter the camp ( collection of tents ) of Duryodhana, the great king, as he, desirous of the good of the family of Bharata, has taken upon himself, of his own accord, the duties of a mediator, and followed by hosts of sages, chief among whom are Vya'sa, Na'rada, Tumburu, and Jamadagni.

*The Manager*—( *Listening rejoicingly.* ) Oh joy, by the divine Vishnu who has the power to create,

protect and destroy the whole universe, has been blessed this family of Bharata, and the whole boby of kings—by him the destroyer of Kamsa, himself acting as a mediator to bring about a reconciliation, with the desire of quenching the world-destroying fire of war, between the Kuru and Pa'ndava princes.

Why then, O Pa'ripa'rshvaka, do not you begin, with the assistance of the actors, rhapsodies of music?

*( Entering )*

*Par.*—Well, here I begin. With reference to what season should the music be?

*Man.*—Let the music be with reference to the autumnal season, which abounds in ( the scenery of ) lakes of tasteful waters, with the round of directions whitened by the pollendust of the Kashas, lotuses, white lilies and the flowers of the Saptacchada trees, and by the families of swans, herons, clusters of constellations, and the moonlight. Moreover, in this season of autumn:—

The Dhartrashtras ( swans; sons of Dhrtarashtra ), with fine *pakshas*( beautiful wings:—noble partisans ) and sweetvoiced, decking the quarters ( by their movements—by occupation ), and of impetuous actions through the flush of youth ( sporting franticly in joy—undertaking valiant deeds or indulging in all sorts of unrestrained acts through arrogance ) will fall (descend, lie dead) on the surface of the earth, (6)

*Par.*—( *In great confusion,* ) Sir, may evil be allayed! May the untoward event be averted!

*Man.*—( *With a smile of embarrassment.* ) Marisha, in connection with the description of autumn, the swans are designated as Dhartarashtras. ( Or in my desire to &c. I designated the swans as Dha. )

*Par.*—Not that I do not know it; but suspecting an evil even in this utterance, to tell you the truth, my heart quaked as it were.

*Man*—Marisha, assuredly the evil is all averted by the enemy of Kamsa mediating—taking upon himself the duties of an ambassador, of his own accord. For,

May the sons of Pandu, the fire of enmity being quenched by the disappearance of enemies ( by reconciliation–by total extinction ), rejoice, in company with Madhava; may also the sons of the king of Kurus be happy, with all their followers, having restored ( their portion of ) the earth to the Pandavas ( thus ) attached to them, all hostilities being stopped thereby ( or the war being avoided ) ! (7)

( Another sense of the latter half )–May the sons of Dhrtara'shtra together with their servants, be the denizens of heaven ( die ), having painted the earth red with their blood and their bodies shattered !

*( Behind the curtain, reprovingly ).*

Ah villain, wretch of an actor, thou ranter of a vain ( mischievous ) benediction !

Can the Dha'rtara'shtras rest in peace whilst I live, having attempted to strike both at our lives and property by using a lac-house-fire, poisoned food, and gambling tryst; and ( to crown all ) having pulled the hair and the apparel of the wife of the Pa'ndavas ? (8)

*( The* Man. *and the* Pariparshvika *hear.* )

*Par.*—Friend, whence this ?

*Man* —*( Looking behind )* Ah ! Hither stalks the enraged Bhimasena, followed by Sahadeva, as if drinking us up all by the glance of his eyes, with the terrible eye-brows, resembling the frightful trident on the arch of Yama, drawn up to the broad skirt of his forehead, not relishing, the reconciliation consequent upon the going of Va'sudeva ( as a mediator ). It is not then proper to face him; so hie we hence. ( *Exeunt* ).

*( End of the Prologue ).*

---

( *Then enters enraged* Bhimasena *followed by* Sahadeva. )

*Bhim.*—Ah wretch, villain of an actor ! Reciter of a meaningless benediction ! ( *Recites the verse,* 'By using the lac-house *&c.*, )

*Saha.*—( *In a conciliatory tone* ) Mercy, mercy, sire. Agreeable, indeed, to us is the utterance of the re-

presentative of Bharata (actor.) 'With the fire of enmity quenched &c.' is true to the meaning. May the sons of Kuru together with their servants, dyeing the earth with the blood (born of their wounds) and their bodies full of wounds, ascend to heaven !—so says he.

Bhim.—( *Tauntingly* ) Really such unholy wishes are by no means to be entertained by you regarding the Kauravas. They are your brothers to be reconciled (by all means) !

Saha.—( *In anger* ) Sir,

If the king (our royal brother), were not to forbid (retaliation), what younger brother of yours would forgive the sons of Dhritarashtra, offending us at every step ?

*Bhim.*—exactly so; hence, from this time, I am separate from you. Look:—

My enmity with the Kurus, which grew up even when I was a mere child, has not my royal brother for its cause, nor Kiritin ( Arjuna ), nor you two. Here I, Bhima, am going to break off the peace, although effected even as I tore off the breast of Jarasandha · do you patch it up, (if you can). (10)

*Saha.*–(*In a conciliatory tone*) Our revered brother will perhaps be pained to see you in anger thus grown excessive.

*Bhim.*—What say you ? Our revered brother will feel distressed ! Does our revered brother even know pain of mind ?

Having seen the daughter of the Panchala-king in that (miserable) plight in the court hall of the king, and us stay long in the forest with the hunters ( for our companions ) and wearing bark garments, and after that sojourn in the palace of Virata concealing our identity, engaged in acts quite unworthy of us, the revered elder does not yet feel aggrieved against the Kurus, but feels pain at my resentment ? (11)

Sahadeva, go back, then, and submit thus to the king in the name of Bhima, inflamed with anger intensified by the length of time.

*Saha.*—What, sir, if you please ?

*Bhim.*—Thus (let it be )—

I admit I shall remain plunged in the sin of ( or with the reading अंभसि in the water of ) the transgression of your order; I also admit I shall earn censure among my younger brothers, keeping within the bounds of duty; but for one day–and that this–you shall not be an elder brother to me ( as I shall be ) striking down the Kauravas with my mace, red with blood, brandished in anger, nor shall I be obedient to you,(12)

*(Stalks about haughtily).*

*Saha.*—*( Following him–to himself )* Ah, my honoured brother has entered the (precincts of) the palace of Panchali. Well, I shall just stay here, then.

*(Stands there)*

*Bhim.*–*(Coming back and looking about)* Sahadeva, go and follow your revered brother. I will, in the meantime, enter the magazine of arms and have weapons for my helpmate.

*Saha.*–Oh Arya, this is not the armory. This is the quadrangular palace of Panchali.

*Bhima*–*(Reflecting)* In sooth ! Is it not the armory but the palace of Panchali ? *(Smiling a little)* I should take leave of Pa'nchali also. *( Lovingly takes Sahadeva by the hand)* Come, dear child; even you can see how our worthy brother, desirous of effecting reconcilation with the Kurus, pains us.

*(Both show that they enter.)*

*Bhim.*–*(sits on the ground in anger.)*

*Saha.*—*( In great perplexity )* Honoured brother, here is a seat spread out; sitting on it, may you await the return of Krishna'.

*Bhima.*–*(Sitting)* Child, by your words *Krishna'-gamanam*, I am put in mind of it, on what terms has the divine Krishna been sent to effect a reconciliation with Suyodhana (by my revered brother) ?

*Saha.*—My honoured brother, with ( the proposal that he should give us ) five villages.

*Bhim:*—*( Closing his ears )* Alas ! Such loss of dignity even in the case of his Majesty, Aja'tashatru

( no one's enemy ) ! To tell you the truth, my heart quakes at it. *( Turning round and sitting )* This, O child, I have neither heard nor have you told !

That exalted and fierce martial spirit ( mettle ) which was in this Lord of men, even, that he has verily lost, when gambling with dice on that occasion. (13)

*( Behind the curtains. )*

Take courage, take courage, O queen—

*Saha*—*( Looking at the curtain, to himself )* How now ! It is Ya'jnaseni, with her eyes covered with a screen of tears gathering ever and anon, that is approaching A'rya. It will be fuel added to the fire. (14)

This Krishna' here, acting like the rainy season, will, indeed, intensify, the flash ( of valour ), like that of lightning, which has been concentrated to-day in my elder brother, enraged.

[ *Then enter as described,* Draupadi *and Cheti;* Draupadi *heaves a sigh, with tears in her ey*

*Che*:—Take courage, take courage, O queen; the youthful Bhimasena, who has enmity for the Kauravas ever ( fixed ), will remove ( the cause of your ) chagrin.

*Drau*:—O Buddhimatika', it will be so, if he will go against the great king.

*Che*:—*( Looking )* Here is the Kumara. May your Majesty approach him.

*Drau*:—Let us enter. *( Both walk on. )*

*Che*:—*( Approaching )* All hail to Kuma'ra [ Bhimasena ] !

*Bhim*:—*( Not hearing repeats*—That exalted &c. )

*Che*:—*( Turning about )* O Queen, the prince appears to be all anger.

*Drau*:—Maid, if it is so–even this disregard ( of me ), as it is, comforts me. So sitting here, I will hear the plans of my lord. *( Both do so. )*

*Bhim*:—*( Addressing* Sahadeva ) What ! Reconciliation by ( accepting ) five villages !

Shall I not grind the Kauravas to dust in battle through anger ? Shall I not quaff the blood from off the breast of Duss'ashana ? Shall I not pound the thigh of Suyodhana with my mace ? Let *your* king effect a reconciliation on the terms ( proposed ). (15)

*Drau*:—( *With joy, to herself* ) My lord, unheard of before are, indeed, such words from your lips. So do repeat them once more.

*Bhim*:—( *Not hearing repeats the verse–Shall I not grind etc.* )

*Saha*:—Dear brother, why have you taken this message of the great king, not in its true import ( lit. as if it were incapable of a proper interpretation ) ?

*Bhim*:—What is the (real) explanation ?

*Saha*:—Revered one, so is the message of the king-

*Bhim*:—To whom ?

*Saha*:—To Suyodhana.

*Bhim*:—What is it ?

*Saha*:—Give us these four villages–Indraprastha Vrikaprastha, Jayanta, Varanavata and any fifth. (16)

*Bhim*:—What then ?

*Saha*:—By him, thus asking for the four villages by their specific names, and not mentioning the fifth, I think an emphatic reference has been made to the places of our calamities, *viz.* the poisoned food, lac-house-fire, the gambling bout and others.

*Bhim*:—( *In anger* ) What will happen ( what object will be served ) when this is done ?

*Saha*:—By this course being adopted there will be shown to the world, in the first place, a heart afraid of ( shrinking from ) the destruction of our own family, and in the second, the desire not to come to terms of the Lord of Kurus proved.

*Bhim*:—All this is meaningless. When the destruction of the Kuru race was solemnly undertaken by all of us when going to the forest from here, the desire of not coming to terms on the part of the Kuru king was

there and then proved. Even in the world is the destruction of the race of Dhrtara′stra such as will bring shame on you ? Moreover, you fool,

The destruction of the race of your enemies through anger makes you blush in the world; while the pulling of your wife's hair in an open meeting does not make you blush ! (17)

*Drau.*—( *Aside* ) These are not ashamed; you at least do not forget.

*Bhim.*—(*Remembering*) Child, why does Pa′ncha′li delay ?

*Saha.*—A long time, indeed, has passed since her ladyship, came here; but though arrived here, she was not noticed by you, prince, being in the grip of the excitement of anger.

*Bhim.*—(*Having seen her, with courtesy*) You, my lady, though present, were not noticed by us whose ire was stirred up. So please take no offence.

*Drau.*—My lord, my ire is ( aroused ) only when you are indifferent, not when you are in anger.

*Bhim.*—If so, consider yourself as one whose insult is avenged. (*Taking her by the hand and seating her by his side, and looking at her face.*) But again, why do I find your ladyship dejected in appearance ?

*Drau.*—My Lord, what cause for dejection can there be while you are here by me ?

*Bhim.*—Why do you not tell it ? (*Looking at the hair*) Or what need of telling it !

Since the sons of Pa′ndu are alive, and not gone on a distant journey too, the daughter of the lord of Pa′ncha′las is in this plight ! (18)

*Drau.*—O Buddhimatika′, tell my lord, who else is sorry at ( feels for ) insults given to me.

*Cheti.*—What the Queen orders. ( *Approaching* Bhima *and folding her hands* ) May the Prince hear—There has been ( a fresh ) cause, and that too more serious than this, for the queen to be angry to-day.

*Bhim.*—what say you, worse still than this ? Tell it aye, tell it.

Who is this that wants to act the part (courts the fate) of a locust in this (*i. e.* myself acting as) conflagration of (for burning) the Vams'a (bamboos, family) of the Kauravas, by touching this Krishna' with her braid hanging loose, as by touching the black line of smoke? (19)

*Cheti*:—May your honour hear–To-day the Queen, in company of your mother and surrounded by her fellow–wives, with Subhadra', the chief of them, had gone to bow down before the feet of the revered Ga'ndha'ri.

*Bhim*:—It is proper; the elderly persons deserve indeed, to be bowed down to. Proceed.

*Cheti*:—Then while returning, she was seen by Bha'numati.

*Bhim*:—(*In anger*) What, seen by the wife of my foe! Ah! A ground of resentment for the queen. What next?

*Cheti*:—Then, she looked at the queen and with her eyes fixed on the faces of her friends should a little with an air of pride and said—

*Bhim*:—She not only looked at her but addressed her too! O, Oh, What can I do?—Then, then.

*Cheti*:—O Ya'jnaseni, we hear that five villages are begged for. Why then are not thy tresses tied up even now?

*Bhim*:—Sahadeva, did you hear?

*Sah*:—O my honoured brother, what can be said here? She is after all the wife of Duryodhana. Lo!

The minds of women, through association, become like those of their husbands. A creeper clinging to a poisonous tree, though sweet (by itself) causes fainting. (20)

*Bhim*—What then was said by the Queen?

*Cheti*—Your honour, had she been without a retinue, she would have deigned to reply.

*Bhim*—What then was said by you?

*Cheti*—This was said by me:—Oh Bha'numati! While your tresses are unloosened, how can those of

our Queen be tied up ?

*Bhim.*—(*With satisfaction*) Well done Bhudhimatika', well done. That has been said which was proper for our retinue. (*Gives his ornaments to* Budhimatika'). O you, honoured daughter of the Lord of Pa'ncha'las, hear me—Before long—

O Queen, this Bhima shall tie up your hair with his hands red with the greasy clotted and thick blood of Suyodhana, whose pair of thighs will be mangled by the blow of my terrible mace, whirled round by my throbbing arms. (21)

*Drau*—What is impossible of performance to my lord when enraged? May your brothers favour (uphold) this resolve !

*Sah.*—This is accepted by us.

(*A great tumult behind the curtains; all listen with surprise.*)

*Bhim.*—By whom is this drum being beaten, the sound of which is as deep as the sound of Mandara mountain, spinning in the vacuum, excavated by the splashing up of the water of the sea, agitated by the churning as terrible as the clash of roaring assemblages of clouds colliding against one another at deluge-time in the midst of the fierce sound known as Kona'gha'ta, (or, the sticks strike against it *i. e.* the drum), the harbinger of the (enkindled) wrath of Draupadi, the portentous wind foreboding the destruction of the Kuru race and like a friend to (resembling) the echo of my loud war cry ? (22)

(*Entering as one dazed.*)

*Cham.*—Your honour, here is *revered* Va'sudeva—

(*All rise, with their hands folded.*)

*Bhim.*—(*In great confusion*) Where is the Divine one ?

*Cham:*—Attempted to be seized by Suyodhana who was angry at his partiality for the side of the Pa'ndavas. (*All show confusion*).

*Bhim.*—What, bound ?

*Kum*—No, no. He was attempted to be bound.

*Bhim.*--What was done by the Lord ?

*Cham.*—Then he, the magnanimons one, having left (in anger) the family of Kurus fainting by the flash of refulgence of the Universal form which he displayed, came to our camping ground; he desires to see your honour without delay.

*Bhim.*—(*With a tone of ridicule*) What ! Does the evilsouled Suyodhana hope to bind the great lord ? (*Casting his eyes upto heaven*) O you of wicked soul ! a bane to the family of Kurus, when you have in this manner overstepped the limits of propriety, the wrath of the Pa'ndavas will be merely the seeming means of the destruction of your race.

*Saha.*—Dear brother, does not that evil-souled Suyodhana know even the divine Va'sudeva as to his true nature ?

*Bhim* --Child, silly, indeed, is he, of a wicked-soul. How can he know him ?

How is he blinded by his infatuation, to know the primeval God--whom, the indescribable, existing beyond (the province of) light and darkness, those, who delight in themselves (with themselves) with the mind fixed upon Sama'dhi (meditation) wherein there is no difference of the seer and the seen, whose ties of ignorance are cut off, by the exuberance of knowledge and who abide only in *Sattva* see ? (23)

Venerable Jayandhara, what does my revered brother intend to do now ?

*Chan.*—The prince can find out what the great king is doing by going there in person, (*Exit.*)

(*Behind the curtains, after the uproar.*)

Oh you, Drupada, Vrishni, Andhaka, Sahadeva and others, the commanders of our Akshauhinis (battalions), and you the leading warriors of the Kuru forces, listen all--

This flame of the wrath of Yudhisthira spreads wildly in the great forest of the Kuru race-that flame, which was (until now) kept in check with efforts by him whose mind was afraid of breaking the vow of

truthfulness and which was desired to be forgotten even by him, being given to forgiveness and desirous of peace to the family--that flame again—which was generated on the sacrificial chip of wood in the form of gambling by the draggings of the hair and the garments of the Princess (Panchali ). (24)

BHI —( *Listening with joy* ) May the fire of the wrath of my venerable brother spread on and on with its course unchecked !

DRAU.--My lord, why is it that this martial drum, (sounding) as loud and deep as the roar of clouds of the deluge-time, is beaten again and again ?

BHI--My Queen, what else ? There is begun a sacrifice.

DRAU.—(*With surprise*) What sacrifice, my lord ?

BHI —A war sacrifice; thus--

We four (brothers) are the officiating priests; that all powerful Hari is the general director of the ritual; the lord of men (Dharma), duly initiated for (the performance of) the war-sacrifice, is the sacrificer; the wife under a vow (is his partner); those born in the family of Kuru are the beasts ( to be offered as victims); the removing of the pain of insult to a wife is the fruit; and this drum of victory is pealing forth loudly to invite the Kshatriyas (to the ceremony.) (25)

SAH.--Let us go, dear brother, to perform deeds worthy (expected) of our valour, now thus permitted by our eldest brother.

BHI.—Child, here are we ever ready to obey the order of the venerable sire. (*Getting up*) My Queen, here we go to work destruction on the Kuru race.

DRAU.—(*Suppressing tears*) May auspicies attend you–those auspices which attended Hari, ready to do battle with the demons.

BOTH.—Accepted is this utterance of auspicies.

DRAU.—One thing more; having returned from the battle-field you should comfort me again.

BHI —Surely, O daughter of ths Panchala king what is the use of holding forth a vain assurance even now ?

